॥ श्रीः ॥

हरिदास संस्कृत ग्रन्थमाला
४३

म० म० नागेशभट्टप्रणीता

# परमलघुमञ्जूषा

सटिप्पण 'तत्त्वप्रकाशिका' संस्कृत-हिन्दीव्याख्योपेता

टिप्पणीकारः
म० म० श्रीनित्यानन्दपन्तपर्वतीयः

व्याख्याकारः
पं० अलखदेवशर्मा, व्याकरण-साहित्याचार्यः
( विहारसंस्कृतमहाविद्यालयप्राचार्यः )

चौखम्बा अमरभारती प्रकाशन
पत्रमञ्जूषा–संख्या ११३८
वाराणसी–२२१००१ ( भारत )

HARIDAS SANSKRIT SERIES
43
*****

THE

# PARAMA LAGHU MANJUŚĀ

OF

M. M. NĀGEŚA BHAṬṬA

*WITH NOTES*

*BY*

M. M. NITYĀNANDA PANT PARVATĪYA

*Edited with the Tattvaprakāśikā Commentaries*

*By*

Pt. ALAKHADEVA ŚARMĀ
Prof. Sanskrit College, Bihar

**Chaukhamba Amarabharati Prakashan**
*Oriental Publishers & Foreign Book-Sellers*
Post Box No. 1138
K. 37/130, Gopal Mandir Lane
VARANASI-221 001 ( U. P. ) India

# भूमिका

हेरम्बं किल नत्वा वेवीं स्मृत्वा च भूदेवः।
स्वेष्टलिखेलिमविषयं रचयति भूमिकां स्वयमलखदेवः ॥ १ ॥
श्रद्धालुर्भगवान् कृपालुरसृजद् ब्रह्माणमादौ महान्,
साङ्गं वेदचतुष्टयं किल ततस्तस्माद् उपादिष्टवान्।
निर्माय द्रुहिणोऽपि विश्वमखिलं स्वाभ्यः प्रजाभ्योऽर्थवित्,
तत्तज्जात्यनुकूलकर्मनिकरञ्चोपादिशत् वेदवित् ॥ २ ॥
वेदाङ्गानि तु षड् वै, शिक्षा कल्पस्तथा च्छन्दः।
ज्योतिःशास्त्रं चक्षुर्व्याकरणं तथा निरुक्तञ्च ॥ ३ ॥
तत्र च पादौ च्छन्दो हस्तौ कल्पोऽस्य वेदस्य।
श्रोत्रञ्चास्ति निरुक्तं ज्योतिश्चक्षुस्तु वेदस्य ॥ ४ ॥
घ्राणञ्चास्ति हि शिक्षा व्याकरणं वै मुखञ्चास्य।
सर्वाङ्गान्यधिगत्य विद्वान् वै प्रोच्यते त्वस्य ॥ ५ ॥
शिक्षा तु पाणिनीया या तूच्चारणक्रमं हि बोधयति।
कल्पोऽश्वलायनादिप्रणीत एषोऽपि कल्पयति ॥ ६ ॥
मन्त्राणां कल्पयते सुष्ठु प्रयोगक्रमं कल्पः।
अत एव कथ्यतेऽसौ ग्रन्थो रम्यो हि वै कल्पः ॥ ७ ॥
छन्दयते सर्जयते वृत्तं पद्यात्मकं छन्दः।
अपमृत्युं वारयितुञ्चाच्छयतीति वा च्छन्दः ॥ ८ ॥
'चन्देरादेश्चच्छः' इत्युणादिनिर्मितं छन्दः।
चन्दयते नितरां यत् सुतरां ह्लादयति तच्छन्दः ॥ ९ ॥
"देवा वै मृत्योर्विभ्यतस्त्रयीं विद्यां प्राविशन्। तेच्छन्दोभिरात्मानमाच्छादयन्। यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वम्।"
(छा० ३, १; ४; २)
"छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः।" (१; १; १)

सायणभाष्यानुसारव्युत्पत्तेर्वै सुसम्भवस्त्वेषः ।
पुस्तकपाठविमिश्रणदोषाच्छादनतो विग्रहस्त्वेषः ॥ १० ॥
निश्शेषेणोच्यन्ते वैदिकशब्दा हि येन प्रोक्तन्तत् ।
यास्कप्रणीतमेतच्चाष्टाध्यायात्मकं निरुक्तन्तत् ॥ ११ ॥
सूर्यादिज्योतिराश्रित्य लगधस्य महात्मनः ।
कालज्ञानं हि कुरुते ज्योतिशास्त्रं नृणाञ्च नः ॥ १२ ॥
व्याकरणं हि विशेषेणासमन्तात् करोति शब्दांश्च ।
पाणिन्यादिमहर्षिप्रणीतमेतत् प्रधानञ्च ॥ १३ ॥
विदितमिदं विदुषा वै, यद्व्याकरणस्य मुख्यत्वम् ।
शास्त्रोपकारकत्वञ्चैतन्निश्चप्रचं तत्त्वम् ॥ १४ ॥
इत्थं सर्वेषु शास्त्रेषु मुख्यं व्याकरणं स्मृतम् ।
सर्वेषामेव शास्त्राणामुपकारकमीरितम् ॥ १५ ॥

"ऐन्द्रं चान्द्रं काशकृत्स्नं
कौमारं शाकटायनम् ।
सारस्वतं चापिशलं
शाकलं पाणिनीयकम् ॥"

एषु वै पाणिनीयं समशास्त्रोपकारकञ्चास्ति ।
सर्वव्याकरणतश्च मुख्यन्त्विदमेव खल्वस्ति ॥ १६ ॥
नव्यव्याकरणस्य प्रेयांसो वै विधातारः ।
नागोजिभट्टा एव मञ्जूषायास्तु कर्तारः ॥ १७ ॥

## नागोजिभट्टपरिचयः

नागोजिभट्टश्चासीद् ब्राह्मणवर्गे त्वयं महाराष्ट्रः ।
महामहोपाध्यायः "काल्ले" त्युपनामकस्तु सौराष्ट्रः ॥ १८ ॥
शिवभट्टात् सञ्जातो माता सत्यस्य गर्भिणी या तु ।
पूर्णप्रसवा या च प्रसवात् प्रागुपरता सा तु ॥ १९ ॥
जठरं विदार्य्यं तस्या यत्नान्निष्काशितोऽयन्तु ।
अत एव 'सतीगर्भज' संज्ञाभाग् गण्यतेऽयन्तु ॥ २० ॥

अतितीक्ष्णबुद्धिरासीत् पित्रैव प्रेमवर्धितोऽविद्यः ।
जातोपनयन एष हरिदीक्षितावाप्तप्रचुरविद्यः ॥ २१ ॥
वारणस्यामस्यां निवसन् विद्वान् बभूव सत्प्रज्ञः ।
शास्त्रान्तरेऽपि प्राक् नैपुण्यञ्चाप स प्राज्ञः ॥ २२ ॥
नीरक्षीरविवेके हंस इव प्रतिभया जातः ।
सारासारविवेके विद्वद्वर्ये सुविख्यातः ॥ २३ ॥
"[1]शम्याष्टलञ्" इति सूत्रे षित्त्वे टित्त्वे तु प्रत्ययस्यापि ।
भट्टोजिदीक्षितोऽपि संदिहानः सचिरं विचार्यापि ॥ २४ ॥
तत्राप्येष बुधो हि सूक्ष्मबुद्धया सुनिर्णयं कृतवान् ।
नागोजिभट्ट एव शैषं रूपं वरं धृतवान् ॥ २५ ॥
अवगम्यत एतद् प्रौढमनोरमाशब्दरत्नाभ्याम् ।
द्रष्टव्यं किल तत्र विस्तरभीत्या न वर्णितञ्चाभ्याम् ॥ २६ ॥

इदमैतिह्यं श्रूयते—

जयपुरमहाराजाधिराजेन १७१४ मिते खृष्टाब्देऽश्वमेधयज्ञमहोत्सवप्रसङ्गे नागोजिभट्टोऽयमामन्त्रितोऽपि जयपुरमहाराजस्य मुख्यसार्वभौमत्वाभावेनाश्वमेधेऽनधिकारादनधिकारिकृतेऽश्वमेधयज्ञे गन्तुमनीहमानः स्वीयं वाराणसीक्षेत्रसंन्यासाभिनिवेशं पुरस्कृत्य यज्ञमण्डपं नालमकार्षीत् । एषणापरवशा अन्ये सर्वे च धीरास्तादृशयज्ञमहोत्सवावलोकनसुखमन्वभूवन् । तदनन्तरं नागोजिभट्टविषये मात्सर्याभिनिविष्टचेतसां तेषामयथापूर्वमाचरणेन तद्द्वेष्यतां स्वस्मिन्नुत्प्रेक्षमाणस्तयैव सम्भावितया द्वेष्यतया वाराणसीक्षेत्रनिवासलालसां नैसर्गिकीमप्यधरीकृत्य क्षेत्राद्बहिर्निष्काशितोऽयं नागेशो देशान्तरं जिगमिषुः सपत्नीको दक्षिणोदधितीराभिमुखं प्रस्थितो दूरतरं गतो मार्गे शृङ्गवेरपुरं पूर्वमेव स्वीयेन यशसा समाक्रान्तमाययौ । नागोजिभट्टेन च स्वस्मिन् कञ्चिद्योग्यं कार्यभारमारोप्य तद्विनिमयेनोवरपरिपूरणपरिमितं द्रव्यं याचितस्तत्रत्यो महीपतिरामसिंहो

---

१. शामीलं भस्म, षित्वान्ङीष् । शामीली स्रुक् । टित्वान्ङीबिति माधवः । शम्याष्ट्लञ् इति पाठे माधवमतम् । "ञितश्च तत्प्रत्ययाद्" इति सूत्रभाष्यादपि टिदेव लभ्यत इति शब्दरत्ने । तत्र हि विकारविकारेऽपि विकारत्वमाश्रित्य तत्र सूत्रमब्विधायकं प्रत्याख्यातम् । अन्यथा षित्वान्ङीष् तत्प्रत्याख्याने, आरम्भे तु अदन्तत्वान्ङीषिति फलभेदे प्रत्याख्यानासङ्गतिरिति बोध्यम् ।

देवगृहे तं पूजावसानसमयं यावद्गन्धपुष्पादिपूजासंभारसंरक्षणे नियुज्य तस्मै त्रिंशद्रौप्यकात्मकं मासिकं वेतनं परिकल्प्य नाम्ना परिचितमप्येतन्नामिकेव्यक्तिरित्येवं विशेषतोऽपरिचितमेव तं पुपोष। अयञ्च स्वपाण्डित्यमनाविष्कुर्वन्नेव कतिचिन्मासान् तस्थौ। एकदा च राजगृहे एतद्विहारतो दक्षिणभागस्थे कस्मिंश्चिन्मङ्गलमहोत्सवे विद्वत्संसदि समागतेष्वनेकेषु पण्डितेषु तूष्णीं स्थित्वैव केवलं तत्संवादं श्रोतुकामोऽयं नागोजिभट्टस्तस्यां संसदि यत्र कुत्रचित्स्थितोऽभूत्। विदुषां च मिथः शास्त्रीयचर्चायां प्रचलितायामन्यतमेन केनचिद्विदुषा स्वोक्तिसमर्थनाय "पण्डितललामभूता नागोजिभट्टा एवमूचुः" इत्युक्तम्। अपरेण च केनचिद्विदुषा "नागोजिभट्टानां नायमभिप्रायः" इति कथयता तद्व्युत्थापितम्। स्वकीयस्वरूपगोपने दक्षोऽप्ययं नागोजिभट्टस्तं संवादं शृण्वन्नाभिविनिष्टबुद्धिरनवहितचेताः सहसैव वक्तुं प्रवृत्तः साधकबाधकप्रमाणानि प्रदर्श्यायमेवाभिप्रायः इति सोपपत्तिकं सविस्तरं याथातथ्येनोपपादितवान्। सद्य एव सर्वे विद्वांसो राज्ञा रामसिंहेन सह चकितमनसो बभूवुः। कोऽयमपरो नागोजिभट्ट इत्यपि केचिदुत्प्रेक्षणं चक्रुः।

राज्ञा च तत्सभाध्यक्षेण सविनयं सम्प्रार्थितः स्ववृत्तान्तं यथावृत्तमवर्णयत्। पूजासंभारसंरक्षणनियोगमज्ञानतः कृतमपि स्वापराधत्वेनाकलयन् राजा तं स्वापराधं परिमिमार्जिषुरर्धराज्यप्रदानं तस्मै प्रतिश्रुतवान्। किन्तु "स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" (यो० सू० ३।५१) इति सूत्रोक्तरीत्या सङ्गकरणेऽनिष्टं भावयतस्त्रैलोक्यराज्यमपि तृणायैव मन्यमानस्य नागोजिभट्टस्य चेतसि लेशतोऽपि राजवचो नैव पदमधात्। प्रत्युत तस्मात्पुरान्निर्जिगमिषू राजकृतेन प्रार्थनातिशयेन किञ्चित्कार्यमकृत्वैव पूर्वसङ्कल्पितमेव वेतनं स्वीकृत्य यावज्जीवं तत्र निवासं चेतसा संकल्पितवान्।

नागोजिभट्टसूरिः पण्डितराजाज्जगन्नाथात्।
आसीद् द्वितीयपुरुषः शास्त्रार्थी सोऽद्भुतप्रतिभः॥ २७॥
श्रीहरिदीक्षितशिष्यः श्रीपायगुण्डाह्ववैद्यनाथस्य।
गङ्गारामस्य गुरुश्चासीन्नागोजिभट्टोऽयम्॥ २८॥
खृष्टाष्टादशतकपूर्वार्द्धानन्तरं ज्ञेयः।
नागोजिभट्टसमयश्चेमे तद्विरचितग्रन्थाः॥ २९॥
भाष्यप्रदीपोद्योतोऽथ बृहच्छब्देन्दुशेखरः।
काव्यप्रकाशोद्योतश्च लघुशब्देन्दुशेखरः॥ ३०॥
अशौचनिर्णयश्चाथ परिभाषेन्दुशेखरः।

सांख्यसूत्रीयवृत्तिश्च प्रायश्चित्तेन्दुशेखरः ॥ ३१ ॥
योगसूत्रीयवृत्तिर्दशमान्या रसतरङ्गिणी टीका ।
वेदान्तसूत्रवृत्तिश्चान्या रसमञ्जरी-टीका ॥ ३२ ॥
बृहन्मञ्जूषैका हि लघुमञ्जूषा द्वितीया च ।
परमलघुमञ्जूषा प्रपठ्यते याऽधुना सर्वैः ॥ ३३ ॥
परमार्थसारविवृतिर्ह्यपरं बृहच्छब्दरत्नञ्च ।
लघुशब्दरत्नमन्यद् गुरुनाम्नैतत् द्वयमस्ति प्रत्नञ्च ॥ ३४ ॥
सापिण्ड्यनिर्णयस्त्वेको द्वितीयो वृत्तिसंग्रहः ।
तृतीया सप्तशत्याश्च टीकैवं ग्रन्थसंग्रहः ॥ ३५ ॥
रसगङ्गाधरमर्मप्रकाश एषोऽस्ति बुधगम्यः ।
द्वाविंशतिसंख्याको ग्रन्थो विद्वद्भिरवगम्यः ॥ ३६ ॥
यद्यपि बह्व्यष्टीका लघुमञ्जूषाया हि नवाः सन्ति ।
या अपि बालबटूनां ता उपकाराय नो सन्ति ॥ ३७ ॥
अत्राशुद्धो धीमन् नहि देया वै कृपाकृष्टिः ।
वसुदेवापत्ये मे सत्ये सम्बोधने दृष्टिः ॥ ३८ ॥
दृष्टदेवस्य स्मरणं गुप्तदेवस्य मेऽस्यास्य ।
तत्स्मृतिपूर्वकमेव पद्यविरचनं हि धीरस्य ॥ ३९ ॥
यद्वा 'अन' 'अ' निपातौ द्वावपि निषेधार्थवाचकौ स्तोऽत्र ।
दार्ढ्यं सूचयतस्ता इति विज्ञेयं बुधैश्चात्र ॥ ४० ॥
प्रथमे संस्करणे या काचिच्चेदशुद्धिराशिरीक्ष्येत ।
कृपया च सूचनीयोऽग्रिमसंस्करणे सुशोधयिष्येऽतः ॥ ४१ ॥
क्वापि कदापि स्खलनं प्रमादतो गच्छतां नूनम् ।
किन्तु समेषां विदुषां स्वीयो धर्मः क्षमा नूनम् ॥ ४२ ॥
शुद्धाशुद्धविशेषे निवेद्यते ज्ञो हि खिद्यते चेतः ।
सहसा कृतिभिर्दृष्टिर्नैव देया मुधा चेतः ॥ ४३ ॥
"योऽस्मद्गेहकूपोऽयमिति कौपं पिबेत्पयः ।
त्यक्त्वा गाङ्गं पुरःस्थं तं कोऽनुशास्त्यतिरागिणम् ॥"

एतद्वशिष्टवचनं ध्यात्वा व्याख्यामिमामस्याः ।
गृह्णीयुर्यदि बटवो मंस्ये साफल्यमेतस्याः ॥ ४४ ॥
छात्रेभ्यो हि हिताय व्याख्या तत्वप्रकाशिका चैषा ।
चक्रेऽतीव प्रयासैर्हिन्दीभाषाऽर्थदीपिकाप्येषा ॥ ४५ ॥
व्याख्ययं हि मदीया विदुषामपि मोददा चेत्स्यात् ।
साफल्यञ्च मदतिप्रयासस्य नूनं स्यात् ॥ ४६ ॥
मञ्जूषाया अस्याः व्याख्यां विदधतः प्रमादश्चेत् ।
स क्षन्तव्योऽवश्यं विद्वद्वर्यैः प्रसिद्धैश्चेत् ॥ ४७ ॥
हृद्यैः कतिपयमित्रैः कतिपयशिष्यैश्च प्रेर्यमाणोऽयम् ।
छात्रोपकारिटीकां विदधेऽलखदेवशर्माऽयम् ॥ ४८ ॥
क्वाहं मन्दमतिर्ना क्व वा नागेशस्य सत्सारम् ।
दुस्तरमहं तितीर्षुः पारावारं प्लवेनारम् ॥ ४९ ॥
लक्ष्योऽप्यलक्ष्यदेवो विपिनविहारी हि कानने शरणम् ।
गहने नागेशाध्वनि पतितस्यालक्ष्यवर्त्मनः शरणम् ॥ ५० ॥
भवदीयोऽलखदेवः साञ्जलि नूनं निवेदयते ।
व्याख्येयं हि मदीया सर्वैर्हृदयेन संग्राह्या ॥

## मङ्गलाचरणम्

( १ )

हेरम्बं किल साम्यं नत्वा तातं स्वकं स्तौमि।
श्रीमन्तं गुरुवर्यं हरनारायणत्रिपाठिनं नौमि ॥

( २ )

निखिलमहं व्याकरणं यत्सविधेऽधीतवान् नूनम् ।
वाण्या द्वारे वर्यं काश्यामेनं स्ववेहि सदनूनम् ॥

( ३ )

परिभाषेन्दोर्विजयां, यन्निकटेऽधीतवान् धन्यम् ।
महामहोपाध्यायं, वन्दे श्रीजयदेवमिश्रं तम् ॥

( ४ )

काव्याध्ययने नापं, यत्सविधे हि कमप्यवसादञ्च ।
काव्यगुरुं च तमीडे, कविचक्रवर्तिदेवीप्रसादञ्च ॥

( ५ )

शास्त्रविलासं यस्मात्, शिक्षितवान् नागपञ्चम्याम् ।
वन्दे तं हाराण-भट्टाचार्यं वसन्तपञ्चम्याम् ॥

( ६ )

साहाय्येन ययोर्हि, विजयायां विजयमाप्य शास्त्रार्थे ।
प्रावीण्यं परमापं, गुरुशिष्यौ तौ नमामि परमार्थे ॥

( ७ )

जानन्त्वेकं राजनारायणशास्त्रिणं काश्याम् ।
द्वितीयमद्वितीयमपि महादेवशास्त्रिणञ्चास्याम् ॥

( ८ )

ध्वन्यध्वन्यालोकं यत्कृपाऽदाद्द्वयोर्ययोर्मेऽद्य ।
नौमि कृपां किल ताञ्च हरिहरयोर्वर्ययोस्तयोस्सद्यः ॥

# प्रकरणानुक्रमणिका

॥ श्रीः ॥

# परमलघुमञ्जूषा

## 'तत्त्वप्रकाशिका'संस्कृत-हिन्दीव्याख्योपेता

### अथ शक्तिनिरूपणम्

शिवं नत्वा हि नागेशेनानिद्या परमा लघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ १ ॥

अथ तत्रभवान् महामहोपाध्यायो वैयाकरणप्रवरो हि नागेशः प्रारिप्सितस्य ग्रन्थस्यैतस्य परिसमाप्तिकामस्तत्प्रतिबन्धकप्रत्यूहशमनाय ग्रन्थारम्भे स्वेष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षायै निबध्नाति—शिवं नत्वेति । नागेशेन नागोजिभट्टेन, शिवं शेते लीयते विश्वमस्मिन्निति शिवस्तं सृष्टिस्थितिप्रलयकर्तारं सगुणं परमेश्वरं नत्वा-प्रणम्य, अनिन्द्या-दोषरहितत्वेन प्रशंसनीया, परमा-अत्यन्तं, लघुःलघ्वी ( 'वोतो गुणवचनात्' इति ङीपो वैकल्पिकत्वेन साधुः ) एषा-विद्यमाना, वैयाकरणसिद्धान्तमञ्जूषा-वैयाकरणानां ये सिद्धान्तास्तेषां मञ्जूषा-पेटालकापरनाम्नी मञ्जूषा यथा मणिमुक्तादिबहुमूल्यरत्नादिसंरक्षिका तथेयमपि वैयाकरणसिद्धान्तसंरक्षिकेति भावः । वितन्यते-विविधगुणविशिष्टा क्रियते ।

ननु 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरि'ति श्रुतिस्मृतिप्रामाण्येन नागेशस्य स्वनामोच्चारणं सर्वथा विरुद्धमिति चेन्न । तत्र नामपदस्य 'द्वादशेऽह्नि पिता नाम कुर्यात्' इति श्रुतिविहितनामपरत्वात् । उभयपरत्वेऽपि सङ्कल्पादौ पत्रलेखादौ च स्वनामोच्चारणलेखनव्यवहारस्य बाहुल्येन इष्टतया अन्यश्रावणप्रत्यक्षविषयनामोच्चारणस्यैव निषेधस्मृतिविषयत्वात् । स्मृतौ 'न गृह्णीयात्' इत्यत्र ग्रहधातोरुच्चारणार्थकत्वाच्च । कूपखानकन्यायेन चापूर्वपुण्यजनकत्वाच्च ।

'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' ।
सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' ॥

इत्युक्तदिशा अनुबन्धस्य विषय-प्रयोजन-सम्बन्धाऽधिकारिभेदेन चतुर्विधत्वम्। तत्रानुबन्धत्वञ्च शास्त्रादिप्रवृत्तिप्रयोजकज्ञानविषयत्वम् । वैयाकरणसिद्धान्तोऽत्र विषयः । प्रतिपाद्यप्रतिपादकभावसम्बन्धः । तज्जिज्ञासुरधिकारी । अधिकारित्वञ्च उपनीतत्वे सति अधीतकांव्यकोषत्वम्, तेन नैव चाण्डालादेरधिकारः ।

केनचित्—वैयाकरण-सिद्धान्त-ज्ञानस्योद्देश्यत्वेन प्रवृत्युद्देश्यस्यैव विषयत्वरूपानुबन्धौचित्येन वैयाकरणसिद्धान्तज्ञानमेव विषयः । इत्युक्तं तन्नैव शोभनम्, प्रवृत्युद्देश्यस्यैव विषयत्वनियमने प्रमाणाभावात् । शास्त्रप्रतिपाद्यसिद्धान्तस्यैव विषयत्वनियमादित्यलम् ।

ननु कादम्बर्य्यादौ बहुमङ्गलसत्त्वेपि ग्रन्थासमाप्तेरन्वयव्यभिचारदर्शनात्, किरणावल्यादौ च मङ्गलाभावेऽपि ग्रन्थसमाप्तिदर्शने व्यतिरेकव्यभिचारदर्शनाच्च मङ्गलकरणस्थानावश्यकत्वमिति चेन्न । मङ्गलेऽगर्हिताभिष्टसिद्धिदायकत्वेन शिष्टाचारविषयत्वरूपेण हेतुना सफलत्वमनुमाय समुपस्थितग्रन्थसमाप्तिरूपफलेन (मङ्गलस्य सार्थक्यात्) सफलत्वस्य कल्पनीयत्वात् यथा च गर्जनेन मेघोऽनुमीयते तथैव किरणवल्यादौ नास्तिकग्रन्थे समाप्तिरूपकार्येण जन्मान्तरकृतं मङ्गलमनुमीयते । एवं कादम्बर्यादौ मङ्गलस्य विघ्नापेक्षयाऽल्पत्वेन दुर्बलत्वेन वा बहुतरमंगलसत्वेऽपि नैव समाप्तिरित्यनुमीयते ।

हिन्दी—नागेश सृष्टिस्थितिलयकारणीभूत परमेश्वर को नमस्कार करके दोषरहित होने के कारण प्रशंसनीय रत्नादि रखने की पिटारी के समान वैयाकरणों के सिद्धान्त-संरक्षण करने की परमलघुमञ्जूषा बनाते हैं ।

तत्र वर्णपदवाक्यभेदेन स्फोटस्त्रिधा । तत्रापि जातिव्यक्तिभेदेन पुनः षोढा । अखण्डपदस्फोटोऽखण्डवाक्यस्फोटञ्चेति सङ्कलनयाऽष्टौ स्फोटः ।

शाब्दबोधेऽर्थोपस्थितिद्वारा वृत्तिमत्पदस्यैव हेतुत्वेन स्फोटात्मकशब्दस्यैव वृत्तिमत्त्वं नैव ध्वनेरिति विवेचयितुं स्फोटान् निरूपयति नागेशः—तत्रेति । तत्र-विविच्यमाने विषयेषु, स्फोटःस्फुटन्ति अर्था यस्मादिति स्फोटः; 'स्फुट विकसने' इत्यस्माद्धातोः 'अकर्तरि च कारके संज्ञायाम्' इति सूत्रेण अपादाने घञ् प्रत्ययः ।

सोऽयं विकासनार्थः स्फोटः वर्ण-पद-वाक्यभेदेन प्रथमं त्रिधा अर्थात् वर्णस्फोटः पदस्फोटः, वाक्यस्फोट इति त्रयः तत्रापि-त्रिष्वपि, जाति-व्यक्तिभेदेन, पुनः षोढाः; अर्थात्—

१ वर्णजातिस्फोटः ।
२ वर्णव्यक्तिस्फोटः । } इति द्विविधो वर्णस्फोटः ।

३ पदजातिस्फोटः ।
४ पदव्यक्तिस्फोटः । } इति द्विविधः पदस्फोटः ।

५ वाक्यजातिस्फोटः ।
६ वाक्यव्यक्तिस्फोटः । } इति द्विविधो वाक्यस्फोटः ।

७. अखण्डपदस्फोटः ।
८. अखण्ड-वाक्यस्फोटः ।

तत्र वर्णा एव वाचका इति बोधनार्थो वर्णस्फोटः प्रथमः ।
पदमेव वाचकमिति बोधनार्थः पदस्फोटो द्वितीयः ।
वाक्यमेव वाचकमिति बोधनार्थो वाक्यस्फोटस्तृतीयः ।

तत्राखण्डमेव पदं स्फोटोऽस्ति ननु वर्णारब्धमिति बोधनार्थोऽखण्डपदस्फोटः सप्तमः । एवं वर्णैः पदैर्वाऽरब्धं वाक्यं न स्फोटः किन्तु तदन्यदेवेति अखण्ड-वाक्य-स्फोटोऽष्टम इति समवगन्तव्यम् ।

अत्रेदमवधेयम्—अयं हि विकसनार्थः स्फोटशब्दो ब्रह्माभिन्नो ब्रह्मसहोदरो वा । यथा च चतुरशीतिलक्षसंख्यया मिथो विलक्षानां सुर-नर-पशु-कीट-मशकद्रुमादिस्थावर-जङ्गमानां ब्राह्मणो विकास एवं बुभुत्सितानां घट-पदाद्यर्थानामपि शब्दादेव विकासो जायत इति ब्रह्मवदयं स्फोटशब्दोऽस्तीति ।

ननु 'एकं ब्रह्मैवाऽद्वितीयम्' इति परब्रह्मणोऽद्वैतप्रतिपादनात् सर्वथा श्रुत्यादावेकत्वम्, घटपटादीनां शब्दानान्तु किलानन्तत्वं प्रत्यक्षसिद्धमिति कथं स्फोटानां ब्रह्माभेद उच्यत इति नैव भ्रमितव्यम् । यथाऽविद्याकृतो नरत्व-पशुत्वादिना परब्रह्मभेदो व्यवहार्य्यते तथा स्फोटशब्दानामेकत्वेऽपि कत्व-खत्वाद्युपाधिकृतोऽविद्यासहकृतो भेद इति व्यवहारदशायां भेदेन प्रतीतावपि स्फोटानां नैव वास्तविको भेदोऽवगन्तव्यः किन्तु ब्रह्माभिन्न एवेति बोध्यम् । अत्रार्थे मानानि —

'ओमित्येकाक्षरं ब्रह्म' इति भगवद्गीतावचनम् ।
'शब्दे ब्रह्मणि निष्णातः' इति भागवतवचनम् ।
'अक्षरं न क्षरं विद्यात्' इति व्याकरणमहाभाष्यम् ।

एवञ्चार्थप्रकाशकस्यास्य स्फोटस्य मध्यमानादभ्यङ्ग्यत्वेन "मध्यमानादवृत्त्यर्थ-प्रकाशप्रयोजकशक्तिमत्त्वं" स्फोटस्य लक्षणमायाति ।

हिन्दी—शब्दबोध के प्रति अर्थोपस्थिति के द्वारा वृत्तिमत्पद अर्थात् शक्तिमत्पद ही कारण हुआ करता है इस कार्य्यकारण भाव के अनुसार स्फोटात्मक शब्द ही वृत्तिमान् है, ध्वनि नहीं, इस विषय का निर्णय करने के लिए नागेश सर्वप्रथम स्फोट निरूपित करते हैं—

उनमें 'स्फुट विकसने' इस धातु से निष्पन्न स्फोट शब्द वर्ण-पद-वाक्य के भेद से तीन प्रकार के हैं—

१ जिसमें वर्ण ही वाचक हैं वह वर्ण स्फोट है ।
२ पद ही वाचक जिसमें हैं वह पद स्फोट है ।
३ वाक्य ही वाचक जिसमें हैं वह वाक्यस्फोट है ।

इस प्रकार त्रिविध होते हुए भी जाति-व्यक्ति के भेद से फिर भी छः प्रकार के हैं। उनमें से जिसमें अखण्ड ही पद है वर्णारब्ध नहीं वह तो खण्डपदस्फोट है। तथा जिसमें वर्णों से या पदों से आरब्ध वाक्य नहीं है वह अखण्ड वाक्यस्फोट है, इस प्रकार स्फोट आठ प्रकार के हैं।

यह विकाशनार्थक स्फोटात्मक शब्द परब्रह्मपरमेश्वर से अभिन्न है, जिस प्रकार चौरासी लाख योनि में भ्रमण करने वाले प्राणियों का विकास परब्रह्म परमेश्वर से होता है उसी प्रकार घटपटादि पदार्थों का विकास स्फोटात्मक शब्द से होता है इसलिए यह भी ईश्वर तुल्य ही है।

'एकं ब्रह्मैवाऽद्वितीयम्' इत्यादि श्रुतिप्रामाण्य से परब्रह्म एक है, घटपटादि शब्दों का आनन्त्य तो प्रत्यक्षसिद्ध है तो स्फोटात्मक शब्दों का परब्रह्म परमेश्वर से तुलना कैसी ?

यह शंकाभ्रममूलक है—क्योंकि जिस प्रकार अज्ञानवश नरत्व-पशुत्वादि भेद से परब्रह्मपरमेश्वर का भेद भी माना गया है वास्तविक नहीं, उसी प्रकार यद्यपि स्फोट एक है किन्तु अविद्याकृत कत्व-खत्वादि उपाधिवश स्फोट भिन्न प्रतीत होता है, इसलिए ईश्वर की तरह स्फोट भी एक ही है क्योंकि 'ओमित्येकाक्षरं ब्रह्म' यह भगवद्गीता का वचन है।

**तत्र वाक्यस्फोटो मुख्यः, तस्यैव लोकेऽर्थबाधकत्वात्तेनैवार्थसमाप्तश्चेति। तदाह न्यायभाष्यकारः—'पदसमूहो वाक्यमर्थसमाप्तौ' इति। अस्य समर्थमिति शेषः। तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवाद् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान्प्रविभज्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः।**

अथाष्टसु स्फोटेषु कस्य स्फोटस्य प्राधान्यमिति शङ्कां निवारयितुमुपक्रमते—तत्रेति।

तत्रेति। तत्र = अष्टसु स्फोटेषु, वाक्यस्फोट एव मुख्यः = प्रधानः, तस्यैव = वाक्यस्फोटस्यैव, लोकेऽर्थबोधकत्वात् = अर्थात् लोके वाक्यस्फोटेनैवार्थबोधो भवति नैव तद्व्यतिरिक्तैः स्फोटैरिति भावः, तेनैव = वाक्यस्फोटेनैव अर्थस्य समाप्तिः सञ्जायते, एनं विना सम्यगर्थबोधो न उपपद्यते इति भावः। अत्रांशे मानमाह—तदाह न्यायभाष्यकार इति 'पदसमूहो वाक्यमर्थसमाप्तौ' इति न्यायभाष्यकारवचने समर्थं पदं योज्यम् 'अर्थात् अर्थसमाप्तौ पदसमूहो वाक्यं समर्थम् नान्यदित्यर्थः।

अथऽन्येषामपि स्फोटानामावश्यकतां प्रदर्शयितुमुपक्रमते—तत्र प्रतिवाक्यमित्यादिना। अयम्भावः—तत्र वाक्यस्फोटस्य मुख्यत्वेऽपि वाक्ये सङ्केतग्रहासम्भवः

वाक्यप्रकल्पनमपि लघूपायेनाशक्यञ्चेति कल्पनया प्रथमं पदविभागः कर्तव्यः, ततः पदेऽपि प्रकृतिप्रत्ययविभागोऽपि कर्तव्यः, तत्सत्त्वे तत्सत्त्वमन्वयस्तदभावे तदभावो व्यतिरेक इति कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तर्थविभागोऽपि कर्तव्यः, एवमेव आचार्य्याः शास्त्रमात्रविषयं=शास्त्रीयप्रक्रियानिर्वाहकं कल्पयन्ति। 'एक शब्दः सुष्ठु ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति' इति भाष्योक्तेः शास्त्रीयप्रक्रिया-स्मरणपूर्वक एव धर्मोत्पत्त्याऽन्येषां वर्णस्फोटादीनामप्यावश्यकत्वमिति भावः।

हिन्दी—उन आठ स्फोटों में वाक्यस्फोट की प्रधानता इसलिये है कि वाक्य द्वारा ही अर्थ का वोध तथा उसकी पूरी समाप्ति लोगों को होने पाती है अर्थात् वर्ण या पदों से सम्यक् अर्थ का बोध नहीं होने पाता है जब तक वाक्य की योजना पूरी नहीं होती है। किन्तु प्रतिवाक्य में सङ्केतग्रह होना नितरां असम्भव है, तथा वाक्य का अन्वाख्यान ( योजना ) लघु उपाय से नहीं हो सकता है, इसलिये वाक्यों में कल्पना के द्वारा प्रथम पदविभाग करके एवं पदों में भी प्रकृति-प्रत्ययों का विभाग करके, कल्पित अन्वयव्यतिरेक के द्वारा अर्थ विभागकर आचार्य लोगों ने शास्त्र लगने का विषय बतलाया है, क्योंकि वाक्य में शास्त्र लग नहीं सकता इसलिए वर्णस्फोट पदस्फोट की भी आवश्यकता है अर्थात् वर्णस्फोट पदस्फोट के बिना वाक्यस्फोट का अस्तित्व ही नहीं कहा जा सकता इसलिये इन दोनों में अन्वय-व्यतिरेक माना गया है।

तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययस्तत्तदर्थवाचका एवेति तदर्थः। उपसर्गनिपातधात्वादिविभागोऽपि काल्पनिकः। स्थानिनो लादय आदेशास्तिबादयः कल्पिता एव। तत्र ऋषिभिः स्थानिनां कल्पिता अर्थाः कण्ठरवेणैवोक्ताः। आदेशानां तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति-भाष्यात्तेऽर्थाः। एवं च स्थानिनां वाचकत्वमादेशानां वेति विचारो निष्फल एव। कल्पितवाचकत्वस्योभयत्र सत्त्वात्। मुख्यं वाचकत्वं तु कल्पनया बोधितसमुदायरूपे पदे वाक्ये वा, लोकानां तत एवार्थबोधात्।

**उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः।**

इति न्यायेन व्याकरणभेदेन स्थानिभेदेऽपि न क्षतिः देशभेदेन लिपिभेद-वदिति दिक्।

इदानीं वर्णस्फोटस्य लक्षणं तत्सार्थक्यञ्च वक्तुं प्रारभते—तत्र=अष्टसु स्फोटेषु, वर्णस्फोटः, शास्त्रप्रक्रियानिर्वाहकः=सूत्रप्रवृत्तिप्रयोजकः तदर्थवाचकाः=तेषां पदानामर्थवाचकाः। काल्पनिकः=कल्पनाभवः, परमार्थतस्तु स्फोट एवार्थवान् इति भाष्यसिद्धान्तः। लादयः=लट्-लिट् इत्यादयः, स्थानिनः, तिबादयः=तिप्-

तसृझीत्यादयो लादेशाः, कल्पिता एव ननु वास्तविका इत्यर्थः। तत्र= कल्पितेषु ऋषिभिः=पाणिन्यादिभिः, स्थानिनां=लादीनां, कल्पिता अर्थाः, कण्ठरवेणैवोक्ताः, 'लः कर्मणीत्यादिसूत्रैरेव प्रोक्ताः स्वयमिति भावः। आदेशानान्तु=तिबादीनाम्, स्थान्यर्थाभिधानेति=यदर्थबोधने यः समर्थः स तस्य स्थाने आदेशो भवतीति भाष्यार्थः। तेऽर्थाः=स्थान्यर्थाः। अत एव 'तृज्वत् क्रोष्टु'रिति सूत्रेण आह्वानार्थकतुन्नन्तक्रोष्टुशब्दस्य स्थाने तदर्थप्रतिपादकस्तृजन्तक्रोष्टृशब्द एवादेशः सञ्जायत इति 'स्थानेऽन्तरतम' इति सूत्रे भाष्ये स्पष्टम्। स्थानिनां वाचकत्वमादेशानां वेति विचारोऽत्र निष्फलः=निष्प्रयोजनः, आख्यातार्थनिरूपणावसरेऽस्य विचारस्य सुविस्तरं करिष्यमाणत्वादितिभावः। कल्पितवाचकत्वस्य उभयत्र=स्थानिषु आदेशेषु च तुल्यत्वात्= समानत्वात्। कल्पनाया उभयत्र तुल्यत्वेऽपि मुख्यं वाचकत्वन्तु कल्पनाद्वारा बोधितरूपे=बोधितस्वरूपे, पदे=सुप्-तिङन्तरूपे, वाक्ये=सुप्तिङन्तचये एव, तत एव= पदेभ्य एव, वाक्येभ्य एव, लोकानां=सर्वेषाम्, अर्थबोधात्=अर्थानां सम्यगवबोधादिति भावः।

ननु सारस्वते व्याकरणे सि औ जस्, तिप् तस् अन्तीत्यादीनामादेशानामेवोपादानात् कथमादेशानां तुल्यत्वविचार इत्याशङ्कां निवारयति—उपेयप्रतिपत्त्यर्था इत्यादिना। उपेयप्रतिपत्त्यर्थाः=उपायप्रतिपाद्यवस्तुसिद्ध्यर्थाः, उपायाः=प्रयत्नाः, अव्यवस्थिताः= अनिश्चिताः, इति न्यायेन=इति सिद्धान्तेन, व्याकरणभेदेन=बहुविधव्याकरणभेदेन स्थानिभेदेऽपि=स्थानिनां भेदेऽपि, न क्षतिः=न कापि हानिः, यथा एकस्यैवाक्षरस्य देशभेदेन लिपिभेदस्तथा व्याकरणभेदेन स्थानिभेदस्यापि सम्भव इति भावः।

हिन्दी—अब वर्णस्फोट का लक्षण तथा उसकी सार्थकता सिद्ध करने के लिये कहते हैं—तत्रेत्यादिग्रन्थ से। अर्थात् 'शास्त्रप्रवृत्तिप्रयोजकत्वं वर्णस्फोटस्य लक्षणम्' यही वर्णस्फोट का लक्षण है। यदि वर्णस्फोट नहीं माना जाय तो ऋषिप्रणीत सूत्रों का वैयर्थ्य हो जाय इसलिये अन्वयव्यतिरेक के द्वारा वाक्यस्फोट के अतिरिक्त वर्णस्फोट भी आवश्यक हैं। उनमें सूत्र लगने के बाद सूत्रों के द्वारा जो प्रकृति के आगे प्रत्यय आते हैं वे ही प्रकृति-प्रत्यय अर्थ के वाचक होते हैं। उपसर्ग-निपात धातु आदि का विभाग वगैरह सभी काल्पनिक हैं। लट लिट् इत्यादि स्थानी तिप् तस् झि इत्यादि आदेश वगैरह भी काल्पनिक ही हैं। इन विषयों को पाणिनि आदि ऋषियोंने "लः कर्मणि" इत्यादि सूत्रों से स्वयं कहा है। आदेशों का अर्थ तो "स्थान्यर्थाभिधानसमर्थस्यैवादेशता" इस भाष्य के अनुसार जिन अर्थों को बोध कराने में जो आदेश समर्थ होते हैं वे ही आदेश होते हैं इसलिये स्थानियों के जो अर्थ होते हैं वे ही आदेशों के भी होते हैं। कल्पित वाचकत्व स्थानियों में तथा आदेशों में समान रहने के कारण वाचकत्व स्थानियों का है या आदेशों का? यह विचार करना यहाँ निष्फल है क्योंकि आख्यातार्थ निरूपण के अवसरपर इस

सम्बन्ध में विचार पूर्ण रूपसे करने वाले हैं। किन्तु मुख्य वाचकत्व कल्पनाद्वारा बोधित-स्वरूप पद या वाक्य ही में रहता है। यद्यपि सभी व्याकरणों में स्थानी और आदेश नहीं होते हैं—जैसे सारस्वत व्याकरणों में केवल सि-औ-जस्, तिप् तस् अन्ति प्रत्यय ही आते हैं, किसी स्थान में नहीं तो भी इससे कोई क्षति नहीं, जिस प्रकार देश के भेद से लिपि भेद होता है उसी प्रकार व्याकरणभेद से स्थानिभेद भी हुआ करता है।

तत्र 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति गौतमसूत्रे शब्दश्चाप्तोपदेशरूपः प्रमाणम्। आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान्, रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः।

इदानीं चतुर्षु प्रमाणेषु शब्दानामपि प्रमाणत्वे तल्लक्षणवर्णनपुरस्सरं शाब्दबोधविचारं वक्तुं प्रारभते— तत्र प्रत्यक्षेति। प्रथमं प्रत्यक्ष-प्रमाणं हि अक्षमक्षं प्रति जातमिति विग्रहबलात् इन्द्रियार्थसन्निकर्षषट्कद्वारा चाक्षुषादिप्रत्यक्षात्मकप्रमितिकरणत्वाद् चक्षुरादि इन्द्रियमेव। प्रमितिकरणत्वेन च तस्य प्रत्यक्षप्रमाणत्वात्।

द्वितीयश्चानुमानं प्रमाणम्—तच्चानुमानं ह्यनुमितिकरणमेव। अनुमीयते लिङ्गद्वारा ज्ञाप्यतेऽनेनेत्यनुमानं लिङ्गपरामर्शः। अनुपूर्वकान्मिनोतेः स्त्रियां भावे क्तिनि निष्पन्नस्यानुमितिशब्दस्य अनु प्रत्यक्षादितः पश्चान्मीयते इति करणव्युत्पत्त्याऽनुमानस्य प्रत्यक्षप्रमाणतः पश्चान्निर्देशः कृतो गौतमेनेति बोध्यम्। परामर्शजन्यज्ञानमेवानुमितिर्भवति। स च परामर्शः व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपः। अनुमितौ हि व्याप्तिज्ञानमावश्यकम्। परामर्शात्मकव्यापारवत्वात्। व्यापारवदसाधारणकारणस्यैव करणत्वेनानुमाने ह्यनुमितिः करणम्।

तृतीयञ्चोपमानं प्रमाणम्--उपमानञ्चोपमितिकरणम्। उपमीयते सादृश्येन ज्ञाप्यतेऽनेनेत्युपमानं सादृश्यज्ञानम्। वाच्य-वाचकसम्बन्धज्ञानं ह्युपमितिः। उपमितेः करणञ्च सादृश्यज्ञानमेव बोध्यम्। चतुर्थञ्च शब्दोऽपि प्रमाणम्। शब्द्येते निग्रहानुग्रहौ क्रियेते? अनेनेति शब्दः। शब्द आप्तोपदेशरूपः। आप्तस्य लक्षणं वदति—आप्त इति। अनुभवेन=स्मृतिभिन्नेन स्वकीयज्ञानेन, वस्तुतत्वस्य=पदार्थानां वास्तविकज्ञानस्य कार्त्स्न्येन=सर्वतो भावेन, निश्चयवान्=निश्चितसिद्धान्तवान्, रागादिवशादपि=सांसारिकप्रेमादिवशादपीति भावः। न अन्यथावादो=असत्यवादी, यः स आप्तो जनः, इति चरकसूत्रे पतञ्जलिराहेति शेषः।

हिन्दी—अत्र चार प्रमाणों में एक शब्द को भी प्रमाण गौतम ने माना है इसलिये शब्द का लक्षण तथा शाब्दबोध विचार के सम्बन्ध में कहने के लिये आगे प्रारम्भ करते हैं। गौतम ने चार प्रमाण माने हैं—प्रथम प्रत्यक्षप्रमाण, द्वितीय अनुमानप्रमाण, तृतीय उपमानप्रमाण, चतुर्थ शब्दप्रमाण, उसमें चक्षुरादि इन्द्रिय छः सन्निकर्ष

व्यापार के द्वारा प्रत्यक्षात्मक प्रमिति के कारण हैं इसलिये प्रत्यक्ष प्रमाण है। पक्ष, साध्य, हेतु, व्याप्ति, दृष्टान्त के द्वारा वस्तुज्ञान जिससे हो वह अनुमान प्रमाण है। वाच्य वाचक का सम्बन्ध ज्ञान जिससे हो वह उपमिति है। शिष्टजनों का आदेश ही चतुर्थ शब्द प्रमाण है—जैसा कि चरक में पतञ्जलि ने आप्त का लक्षण कहा है—

'स्वीय अनुभव के द्वारा वस्तुगततत्वों को सब तरह से निश्चय करने वाला लौकिक रागादिवश जो असत्यवादी नहीं हैं वे ही आप्त पुरुष हैं'। आप्तजनों का उपदेश ही शब्द प्रमाण है।

तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। अत एव नागृहीतवृत्तिकस्य शाब्दबोधः। अत एव च[1] 'नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते' इति समर्थसूत्रभाष्यं सङ्गच्छते। गुडादिशब्देन गुडत्वजात्यवच्छिन्नो[2] गुडपदवाच्य इत्येव बोधो जातिप्रकारकः। मधुरत्वं तु 'गुडो मधुर ऐक्षवत्त्वात्' इत्यनुमानरूपमानान्तरगम्यम्।

शब्दादागत इति विग्रहस्वारस्येन शब्दज्ञानकरणक-शाब्दबोधपदस्य शब्दजन्यज्ञानपरत्वाच्छब्दश्रवणमात्रेण शब्दनिष्ठवृत्तिज्ञानविरहेऽपि शाब्दबोधो मा भूतित्येदर्थं गदाधरभट्टाचार्य्यसम्मतं कार्य्यकारणभावं प्रदर्शयति—तद्धर्म्मेति। यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदक उच्यते। एवं यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नो भवति। तथा च कम्बुग्रीववत्वादिलक्षणेषु घटादीनां शब्दानां लक्ष्यता, घटत्वादीनान्तु लक्ष्यतावच्छेदकत्वं समवगन्तव्यम्। एवञ्च तद्धर्मावच्छिन्नेत्यादिग्रन्थस्य तत्पदजन्यतद्धर्म्मावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्पदजन्यतद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानजन्यतद्धर्मावछिन्नोपस्थितिहेतुरित्यर्थः। इत्थं हि कार्य्यकारणभावे निर्दिष्टे घटपदशाब्दबोधे घटशब्दश्रवणमात्रेण घटशब्दनिष्ठवृत्तिज्ञानविरहे पटशाब्दबोधो न जायते। तथा हि घटत्वधर्मावच्छिन्नघटविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वधर्मावच्छिन्ना घटनिरूपिता या वृत्तिस्तद्विशिष्टज्ञानं हेतुः अर्थात् घटपदजन्यघटत्वधर्म्मावच्छिन्ना घटनिष्ठा या प्रकारता तादृशप्रकारताशालिशाब्दबुद्धित्वावच्छेदकावच्छिनं प्रति घटपदजन्यघटत्वधर्म्माऽवच्छिन्ना घटनिरूपिता या वृत्तिस्तद्विशिष्टज्ञानजन्यघटत्वधर्मावच्छिन्नत्वेनोपस्थितिर्हेतुरिति समन्वयः। प्रकारता च ज्ञानीयविशेष्यताविशेषः।

अत्रायं निष्कर्षः—यस्मात्पदात् यद्धर्मप्रकारको बोध इष्यते स बोधस्तत्पदजन्य

---

१. गुड इत्युक्ते मधुरत्वं प्रकारतया नहि गम्यते इत्यन्वयः।

२. इदं शब्दस्य बोधविषयत्वाभिप्रायेणोक्तमिति बोध्यम्।

तद्धर्म्मप्रकारकोपस्थितिमप्यपेक्षते। एवं सा चोपस्थितिस्तद्धर्म्मप्रकारकोद्बुद्धसंस्कारमपेक्षते। तादृशश्च संस्कारः 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति सिद्धान्तात् सम्बन्धिनः पदस्य ज्ञानमपेक्षते। यथा-हस्तिहस्तिपकयोर्मिथोऽपेक्षया कदाचित्सम्बन्धज्ञाने सञ्जाते हस्तिदर्शनेन हस्तिपस्य, हस्तिपदर्शनेन च हस्तिनः स्मरणं जायते। सम्बन्धज्ञानेन जायमानः संस्कारः सम्बन्धिज्ञानेन उद्बुद्धः संस्कारोऽपरसम्बन्धिनं स्मारयतीति निश्चयः। एवं पदपदार्थयोर्वृत्त्याख्यसम्बन्धज्ञाने जाते कतिपयकालानन्तरं शब्दस्य श्रावणप्रत्यक्षेणोद्बुद्धः संस्कारोऽर्थस्मारको भवतीति सारम्। अत एव=इत्थं कार्य्यकारणभावस्वीकारादेव शाब्दबोधे वृत्तिज्ञानस्य कारणत्वादेव वा गुड इत्युक्ते=गुड इत्युच्चारिते, मधुरत्वं प्रकारतया=विशेषणतया, न गम्यते नैव भास्यते, इति समर्थः पदविधिरिति सूत्रोक्तं भाष्यं संगतं भवति।

ननु पदपदार्थयोः सम्बन्धज्ञानमेव शाब्दबोधम्प्रति तदुपस्थितिं प्रति वा हेतुः स्वीक्रियतामिति चेन्न, समवायेन घटशब्दसम्बन्धि गगनमिति सम्बन्धज्ञाने सति घटादिशब्दश्रवणेन आकाशविषयकशाब्दबोधापत्तेः। केवलं शाब्दबोधे वृत्तिज्ञानस्य हेतुत्वस्वीकारे ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वात् कतिपयकालानन्तरं तदानीं वृत्तिज्ञानरूपस्य हेतोरसत्वात् स्मृतिः शब्दज्ञानञ्च नैव जायेयाताम्। अतः शब्दरूपकसम्बन्धिज्ञानेन वृत्तिज्ञानात् तदर्थविषयकः संस्कारोऽपि कल्प्यमानो यदा यदोत्तेज्यते तदा तदा तन्तमर्थं स्मारयति। शाब्दबोधे केवलं तदर्थनिरूपतिवृत्तिज्ञानमात्रस्य हेतुत्वस्वीकारे तु द्रव्यपदादपि द्रव्यपदं द्रव्यत्वावच्छिन्ने शक्तमिति ज्ञाने द्रव्यमात्रस्य भानात् घटत्वप्रकारबोधस्याप्यापत्तेरेतत्सर्व्वं मनसि विचार्य्योच्यते—गुडादिशब्देनेति। एवञ्च स्मृतिशाब्दधीवृत्तिधियां समानधर्म्मप्रकारकत्वनियमेन गुडपदं गुडत्वावच्छिन्ने शक्तमिति शक्तिज्ञाने गुडत्वस्यैव भानात् गुडत्वावच्छिन्न एव शक्तिर्न्नैव मधुरत्वाच्छिन्न इति भावः। ननु गुडे मधुरत्वं कथं भासते इत्यत आह—मधुरत्वन्त्विति। मानान्तरगम्यम्=अनुमानगम्यमित्यर्थः। गुडो मधुरः इक्षुविकारत्वात् यो यो मधुरत्वाभाववान् स इक्षुविकारत्वाभाववान् यथा पिचुमन्दः, तथा चायं तस्मात्तथेति पञ्चावयववाक्यरूपमनुमानस्वरूपम्।

ननु घटपदं घटत्वावच्छिन्ने शक्तमिति शक्तिग्रहकाले वृत्तिज्ञानस्य क्षणिकत्वेन ग्रहीतुरन्यकार्यासक्तत्वात् उपेक्षया त्यागाच्च संस्कारो नोत्पद्येतेति चेन्न। ज्ञानस्य क्षणिकत्वेऽपि आकरे क्षणद्वयावस्थायित्वस्य व्यवस्थित्या वृत्तिविषयकापेक्षाज्ञानस्यैव संस्कारोत्पादकत्वस्वीकारात्।

तथा च प्रकृते—तत्तत्पदजन्यतत्तदर्थस्मृतिं प्रति तत्तत्पदनिष्ठतत्तदर्थनिरूपितवृत्तिविषयकाऽपेक्षाज्ञानजन्यतदर्थविषयकोद्बुद्धसंस्कारः कारणम्' इत्थं कार्य्यकारणभावोऽवसेयः।

हिन्दी—'शब्दादागतः शाब्दः शाब्दश्चासौ बोधः शाब्दबोधः' इस विग्रह के अनुसार शाब्दबोधपद शब्दजन्यज्ञानपरक है इसलिये घटादि शब्दश्रवण मात्र से घटादि शब्दों में रहने वाली वृत्ति अर्थात् शक्ति के ज्ञान नहीं रहने पर भी शाब्दबोध नहीं होने पावे एतदर्थ गदाधरभट्टाचार्य्यसम्मत कार्यकारण भाव नागेश दिखाते हैं 'यद्धर्मावच्छिन्न' इत्यादि ग्रंथ से।

अग्रिम ग्रंथ का सारांश यह है कि—जिस धर्म से युक्त लक्ष्य रहता है वह धर्म लक्ष्यतावच्छेदक कहा जाता है तथा जो धर्म जिसका अन्य धर्मों से अवच्छेदक (निवर्तक) होता है वह उस धर्म से अवच्छिन्न अर्थात् युक्त होता है ऐसी स्थिति में कम्बुग्रीववत्व लक्षण वाला घट लक्ष्य है और जो घट में रहने वाला धर्म घटत्व लक्ष्यतावच्छेदक होता है। क्योंकि घटत्वधर्म घट में रहने वाले धर्म पटत्व का अवच्छेदक है।

इस प्रकार कार्यकारणभाव का अर्थ यह है—घटत्वादि धर्मावच्छिन्न घटादि विषयक शाब्दबोध के प्रति घटत्वादिधर्मावच्छिन्न घटादिनिरूपित जो वृत्ति अर्थात् शक्ति तद्विशिष्ट का ज्ञान ही कारण होता है।

शाब्दबोध में वृत्तिज्ञान कारण होने ही के कारण अगृहीतवृत्तिक का अर्थात् अज्ञातशक्तिक पदार्थ का शाब्दबोध नहीं होता है। और इसीलिए "गुडः ऐसा उच्चारण करने पर मुख में मधुरत्व नहीं मालूम पड़ता है" इस विषय को समर्थ सूत्र में भाष्यकार ने भी दर्शाया है। इसलिये गुडादि शब्द से गुडत्वादि धर्मावच्छिन्न जातिप्रकारक धर्म गुड पदार्थ ही हो सकता है मधुरत्व नहीं। मधुरत्व अर्थात् मीठापन तो अनुमान द्वारा सिद्ध ही है कि गुड मधुर होता है, ईंख के विकार रहने के कारण, जो मधुर पदार्थ नहीं है वह ईंख का विकार नहीं है, जैसे निम्ब तो यह गुड़ इक्षु-विकार ही है (यह उपनय कहाता है क्योंकि हेतु के पक्षधर्मता का प्रतिपादक वचन ही उपनय कहाता है) इसलिये गुड मधुर होता है ( यह निगमन कहाता है अर्थात् पक्ष में साध्य का अबाधितत्वप्रतिपादक वचन ही निगमन अर्थात् संहार कहाता है )।

अब यहाँ सन्देह होता है कि—यदि घटपद घटत्वावच्छिन्न में शक्त है तो शक्तिग्रहकाल में वृत्तिज्ञान को क्षणिक रहने के कारण ग्रहीता यदि किसी अन्य कार्य में आसक्त होकर उपेक्षा करदे तो उसे संस्कार नहीं होना चाहिये किन्तु होता है यह कैसे ?

उत्तर यह है कि—ज्ञान यद्यपि क्षणिक है किन्तु आकर ग्रन्थ में ज्ञान दो क्षणतक रहता है ऐसा सिद्धांत किया गया है, इसलिये वृत्तिविषयक अपेक्षा ज्ञान ही संस्कार का उत्पादक है अतः अन्यमनस्क होने पर भी संस्कार बना रहता है।

विशेष्यविशेषणभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदाद् घटत्व

विशिष्टबोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य–स्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्। अतो नागृहीतवृत्तिकस्य, नापि विस्मृतवृत्तिकस्य, नापि तत्पदमजानतो, नापि घटपदाश्रयत्वेनोपस्थिताकाशस्य, नापि जनकतयोपस्थितचैत्रादेश्च बोधः। संस्कारकल्पिका च वृत्तिस्मृतिरेव[1] शाब्दबुद्धिरेव वेत्यन्यदेतत्।

प्रोक्तकार्य्यकारणभावे पदकृत्यप्रदर्शनपूर्वकं वृत्तिवैशिष्ट्यं तत्फलञ्च प्रदर्शयितुमुपक्रमते—विशेष्यविशेषणभावेति। विशेष्यविशेषणभावव्यत्यासेन=विशेष्यविशेषणव्युत्क्रमेण, गृहीतवृत्तिकस्य=ज्ञातशक्तिकस्य, पुरुषस्य घटपदात् घटत्वविशिष्टो घटबोधो माभूदिति-कार्यकारणभावे तद्धर्मावच्छिन्नेति पदं दत्तम्। इति विशेषणादाने यस्य पुंसो घट एव विशेषणज्ञानं, घटत्वे च विशेष्यज्ञानं जातं तादृशगृहीतवृत्तिकस्य पुंसो घटपदात् घटत्वविशिष्टघटबोधः स्यादिति भावः।

( जिस पुरुष को विशेष्य-विशेषण भाव का ज्ञान उलटा-पलटा हो गया हो अर्थात् घट में विशेषण ज्ञान, घटत्व में विशेष्यज्ञान हो गया हो उस पुरुष के घटत्वविशिष्टघटबोधवारण के लिये 'तद्धर्मावच्छिन्न' यह विशेषण कार्यकारण भाव में दिया गया है। )

वैशिष्ट्यञ्चेति। वैशिष्ट्यञ्च सम्बन्धद्वयेन—स्वविषयकोद्बुद्ध-संस्कारसामानाधिकरण्येन स्वाश्रयपदविषयकत्वेन च। स्वं वृत्तिस्तद्विषयको य उद्बुद्धः संस्कारः तत्सामानाधिकरण्यम्, स्वं वृत्तिः तदाश्रयविषयकत्वम्, वृत्त्याश्रयपदविषयकत्वम्।

प्रथमसम्बन्धस्य फलं दत्तम्-नागृहीतवृत्तिकस्येति। अर्थात् वृत्तिविषयकसंस्काराभावात् अगृहीतवृत्तिकस्य न शाब्दबोध इति भावः।

उद्बुद्धसंस्कारस्य फलमाह—'नापि विस्मृतवृत्तिकस्य' इति विस्मृता वृत्तिर्येन तस्योद्बुद्धसंस्काराभावान्नैव शाब्दबोधो भवतीति भावः।

द्वितीयसम्बन्धस्य फलमाह—"नापि तत्पदमजानत" इति। अर्थात् स्वाश्रयपदविषयतया ज्ञानस्याभावात् तत्पदमजानतः=तद्वाचकपदाज्ञानवतः न शाब्दबोध इति भावः। विषयिता नाम ज्ञानधर्मविशेषः विषयता च विषयधर्मविशेषः। विषयितासम्बन्धेन वस्तुमात्रं ज्ञाने। विषयतासम्बन्धेन च ज्ञानमात्रं वस्तुनि वर्तत एवेति ज्ञेयम्।

तद्धर्म्मावच्छिन्ननिरूपितवृत्त्याश्रयत्वनिवेशस्य फलमाह—'नापि घटपदाश्रयत्वे-

---

१. स्मृतेः शाब्दबुद्धिं प्रति न जनकत्वं किन्तु उद्बुद्धसंस्कारस्यैवेति मतमभिप्रेत्येदम्। स्पष्टं चेदं सङ्क्षेपशारीरके प्रथमाध्याये अन्विताभिधाननिरूपणावसरे इति तत एवावगन्तव्यम्।

नोपस्थिताकाशस्य' इति । एवञ्च शब्दस्याकाशगुणत्वात् घटादिशब्दात् आकाशस्योपस्थितावपि घटादिशब्दे आकाशत्वावच्छिन्ननिरूपितवृत्तेरभावान्नैव शाब्दबोधःमञ्जायत इति भावः ।

उद्‌बुद्धसंस्कारस्यैव फलम्, 'नापि जनकतयोपस्थितचैत्रादेश्च बोध' इति। स्मृतेः शब्दबोधम्प्रति जनकत्वाभावात्, उद्‌बुद्धसंस्कारस्यैव जनकत्वाच्च चैत्रादेर्न बोध इति भावः । ननु संस्कारस्यातीन्द्रियत्वात् तत्सत्त्वे किम्मानमित्यत आह—संस्कारकल्पिका चेति । स्मृतिरूपकार्श्रयेणैव कारणस्य संस्कारस्यानुमानात् । वृत्तिश्चान्तःकरणपरिणतिः । ज्ञानमात्रं प्रति आत्मनःसंयोगस्य करणत्वाद् विषयरूपतया तस्य परिणमनात् । अत्रांशे मानञ्च—मैत्र एतदर्थविषयकापूर्वसंस्कारवान् एतदर्थविषयकोपस्थितमत्त्वात् यन्नैवं तन्नैवमित्यनुमानमेव ।

संस्कारस्य फलनाश्यत्वात् वृत्तिस्मृतौ संस्कारस्य नष्टत्वात् शाब्दबोधानापत्तिरित्यत आह—शाब्दबुद्धिरेव वेति । अन्तिमफलस्यैव संस्कारनाशकत्वमिति भावः।

हिन्दी—ज्ञान में वृत्तिवैशिष्ट्य दो सम्बन्ध से होते हैं—'स्वविषयकोद्‌बुद्धसंस्कार सामानाधिकरण्य—' एक तो जिस पद में वृत्तिज्ञान करना हो उस वृत्तिविषयक संस्कार रहना चाहिये, उसमें भी उद्‌बुद्ध संस्कार हो, वह भी सामानाधिकरण्येन हो, अर्थात् अन्यपदविषयक नहीं हो अर्थात् घटविषयकवृत्तिज्ञान में पटविषयक संस्कार नहीं हो।

दूसरा सम्बन्ध-''स्वाश्रयपदविषयकत्व' है, स्वपदेन वृत्ति का ग्रहण है अर्थात् वृत्त्याश्रयपदविषयक होना चाहिये ।

प्रथम सम्बन्ध में—वृत्तिविषयक संस्कार रहना आवश्यक कहा गया है इसलिये अगृहीतवृत्तिक का शाब्दबोध नहीं होता है ।

इसी सम्बन्ध में—उद्‌बुद्धसंस्कार रहना आवश्यक कहा गया है इसलिये-विस्मृत अर्थात् जो वृत्ति को भूल गया हो, संस्कार उद्‌बुद्ध अर्थात् स्फुरित नहीं है उसका शाब्दबोध नहीं होता है। द्वितीय सम्बन्ध में—वृत्त्याश्रयपदविषयक कहा गया इसलिये जिसमें वृत्तिज्ञान अपेक्षित हो उस पद को जो जानते नहीं हों उसको शाब्दबोध नहीं होता है । तद्धर्मावच्छिन्ननिरूपितवृत्त्याश्रयत्व निवेशका फल यह है कि—

घटादि शब्द से आकाश की उपस्थिति नहीं हो क्योंकि शब्द आकाशगुणक है किन्तु उसमें आकाशत्वावच्छिन्न वृत्ति नहीं है इसलिये आकाशविषयक शाब्दबोध नहीं होता है । जनकतया चैत्रादि का भी बोध नहीं होने पाता है क्योंकि स्मृति शाब्दबोध का जनक नहीं है किन्तु उद्‌बुद्धसंस्कार ।

अब यहाँ यह प्रश्न उठता है कि—संस्कार जब अतीन्द्रिय पदार्थ है तो संस्कार भी पदार्थ है या नहीं । इसमें क्या प्रमाण ?

उत्तर यह है कि—संस्कारजन्य ही ज्ञान स्मृति है, इसलिये स्मृति के आश्रय से ही कारण संस्कार का अनुमान किया जाता है कि संस्कार भी है। किन्तु संस्कार तो फल उत्पन्न होने से नष्ट हो जाता है तो शाब्दबोध किस प्रकार हो सकता है? यह सन्देह ठीक नहीं क्योंकि अन्तिम फल ही संस्कार का नाशक है सब नहीं।

सा च वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च। तत्र शक्तिः कः पदार्थ इति चेत्?

अत्र तार्किकाः–'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारा 'इदं पदमिममर्थं बोधयतु' इत्याकारा वेश्वरेच्छा शक्तिः लाघवात्। सैव सङ्केतः सम्बन्धः॥

शक्तेर्यद्यपि विषयत्वलक्षणः सम्बन्धः पदेऽर्थे बोधे च, तथाऽपि बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः, पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः। यद्यपि प्रथमं शक्तिग्रहो वाक्य एव तथाऽप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदशक्तिग्रह इत्याहुः।

प्रोक्तकार्यकारणभावे वृत्तिज्ञानस्यापेक्षितत्वेन तत्सङ्गतिं प्रदर्शयन् वृत्तिं विभजते—सा चेति। वृत्तेः शक्ति-लक्षणा-व्यञ्जनाभेदेन त्रैविध्ये शक्तिपदार्थजिज्ञासायां तार्किकमतं प्रदर्श्य खण्डयति—अत्रेति। ईश्वरेच्छामेव शक्तिं मन्वानास्तार्किका वदन्ति—अस्मादिति। अस्मादित्यत्र पञ्चम्यर्थो जन्यत्वम् बोधश्च बुध्धातोरर्थः, विषयताश्रयश्च तव्यप्रत्ययार्थः जनकत्वांशे जन्यत्वस्य नित्यसाकांक्षतया जनकत्वस्याक्षेपः। तथा च—'अस्माच्छब्दादयमर्थो बोद्धव्यः' परमेश्वरीयेच्छायाः—'एतत्पदनिष्ठजनकतानिरूपितजन्यतावद्बोधीयविषयताश्रयाभिन्नोऽर्थः' इति परिष्कारः।

अमुमित्यत्र द्वितीयार्थो विषयत्वम्, अदस्शब्देन ह्यर्थस्य परामर्शः, तस्यादस्शब्दार्थस्य अर्थेन सहाभेदान्वयः बोधश्च बुध्धातोरर्थः, णिजर्थो जनकत्वम्, तिबर्थश्चाश्रयः। तथा च 'इदं पदमिममर्थम्बोधयत्विति च' द्वितीयेश्वरीयेच्छायाः 'इदमर्थविषयकबोधनिष्ठजन्यतानिरूपितजनकतावदेतत्पदं भवतु" इति परिष्कारः।

एतदुभयोरीश्वरीयेच्छयोः शक्तित्ववद् द्विविधः शक्तिग्रहः शाब्दबोधः प्रयोजकः, पदविशेष्यकः, अर्थविशेष्यकश्च। तत्र 'एतदर्थविषयकबोधजनकत्वप्रकारकेश्वरेच्छीयविशेष्यतावत् एतत्पदम्' इति पदविशेष्यकः शक्तिग्रहः। 'एतत्पदजन्यबोधीयविषयत्वप्रकारकेश्वरेच्छीयविशेष्यतावान् अयमर्थः' इत्यर्थविशेष्यकः शक्तिग्रहः। तत्र लाघवादीश्वरेच्छामेव शक्तिं तामेव संकेतं सम्बन्धं स्वीकुर्वन्ति तार्किकाः।

ननु ईश्वरीयेच्छाया ऐक्याद् 'घटशब्दात् घटो 'बोद्धव्य' इतीश्वरेच्छायाः पटेऽपि सत्त्वात् घटप्रत्ययः स्यात्, एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायास्तीरेऽपि सत्वात्

शक्त्यैव तीरबोधे लक्षणाया वैयर्थ्यंञ्च स्यादिति चेन्न । घटपदवाच्यत्वव्यवहारस्य पटेऽभावात्, गङ्गापदवाच्यत्वव्यवहारस्य तीरेऽभावाच्च तत्तत्पदजन्यबोधविषतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छायाः शक्तेः स्वीकारात् । तत्र शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः स चेश्वरेच्छारूप एव ।

ननु शक्तेर्विपयत्वलक्षणसम्बन्धस्य पदेऽर्थे बोधे वा स्वीकारे इच्छीयविषयताश्रयत्वं वाचकत्वमिति वाचकलक्षणे घटस्यापि पटवाचकत्वापत्तिरित्यत आह—

शक्तेर्यद्यपीति । अयं भावः—शक्तेः पदेऽर्थे बोधे वा विषयत्वलक्षणसम्बन्धे स्वीकारेऽपि, शक्तिविषयस्य बोधनिष्ठजन्यतानिरूपितजनकतावत्वेन वाचकत्वे, पदजन्यबोधविषयतावत्वेन शक्तिविषयस्य वाच्यत्वे न सम्बन्धादौ वाचकत्वापत्तिरूपोऽतिप्रसङ्गः । तथाच वाचकत्वम्—

'अर्थविषयकबोधनिष्ठजन्यतानिरूपितजनकतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयत्वम् । वाच्यत्वम्—'पदजन्यबोधीयविषयतात्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयत्वम् । अत्रांशे कार्यकारणभावश्चेत्थम् इतरपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबुद्धिं प्रति पदजन्यबोधविषयतात्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितेश्वरीयेच्छीयविशेष्यताग्रहः कारणम् ।

ननु प्रोक्तवाच्यत्व-वाचकत्व-लक्षणे प्रकारतायामाश्रयत्वसंसर्गावच्छिन्नत्वनिवेशः किमर्थं इति चेन्न । पशुपदवाच्यैकदेशलोम्नि पशुभेदान्वयापत्तौ पशुरपशुरिति वाक्यस्यापि प्रामाण्यापत्तेः ।

ननु वाक्य एव शक्तिग्रहे पदजन्यबोधविषयतावत्वेन शक्तिविषयो वाच्य इति पदशक्तिग्रहस्य का चर्चेत्यत आह—यद्यपीति । बालानां वाक्यादेवार्थबोधेन वाक्ये शक्तिग्रहस्य निश्चितत्वेऽपि शास्त्रकारसम्मताभ्याम् आवापोद्वापाभ्याम्-आवापः=पदान्तरप्रक्षेपः, उद्वापः=निष्कासनम्, ताभ्याम्, यथा घटमानय, घटं नय, इत्याद्युदाहरणम् । तत्तत्पदेऽपि शक्तिग्रह इति भावः । इत्याहुः तार्किकाः तार्किकानामिदं मतमिति सारांशः ।

हिन्दी—कार्यकारणघटक वृत्तियाँ तीन हैं—शक्ति, लक्षणा, व्यञ्जना, उनमें शक्तिपदार्थ विवेचन में—तार्किकमत यह है—

'इस शब्द से यह अर्थ जानना' अर्थात् घटपद से शङ्ख के समान ग्रीवावाला घटपदार्थ जानना, यह ईश्वरेच्छा, तथा 'यह पद इस अर्थ को बोध करावे अन्य अर्थ नहीं' इत्यादि ईश्वरेच्छा ही शक्ति मानने में लाघव है, क्योंकि ईश्वरेच्छा एक ही है लौकिक इच्छा का बाहुल्य है और वही शक्ति संकेत सम्बन्ध है ।

किन्तु ईश्वरेच्छा को शक्ति मानने पर 'इच्छीयविषयताश्रयत्वं वाचकत्वम्' यह

वाचक का लक्षण अर्थात् आपन्न हो जाता है तो शक्ति का विषयत्वलक्षण सम्बन्ध तो पद, अर्थ तथा बोध में समान ही है तो घटपद पटवाचक क्यों नहीं ?

इसका उत्तर तार्किक की ओर से यह है कि—बोधनिष्ठजन्यतानिरूपितजनकतावत् शक्तिविषय वाचक है और पदजन्यबोधविषयतावत् शक्तिविषय वाच्य है तो बोधनिष्ठजान्यतानिरूपित शक्ति का जनक ही वाचक कहा जा सकता है, पदजन्यबोधविषय वाली शक्ति तो वाच्य है जैसे----घटत्वप्रकारकघटबोधनिष्ठजन्यतानिरूपित शक्ति का जनक घट ही हो सकता है न कि पटत्वप्रकारकपटबोधनिष्ठजन्यतानिरूपित शक्ति का जनक घट हो सकता है, इसलिये कोई भी अतिप्रसङ्ग दोष नहीं है।

अब संदेह यह होता है कि शक्तिग्रह तो वाच्य ही में होता है पद में नहीं तो पद में शक्तिग्रह किस प्रकार होता है ?

तो उत्तर यह है कि आवाप-उद्वाप के द्वारा पद में शक्तिग्रह होता है जैसे घटमानय' इस वाक्य में आङ के प्रक्षेप से घटानयन अर्थ होता है, आङ् निकाल देने से घट को ले जाना अर्थ होता है उसी प्रकार सर्वप्रथम वाक्य में शक्तिग्रह होता है पश्चात् कोई एक पद हटा लेने से एक पद में भी शक्तिग्रह होने लगता है। यह तार्किकों का मत है।

तन्न। इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात् 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति, द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः' इत्यभियुक्तव्यवहारात्। यथा घटवद् भूतलमित्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठो घटनिरूपितसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकश्च, नात्र तथा घटशब्द इच्छावान् तदर्थो वा इच्छावानिति व्यवहारः।

तस्मात् पदपदार्थयोः[1] सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया। तद्ग्राहकश्चेतरेतराध्यासमूलकं[2] तादात्म्यं, तदेव सम्बन्धः।

---

(१) बोधजनकत्वस्यापि, आश्रयतानियामकत्वाभावान्न सम्बन्धत्वम्। नापि तस्य शक्तित्वम्। प्रयोज्यप्रयोजकव्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्या तस्य ज्ञानमनुमाय ज्ञानस्योपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वाऽसम्बन्धस्य कारणत्वानुपपत्तिज्ञानपूर्वकं कल्प्यमानस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वरूपस्य तद्घटितस्य वा ग्रहीतुमनुचितत्वात्। तस्मात् सम्बन्धान्तरमेव वाच्यवाचकभावं इति लघुमंजूषायां स्पष्टम्।

(२) इतरेतराध्यासो मूलं ज्ञापकं यस्येत्यर्थः। तथाहि----शब्दार्थौ परस्परतादात्म्यवन्तौ इतरेतराध्यासवत्त्वात्, यत्र यत्र इतरेताराध्यासस्तत्र तत्र तादात्म्यं यथा गुण-

उभयनिरूपिततादात्म्यवानुभय इत्यर्थपदयोर्व्यवहारात्। शक्तेरपि कार्यजनकत्वं सम्बन्धस्यैव नियामकत्वात्। दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात्।

इच्छाया इति।। इच्छायाः, = ईश्वरीया या इच्छा तस्याः सम्बन्धिनोः = सम्बन्धिद्वयस्य, आश्रयतानियामकत्वाभावेन = इच्छाविषयो यो बोधस्तदीयविषयता इच्छाश्रयतानियामकत्वाभावेनेत्यर्थः। सम्बन्धत्वासम्भवात् = सम्बन्धत्वस्य असम्भवात्। तत्र च न पदं न वा पदार्थः इच्छाविषयः किन्तु बोध एव। बोधविषयतया इच्छाश्रयताया अपि न सम्भवः। अयं शब्दः अयमर्थो वा इच्छावान् इति प्रतीत्यभावात्।

यश्च सम्बन्धो भवति स सम्बन्धिद्वयाद् भिन्नो द्विष्ठः आश्रयतया विशिष्टबुद्धिनियामकश्च भवति। तद्यथा—घटवद् भूतलमित्यत्र घटभूतलयोः यः संयोगसम्बन्धः स घटसम्बन्धितः भूतलसम्बन्धितश्च भिन्नः द्वयोर्घटभूतलयोर्निष्ठः घटनिरूपितो यः संयोगस्तदाश्रयो भूतलमिति विशिष्टा या बुद्धिर्बोधस्तन्नियामकश्च। तथाऽत्र घटशब्दः घटशब्दार्थो वा इच्छावान् इति व्यवहारो नैव दृश्यते। तथा नात्र सम्बन्धः सम्बन्धिभ्यां भिन्नो द्व्याश्रयः कस्या अपि विशिष्टबुद्धेर्नियामकश्च दृश्यते। इच्छासुखादीनामात्मगुणत्वादचेतात्मनि पदे पदार्थे नितरामसम्भवः। न हि लोके ज्ञानवान् सुखवान् वा घट इति प्रतीयते इति सारम्।

इत्थं तार्किकमतं निरस्य स्वमतं प्रदर्शयति—तस्मादित्यादिना। तस्मात् = अत एव कारणात्, पदपदार्थयोः। सम्बन्धान्तरमेव = तार्किकसम्मतेच्छादिसम्बन्धभिन्नमेव, शक्तिः प्रसिद्धैवेति सारम्।

एष विषयो लघुमञ्जूषायां सुस्पष्टमुक्तः—'बोधजनकत्वस्यापि आश्रयतानियामकत्वाभावान्न सम्बन्धत्वम्। नापि तस्य शक्तित्वम्। प्रयोज्यप्रयोजक व्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्या तस्य ज्ञानमनुमाय ज्ञानस्योपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वाऽसम्बन्धस्य कारणत्वानुपपत्तिज्ञानपूर्वकं कल्प्यमानस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वरूपस्य तद्घटितस्य वा ग्रहीतुमनुचितत्वात्। तस्मात् सम्बन्धान्तरमेव वाच्यवाचकभाव इति लघुमञ्जूषायामपि स्पष्टमेवोक्तम्।

वाच्यवाचकभावाख्यशक्तौ ज्ञापकं दर्शयति—तद्ग्राहकञ्चेति। तस्याः शक्तेः ग्राहकं बोधकम्, इतरेतराध्यासमूलकम्—इतरेतराध्यासो मूलं ज्ञापकं यस्य तत् तादात्म्यम्। अत्रांशेऽनुमानस्वरूपमित्थम् - 'शब्दार्थौ परस्परतादात्म्यवन्तौ इतरेतराध्यासवत्वात्, यत्र यत्रेतराध्यासस्तत्र तत्र तादात्म्यम् यथा गुणगुणिनोः। यत्र न तादात्म्यं तत्र न

---

गुणिनोः। यत्र न तादात्म्यं न तत्र इतरेतराध्यासः यथा घटपटयोः। गुणगुणिनोश्च इतरेतराध्यासो नीलो घट इत्यादौ प्रत्यक्षादिप्रतीतो दृष्टः।

इतरेतराध्यासः यथा घटपटयोः।' अध्यासश्च अन्यस्मिन्नन्यधर्माभासस्तन्मूलकमेव तादात्म्यम् नतु वास्तवमिति तात्पर्यम्। अर्थात् अध्यासो भ्रमः।

नीलो घट इत्यादौ गुणगुणिनोश्चेतरेतराध्यासः। शब्दार्थयोरितरेतराध्यासोऽपि 'शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः' पातञ्जलसूत्रे 'गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम्' इत्यनुभवप्रदर्शनेन स्पष्टीकृतः पतञ्जलिना। अतः शब्दार्थयोस्तादात्म्यसम्बन्धः सर्वथा प्रसिद्धः। 'रूपवान् घटः जातिमान् पट' इत्यादावपि आश्रयताबुद्धिनियामकत्वात् तादात्म्यस्य च सम्बन्धत्वम्।

नैयायिकश्चेदमेव तादात्म्यं भेदाभेदघटितं समवायशब्देन व्यवह्रियते, किन्तु सोऽनवस्थापत्त्यादिदूषितो मन्यते वैयाकरणैः।

'राहोःशिर' इत्यत्र केवलाभेदस्य न सम्बन्धत्वम्। औपाधिकभेदेन षष्ठ्युपपादनपरभाष्यप्रामाण्यात्। किन्तु भेदाभेदघटितं तादात्म्यमेव सम्बन्धः। अन्यथा उपाधीभूतशिरश्चैतन्यसमूहस्यापि राहुपदार्थत्वे तत्र षष्ठ्युपपादनमसङ्गतमेव स्यात्। अतो भेदाभेदघटितो यस्तादात्म्यसम्बद्धः स निर्दुष्ट एवेति सर्वं निरवद्यम्। उभयनिरूपितेति—उभयनिरूपिततादात्म्येवानुभय इति अर्थपदयोर्व्यवहारदर्शनात् तादात्म्यसम्बन्धः सर्वैः स्वीकर्तव्य इति तात्पर्यम्।

ननु बोध्यबोधकनियामकस्यैव सम्बन्धत्वे शक्तेः कथं सम्बन्धत्वमित्यत आह—शक्तेरपि। शक्तेरपि, कार्यंजनकत्वे सम्बन्धस्यैव=तादात्म्यसम्बन्धस्यैव नियामकत्वात्=निश्चायकत्वात्। अर्थात् शक्तेरपि सम्बन्ध एव कार्यंजनकत्वे नियामक इति भावः।

हिन्दी—तार्किकमत दिखाने के बाद अब खण्डन करते हैं—तत्र इत्यादि ग्रंथ से—खण्डन ग्रंथ का तात्पर्य यह है कि—इच्छा सम्बन्ध हो नहीं सकता क्योंकि सम्वन्ध दो सम्वन्धी से भिन्न हुआ करता है और दो में रहकर दोनों के आश्रय से विशिष्ट बुद्धि का नियामक होता है। जैसे "घटवत् भूतलम्" यहाँ पर घट और भूतल का जो संयोग सम्बन्ध है वह घट और भूतल से भिन्न है और दोनों में रहकर "घटनिरूपितसंयोगाश्रयो भूतलम्" इस विशिष्टबुद्धि का नियामक है।

किन्तु यहाँ प्रकृत में घट इच्छा वाला है या घटशब्दार्थ इच्छा वाला है ऐसा व्यवहार नहीं होता है, क्योंकि इच्छा आत्मा का गुण है, पदपदार्थ, तथा बोध तो अचेतन पदार्थ हैं, इनका गुण किस प्रकार इच्छा हो सकती है और वह सम्बन्ध भी किस प्रकार किसी का हो सकता है। इसलिये ईश्वरेच्छा सम्बन्ध से अतिरिक्त

वाच्य-वाचक भाव ही शक्ति मानना आवश्यक है क्योंकि शब्द में वाचकत्व धर्म तथा अर्थ में वाच्यत्व धर्म सबों के मत से प्रसिद्ध है।

उस शक्ति का ग्राहक तादात्म्य सम्बन्ध है और उसका ज्ञापक इतरेतराध्यास है। इतरेतराध्यास परस्पराध्यास को कहते हैं। दूसरे में दूसरे धर्म के आभास को अध्यास कहते हैं। अर्थात् भ्रम को अध्यास कहते हैं। तन्मूलक ही तादात्म्य सम्बन्ध है। जिसको अभेद सम्बन्ध भी कहते हैं। वह तादात्म्य सम्बन्ध भेदाभेद-घटित होता है। क्योंकि 'राहोः शिरः' में भेदाभेदघटित ही तादात्म्य सम्बन्ध लेकर भाष्यकार ने षष्ठी का उपपादन किया है। अन्यथा भाष्योक्त षष्ठ्युपपादन ही असङ्गत हो जायेगा। अब यहाँ यह प्रश्न उठता है कि बोध्य-बोधक नियामक ही जब सम्बन्ध होता है तो शक्ति का सम्बन्ध किस प्रकार?

उत्तर यह है कि–जिस प्रकार दीपादिगत प्रकाशकत्व शक्ति रहने पर भी आलोक विषयक सम्बन्ध रहने ही पर वस्तु का प्रकाशक होता है उसी प्रकार पदगत वाचकत्व शक्ति रहने पर भी तादात्म्य सम्बन्ध रहने पर ही अर्थ का वाचक हो सकता है अन्यथा नहीं। इसलिये शक्ति कार्यजनक होती हुई भी तादात्म्य सम्बन्ध की नियामिका अवश्य है।

तदुक्तं हरिणा––

**उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।**
**शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ इति**

उपकारः—उपकार्योपकारकयोर्बोधशक्त्योरुपकारस्वभावः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः।

स सम्बन्धः पदे वाक्ये च। तदाह न्यायभाष्यकारः–'समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं, वाक्यलक्षणाया वाचोऽर्थलक्षणम्' इति। अनेन पदेष्विव वाक्येष्वपीश्वरसमय इति स्पष्टमेवोक्तम्। तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इति सङ्क्षेपार्थः।

तदुक्तं पातञ्जलभाष्ये—

सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः[1] स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः' इति।

---

(१) स्मृतौ आत्मा स्वरूपं यस्येत्यर्थः स्मर्यमाण इति यावत्।

स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य (१) शक्तिबोधकत्वं दर्शितम्।

उपकार इति। पद्यमिदं वाक्यपदीये भर्तृहरिणा प्रोक्तम्। यत्र=यस्मिन् शब्दे, उपकारः=उपकार्योपकारकभावः सम्बन्धः, अस्ति तत्र=तस्मिन् शब्दे, धर्मः-शक्त्याख्यो धर्मः, अनुगम्यते=शब्दाद् बोधरूपं कार्यं दृष्ट्वा बोधानुकूलशक्तिरूपोऽर्थनिरू-

---

(१) शक्तिबोधकत्वमिति। अयं भावः--प्रत्यक्षतो दृश्यमाने एव घटे 'कोऽयम्' इति 'किं नामकोऽयम्' इति वा प्रश्ने 'घटोऽयम्' इत्युपदेशेन 'वृद्धिरादैच्' इत्याद्युपदेशेन च घटं घटपदाभिन्नत्वेनादैचश्च वृद्धिपदाभिन्नत्वेनावगच्छति। तदभिन्नत्वं च तदात्मकत्वं तदात्मकत्वग्रहे च तत्र बोधात्मकघटाद्यभिव्यक्तिशक्तिं गृह्णाति, घटादौ मृदाद्यात्मकत्वग्रहे मृदादौ प्रत्यक्षात्मकघटाद्यभिव्यक्तिशक्तिमिव। अथ प्रयोगादिना पदज्ञाने जाते शक्तिविषयकसंस्कारोद्बोधे च शाब्दबोधो जायते। स्वशक्त्या स्वसम्बद्धस्यैवाभिव्यक्तिदर्शनाद् घटादिपदशक्त्या घटादिपदसम्बद्धस्यैव घटादेः शाब्दबोधरूपाभिव्यक्तिर्वाच्या। ततश्च पूर्वोक्तरीत्या तादात्म्यसम्बन्धसिद्धिः।

यत्रापि घटपदं घटस्य वाचकं, प्रगृह्यपदम् उञो वाचकम्, इत्युपदेशः, तत्रापि अभेदसहचरितस्यैव भेदस्य ग्रहो भवति, नतु शुद्धभेदस्य ग्रहः। शुद्धभेदग्रहे शक्तिग्रहानुपपत्तेः पटादिप्रतियोगिकशुद्धभेदवत्त्वेन गृहीते मृदादौ पटादिशक्तिग्रहस्य अजननात् निमित्तेऽतिप्रसङ्गस्तु न शङ्क्यः। उपादाने एव शक्तिस्वीकारात्। स्फोटात्मकशब्दादेव सृष्टिरिति पक्षमाश्रित्य शब्दे अर्थोपादानत्वस्य सुवचत्वात्। बौद्धस्यैव अर्थस्य शाब्दबोधविषयत्वमिति पक्षे सुतरां तत्संभवाच्च। दृष्टिसृष्टिवादे शङ्काया एवानुत्थानाच्च।

एवं च व्यवहारादेरपि शक्त्यनुमानमितरेतराध्यासात्मकसङ्केतानुमानपूर्वकमेव। इतरेतराध्यासात्मकसङ्केतश्च 'योऽर्थः स शब्दः यः शब्दः सोऽर्थः' इत्याकारक ईश्वरकृतः वाच्यवाचकभावरूपां शक्तिं ग्राहयति। तदुक्तं पातञ्जलभाष्ये "तस्य वाचकः प्रणव" इति सूत्रे (पा०१ सू० २७) 'स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः। संकेतस्तु ईश्वरस्य स्थितमेवार्थमभिनयति। यथाऽवस्थितः पितापुत्रयोः सम्बन्धः संकेतेनावद्योत्यते, अयमस्य पिता अयमस्य पुत्र इति। अनेन च ईश्वरसङ्केतस्य शक्तिग्राहकत्वं स्पष्टमेवोक्तम्। उपदेशरूपस्य पूर्वोक्तसंकेतस्य इतरेतराध्यासोल्लेखित्वात्तादात्म्यग्रहपूर्वकशक्तिग्रहजनकत्वं तस्य दर्शितम्। एतेन नैयायिकोक्तम् ईश्वरसंकेतस्य शक्तित्वं निराकृतं वेदितव्यम्। यथा घटशब्दो घटस्य वाचक इत्युपदेशरूपः संकेतः शक्तितो भिन्नः तथैव महर्षीणां साक्षाद् ईश्वरकर्तृकः तादृश उपदेशः शक्तितो भिन्न एव वाच्यः। दृष्टानुसारेणैव कल्पनाया उचितत्वात्। उक्तञ्च नागेशेन 'अयमेतच्छब्दयोऽत्रास्य शक्तिरित्यस्य संकेतस्य शक्तिः पार्थक्येन प्रसिद्धत्वात्' इति। इच्छारूपसंकेतस्य शक्तित्वं तु प्रागेव निरस्तम्। तस्मात् इन्द्रियशक्तिवत् पदशक्तिरपि भिन्नैव तद्ग्राहकं च इतरेतराध्याससिद्धं तदात्म्यमिति सर्वं सुस्थम्।

पितः शब्दनिष्ठः सम्बन्धः अनुमीयते, यथा दाहेन वह्नौ दाहशक्तिरनुमीयते, तत्र "एतस्माच्छब्दादमुष्यैवार्थस्य बोध" इति नियामकस्तु शक्ति-बोधयोरुपकार्योपकारकभावः सम्बन्ध एवेति तात्पर्यम्। एष च सम्बन्धः, शक्तीनामपि, कार्यजनने=कार्योत्पत्तौ, शक्तिः=अर्थादुपकारकः शक्तेरपि सम्बन्धसत्त्व एवं कार्यजनकत्वात्। गुणानामपि, गुणः=द्रव्याश्रितत्वनियामक इत्यर्थः। तत्र उपकार्यः=अर्थः, उपकारकः=शब्दः।

स चेति। स च सम्बन्धः=उपकार्योपकारकभावः सम्बन्धः पदे, वाक्ये च।

अत्रांशे मानमाह—तदाह न्यायभाष्यकार इति। समयज्ञानार्थम्=शक्तिज्ञानार्थम्, पदलक्षणायाः=पदं लक्षणं रूपं यस्याः सा तस्याः, पदस्वरूपाया इत्यर्थः, वाचः=शब्दस्य, अन्वाख्यानम्=प्रकथनम्, व्याकरणम्, वाक्यलक्षणायाः वाक्यस्वरूपायाः, वाचः=शब्दस्य, अर्थलक्षणम्, अर्थबोधकं व्याकरणम्,। अनेन पदेष्विवेति। अनेन=न्यायभाष्यवचनेन, पदेष्विव=पदस्फोटेष्विव, वाक्येष्वपि=वाक्यस्फोटेष्वपि, ईश्वरसमयः=ईश्वरसङ्केतः, इति=इत्यर्थः, स्पष्टमेवोक्तम्=स्फुटमेव प्रतिपादितम्।

तस्मात्=सर्वप्रामाण्यात्, इतरेतराध्यासः=परस्परान्यधर्माभासः, सङ्केतः=शक्तिः, तन्मूलकम्=तज्ज्ञापकम्, तादात्म्यञ्च सम्बन्ध, इति संघातार्थः=समुदायार्थः। तादात्म्यञ्च–तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्।

उक्तार्थे द्वितीयं मानं प्रदर्शयति—तदुक्तं पातञ्जलभाष्य इति। सङ्केतस्तु पदार्थयोः इतरेतराध्यासरूपः परस्परमन्यधर्माभासरूपः, स्मृत्यात्मकः=स्मृतौ आत्मा स्वरूपं यस्य सः स्मर्य्यमाण इत्यर्थः, योऽयं शब्दः, सोऽर्थः स एवार्थः यश्चार्थः स एव शब्दः, अर्थात् शब्दार्थयोरैक्यं, शब्देऽर्थस्याभासः, अर्थे शब्दस्याभासः, अयमेव इतरेतराध्यासरूपः सङ्केत इति भावः। उक्तञ्च प्राङ्मया अन्यस्मिन् अन्यधर्माभासः अध्यासः, मिथ्याज्ञानं, भ्रमः, विपर्यय इति वा उच्यते। तत्र ज्ञातसंकेतस्यैव शक्तिबोधकत्वबोधनाय स्मृत्यात्मक इति विशेषणम्। शक्तिबोधकत्वम्=शक्तिप्रकाशकत्वम्।

हिन्दी—शक्ति के भी कार्यजनकत्व में सम्बन्ध ही नियामक है इस अंश में हरि कारिका प्रमाण में रखते हैं—

कारिका का तात्पर्य यह है—जिन शब्दों में उपकार्य-उपकारक भाव सम्बन्ध ( उपकार्य–अर्थ–वाच्य, उपकार—शब्द–वाचक ) अर्थात् वाच्यवाचकभाव सम्बन्ध है। उन शब्दों में शब्दबोधरूप कार्य देखकर शक्तिरूप का अनुमान किया जाता है। जिस प्रकार दाहरूप कार्य देखकर अग्नि में दाहानुकूल शक्ति का अनुमान किया जाता है। किन्तु "इस शब्द से इसी अर्थ का बोध होता है" इसका नियामक उक्त सम्बन्ध ही है। और वह सम्बन्ध शक्ति की भी शक्ति है; क्योंकि

सम्बन्ध रहने ही से शक्ति कार्यजनक है, जिस प्रकार आलोक रहने पर ही दीप गत शक्ति वस्तुप्रकाशक होती है। तथा गुणों का भी गुण है अर्थात् द्रव्याश्रितत्व का नियामक है।

इस विषय में न्याय भाष्यकार का वचन प्रमाण है—

"समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्, वाक्यलक्षणाया वाचोऽर्थलक्षणम्।" अर्थात् पदरूप शब्द का तथा वाक्यरूप शब्द का शक्ति और सम्बन्ध का ज्ञानार्थ ही यह व्याकरण है।

पतञ्जलि ने भी कहा है—

"संकेतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः।" अर्थात् पद और अर्थ का संकेत परस्पर आभासरूप है और वह स्मृत्यात्मक है, अज्ञात नहीं है। जो शब्द है वह अर्थ है, जो अर्थ है वह शब्द है, अर्थात् शब्द में अर्थ का आभास है, अर्थ में शब्द का आभास है, इस प्रकार इतरेतराध्यास ही पद और अर्थ में संकेत है। इस भाष्य में भी वाच्य-वाचक भाव सम्बन्ध की चर्चा है। इसलिये इतरेतराध्यासरूप ही संकेत है और तन्मूलक ही तादात्म्य सम्बन्ध है, यह समुदाय का सारांश है। इन प्रमाणों से तार्किकसम्मत ईश्वरेच्छा शक्तिरूप सम्बन्ध सिद्ध नहीं होता किन्तु वाच्य-वाचक भाव सम्बन्ध विशिष्ट ही शक्ति वैयाकरण सम्मत है।

उक्त ईश्वरसङ्केत एव शक्तिरिति नैयायिकमतं न युक्तम्। 'अयमेतच्छक्यः' 'अत्रास्य शक्तिः' इत्यस्य संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्। अत एव न्यायवाचस्पत्ये उक्तम्—'स्वर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेतः' इति।

तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते। शब्दार्थयोस्तादात्म्यादेव 'श्लोकमश्रृणोदथार्थं-श्रृणोतीति अर्थं वदति' इत्यादिव्यवहारः। "ओमित्येकाक्षरं ब्रह्म"

'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः,' "वृद्धिरादैच्" इति शक्ति-ग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च।

तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसम-नियतम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः।

उक्त इति। उक्तः=कथितः पदविशेष्यकः, अर्थविशेष्यकश्चेति द्विविधः, ईश्वर-सङ्केत, एव शक्तिरिति, नैयायिकोक्तम्=नैयायिककथनन्तु न युक्तम्=नोचितम्, अयम्, एतच्छक्यः=एतच्छक्तिलभ्यः संकेतः, अत्र=अस्मिन् अस्य=शब्दस्य,

शक्तिः" इति संकेतस्य=सम्बन्धस्य, शक्तितः, पार्थक्येन=भिन्नतया, प्रसिद्धत्वात्। अत एव=संकेतस्य शक्तितो भिन्नत्वादेव। सर्गादिभुवाम्=आदिसृष्ट्युत्पन्नानाम्. महर्षिदेवतानाम्, ईश्वरेण, साक्षात् स्वयं संकेतः कृतः=प्रकाशितः, तद्व्यवहारात्=तत्सङ्केतव्यवहारात्, अस्मदादीनामपि = मानवानाम्, तत्संकेतः, सुग्रहः = सुबोध इत्यर्थः।

इदमत्रावधेयम्—व्यवहारादेरपि यत्, शक्त्यनुमानं तद्धीतरेतराध्यासात्मकसङ्केतानुमानपूर्वकमेव भवति। ईश्वरकृतः 'योऽर्थः स शब्दः यः शब्दः सोऽर्थः' इत्याकारक इतरेतराध्यासात्मकः कः संकेतः वाच्य-वाचकभावरूपां शक्तिं ग्राहयति। अत एव 'तस्य वाचकः प्रणवः' ( पा० १ सू० २७ ) इति सूत्रे 'स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः' इति पातञ्जलमहाभाष्य उक्तम्।

ईश्वरसंकेतस्तु स्थितमेवार्थमभिनयति—यथा पितापुत्रयोः स्थितः सम्बन्धः उपदेशरूपेण संकेतेनाभिव्यज्यते, अस्यायं पिता, अस्यायं पुत्र इति।

यथा च 'घटशब्दो घटस्य वाचक' इत्युपदेशरूपः संकेतः शक्तितो भिन्नस्तथैव महर्षीणां साक्षादीश्वरकर्तृकस्तादृश उपदेशः शक्तितो भिन्न एव वाच्यः। दृष्टानुसारमेव कल्पनाया औचित्यात्। तस्मादीश्वरसंकेत एव शक्तिरिति नैयायिकोक्तन्नादरणीयं किन्तु इतरेतराध्यासात्मक एव संकेतः शक्तिग्राहको नान्यः। अत एव 'सर्वे सर्वार्थवाचकाः' इति भाष्यात्, सर्वैरर्थैः, सर्वेषां सम्बन्धः स्थित एव, ईश्वरसंकेतस्तु प्रकाशकः। शब्दार्थसम्बन्धस्य नित्यत्वात्। इति हि नागेशसिद्धान्तः।

तस्येति। तस्य तादात्म्यस्य सम्बन्धस्य निरूपकत्वेन विवक्षितः = वक्तुमिष्टः, अर्थः शक्य उच्यते, आश्रयत्वेन विवक्षितः = वक्तुमिष्टः, शब्दः शक्त उच्यते। अर्थात् शक्योऽर्थः, शक्तः शब्द इति तात्पर्यम्।

शब्दार्थयोस्तादात्म्यादेवेति। शब्दमश्रृणोत् इत्यनन्तरम् अथार्थं श्रृणोति, अर्थं वदतीति व्यवहारे शब्दार्थयोस्तादात्म्यास्वीकारे कम्बुग्रीवादिमतो घटपदवाच्यस्यार्थस्य श्रवण-वदनकर्मता नैव सम्भवेत्। न चार्थविशिष्टे शब्दे लक्षणया निर्वाहः। मुख्यवृत्त्यैव निर्वाहसम्भवे गौणवृत्तिकल्पनाया अन्याय्यत्वात्।

शब्दार्थयोस्तादात्म्यादेव 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति भगवद्गीतायामोमिति वर्णब्रह्मणोरभेदप्रतिपादनम्; एवं 'रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्यादावपि। अन्यथा रामेतिद्व्यक्षरेण पिनाकिनो मानभंगासम्भवः।

ओमित्येकाक्षररूपं ब्रह्म व्याहरन् = उच्चारयन्, मामनुस्मरन् मनसा चिन्तयन् देहं शरीरं त्यजन् यः प्रयाति महायात्रां करोति स परमामुत्कृष्टां गतिं याति न पुनरावर्तत इत्यर्थः। एतेनाक्षरब्रह्मणोरैक्यमायातम्।

शब्दार्थयोस्तादात्म्यादेव 'वृद्धिरादैच्' इति सूत्रे संज्ञासंज्ञिवाचकपदयोः समानविभक्तिकत्वेन समानविभक्तिकपदार्थयोरभेदान्वयनियमात् 'वृद्धिपदाभिन्ना आदैच इत्यर्थयोर्बोधः।

तादात्म्यञ्चेति। नन्वेकस्मिन् भेदाभेदयोर्द्वयोरपि विद्यमानत्वेन भेदेऽभेदप्रत्यये विरोध इत्याशङ्कायामाह—तादात्म्यञ्चेति। 'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्व'मिति हि तादात्म्यस्य लक्षणम्। इति भेदाभेदसमनियतम्। यद्यपि भेदाभेदयोः समत्वेन नियतत्वं व्यापकत्वं, तथापि भेदस्यैव वास्तविकत्वम्, अभेदस्य तु अध्यस्तत्वमेव आरोपितत्वमेवेति न तयोर्भेदाभेदयोर्विरोधः किन्तु विरोधाभास इति तात्पर्यम्।

हिन्दी—अब नैयायिकमत का खण्डन इस प्रकार है—ईश्वरसंकेत ही शक्ति है–यह नैयायिकों का सिद्धान्त है—किन्तु यह सर्वथा अयुक्त है कि क्यों 'यह संकेत इस शक्ति से शक्य है' 'इस शब्द में इस अर्थ की शक्ति है' इस प्रकार शक्ति से संकेत पृथक् प्रतीत होता है तो संकेत ही को शक्ति मानना सर्वथा विरुद्ध है।

दूसरी बात यह है कि–इतरेतराध्यासात्मक ही संकेत वाच्य-वाचक रूप शक्ति का ग्राहक होता है। जैसा कि पतञ्जलि ने कहा है–संकेतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः।' यहाँ शब्द में अर्थ का आभास है, अर्थ में शब्द का आभास है इसलिये इतरेतराध्यास ही सङ्केत है और तन्मूलक ही तादात्म्य सम्बन्ध है।

तीसरी बात यह है कि –ईश्वरसंकेत यथास्थित ही अर्थ को उपदेश रूप संकेत से द्योतित करता है जैसे–पिता पुत्र का सम्बन्ध–ईश्वर के उपदेश रूप संकेत से पता चलता है कि 'यह इसका पिता है', 'यह इसका पुत्र है।' तथा 'यह घटशब्द घट का वाचक है।' अनुमित अर्थ का नहीं। इसलिए ईश्वरसंकेत ही शक्ति है यह नैयायिक का कहना सर्वथा असङ्गत है। इस प्रकार इतरेतराध्यास रूप संकेत है और तन्मूलक ही तादात्म्य संबन्ध है यह नागेश का सिद्धान्त है।

यदि शब्द और अर्थ में तादात्म्य सम्बन्ध नहीं माना जाय तो –'शब्दमशृणोत्' 'अथार्थं शृणोति' इत्यादि स्थलों में श्रवण क्रिया का कर्म, तथा 'ओमित्येकाक्षरं ब्रह्म' इसमें वर्ण और ब्रह्म का एकत्व प्रतिपादन असङ्गत हो जायगा। शब्द तथा अर्थ में तादात्म्य सम्बन्ध मानने ही पर 'वृद्धिरादैच्' इस सूत्र का 'वृद्धिपदाभिन्ना आदैचः' यह अर्थ निष्पन्न होता है। अन्यथा एक विभक्ति के पद और अर्थ का अभेदान्वय बोध असंगत हो जायगा।

अब प्रश्न यह है कि जब तादात्म्य सम्बन्ध भेदाभेद समनियत है अर्थात्, भिन्न होने पर भी अभिन्नतया जिसकी प्रतीति नहीं हो वही तादात्म्य सम्बन्ध होता है तो भेद भी है और अभेद भी है यह विरोध है।

उत्तर यह है—कि भेद ही वास्तविक है अभेद तो अध्यस्त है अर्थात् आरोपित आभासमात्र है इसलिए विरोधाभास है।

यत्तु तार्किकाः, शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्य रसास्वादापत्तिः, वह्निशब्दोच्चारणे मुखे दाहापत्तिरित्याहुः। तन्न। भेदाभे स्योपपादितत्वात्।

वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि स्फोटात्मकं प्रसिद्धम्, तयोस्त दात्म्यम्। तत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्वाभावात्। अत ए 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति विकल्पसूत्रं सङ्गच्छते। शब्दज्ञा मात्रेणानुपातो बुद्धावनुपतनशीलो वस्तुशून्यः बाह्यार्थरहितः विशेषेण कल्प इति विकल्पः, बुद्धिपरिकल्पित इति तदर्थः।

शब्दार्थयोस्तादात्म्ये तार्किकमतं प्रदर्श्य खण्डयति—यत्तु तार्किका इति। श स्यार्थस्य चाभेदस्वीकारे मधुरशब्दोच्चारणमात्रमेव मुखे माधुर्यरसस्यास्वादः, व शब्दोच्चारणमात्रमेव मुखे दाहः स्यात् इति तार्किकस्याभिप्रायः।

तन्नेति। भेदाभेदस्योपपादितत्वात्—तादात्म्यलक्षणे तद्भिन्नत्वे सति तदभे प्रतीयमानस्योक्तत्वादिति भावः।

सिद्धान्तपक्षं दर्शयति—वस्तुत इति। वस्तुतः=वास्तविकः, बौद्ध एव=बु परिकल्पित एव अर्थः शक्तः=शक्त्या प्रतिपाद्य इत्यर्थः। पदमपि स्फोटात्मकम् पदस्फोटनाम्ना प्रसिद्धम्। तयोः=शब्दार्थयोः, तादात्म्यम्=अभेदः। तत्र=त बौद्धे=बुद्धिपरिकल्पिते, वह्न्यादावर्थे, दाहादिशक्तिमत्वाभावत्=दाहाद्यनुकूलशक्ति नास्तीति दाहादिकार्यं न जायते इति भावः।

उक्तार्थे प्रमाणं दर्शयति—अत एवेति। अत एव=बौद्धार्थस्वीकारादेव, विक सूत्रस्यायं सारांशः—शक्योऽर्थः बुद्धिसत्तायामेव समाविशति नतु बाह्यसत्ता ततश्च बौद्धपदार्थानङ्गीकारे घट इति कथनेनैव सत्ताया ज्ञाने घटोऽस्तीति प्र गतार्थत्वेऽस्तीति प्रयोगानापत्तिः। घटो नास्तीत्यनापत्तिश्च सत्ताया विरोध बौद्धार्थस्वीकारे तु बुद्धिसत्ता बाह्यसत्तातदभावबोधनाय अस्ति नास्तीति प्रयो सर्वथा सङ्गतिः।

हिन्दी—यहाँ तार्किक का मत यह है—कि यदि शब्द और अर्थ इन दो अभेद माना जाय तो मधुर शब्द के उच्चारण करने में मुख में माधुर्यर आस्वाद क्यों नहीं? एवं वह्नि शब्द के उच्चारण में मुख में दाह क्यों नहीं? इ शब्द और अर्थ इन दोनों में अभेद सम्बन्ध नहीं माना जा सकता है।

उत्तर यह है कि - तादात्म्य अर्थात् अभेदसम्बन्ध वही है कि भिन्न रहने प अभिन्न मालूम हो। इसलिये शब्द से अर्थ भिन्न है किन्तु अभेद सा प्रतीत हो वास्तविक तो भिन्न ही है यह पहले कहा जा चुका है।

यथार्थ में तो बुद्धिपरिकल्पित जो अर्थ है वही शक्य है अर्थात् शक्तिप्र वस्तुत वही है, पद भी स्फोटात्मक प्रसिद्ध ही है, इसलिये उन दोनों में तादात्म

किन्तु बुद्धि परिकल्पित वह्न्यादि अर्थ में दाहाद्यनुकूल शक्ति नहीं है इसलिये दाह आदि नहीं मालूम पड़ता है। वौद्धार्थं मानने पर ही निम्नलिखित विकल्प सूत्र संगत होता है—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'

अर्थात् शब्दज्ञान मात्र से ही बुद्धि में आजाने वाला वाह्यार्थ से रहित बुद्धि-परिकल्पित अर्थ कहाता है।

तात्पर्य यह है कि—शक्तिप्रतिपाद्य अर्थ बुद्धिसत्ता ही में प्रविष्ट होता है, वाह्यसत्ता में नहीं।

यदि वौद्ध पदार्थ नहीं माना जाय 'घटः' ऐसा कहने ही से सत्ता का ज्ञान हो जाय तो 'घटोऽस्ति' यह प्रयोग नहीं होना चाहिये, इसी प्रकार सत्ता का विरोध नहीं होने से 'घटो नास्ति' यह भी प्रयोग नहीं होना चाहिये। वौद्धपदार्थ मानने पर तो बुद्धिसत्ता वाह्यसत्ता से भिन्न है इसलिये 'अस्ति' नास्ति' का प्रयोग सार्थक है।

अत एव—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः॥

इत्यत्र वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेऽपि बुद्धिपरिकल्पितं वन्ध्यासुत-शब्दवाच्यार्थमादायार्थवत्वात्प्रातिपदिकत्वम्। अन्यथाऽर्थवत्वाभावेन प्राति-पदिकत्वाभावात्स्वाद्युत्पत्तिर्न स्यात्।

बौद्धार्थास्वीकारे द्वितीयं दोषमुद्भावयति—अत एवेति। अत एव = बौद्धार्थस्वी-कारादेव। एष वन्ध्यासुत इति एषः = बुद्धिस्थः, वन्ध्यापुत्रः, खपुष्पैः शिरो-भूषणं विधाय, कूर्मक्षीरे स्नानं सम्पाद्य, शशशृङ्गमेव धनुर्विधाय धृतधनुः याति गच्छतीत्यर्थः।

अत्र प्रथमं वन्ध्यायाः पुत्रस्यैवासम्भवत्वेन यानक्रियायामन्वयानुपपत्तिः। तत आकाशे पुष्पाणां नितरामसम्भवत्वेन तद्भूषणधारणासम्भवः, ततः कूर्म्माणां दुग्ध-स्यासम्भवत्वेन तत्र स्नानक्रियाया अप्यसम्भवः, ततः शशशृङ्गस्यैवाभावेन धनुर्धारणम-सम्भवमिति बाह्यार्थशून्यत्वे कथं प्रातिपदिकत्वं भवेदिति बुद्धिपरिकल्पितमेवार्थमादा-यार्थवत्वात् प्रातिपदिकत्वे स्वाद्युत्पत्तिसिद्धिरन्यथाऽर्थवत्वाभावेन प्रातिपदिकत्वाभावा-त्तदनुत्पत्तौ वन्ध्यासुतादीनां प्रयोग एव न स्यादिति तत्त्वम्। अत्रेच्छादीनामन्तःकर-णनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्ता सर्वथाऽऽवश्यकीति तात्पर्यम्।

हिन्दी—बुद्धिपरिकल्पित अर्थात् बौद्धार्थ मानने ही पर बन्ध्यासुतादि प्रयोग सम्भव है क्योंकि बन्ध्या स्त्री का पुत्र होना, आकाश में पुष्प होना, कछुए का

दूध होना, खरहे का शृङ्ग होना बिलकुल असम्भव है तो उसमें अर्थवत्व ही नहीं है इसलिये प्रातिपदिक संज्ञा नहीं हो सकती तो स्वाद्युत्पत्ति नहीं होगी। बौद्धार्थ यदि मानते हैं तो बाह्यार्थ शून्य होने पर भी बुद्धिपरिकल्पित अर्थ लेकर अर्थवत्ता रहती है इसलिये प्रातिपदिक संज्ञा होने पर स्वाद्युत्पत्ति होती है।

यत्तु शशशृङ्गमित्यत्र शृङ्गे शशीयत्वभ्रम इति तार्किकैरुक्तम्। तन्न। शश-शब्दवाच्यजन्तुदर्शनरूपबाधे शशशृङ्गं नास्तीति वाक्ये शशशृङ्गमित्यस्य प्रातिपदिकत्वानापत्तेः। अर्थपदयोस्तादात्म्यात्तत्तदर्थतादात्म्यापन्नः शब्दो भिन्न इति हेतोरर्थभेदाच्छब्दभेद इति व्यवहारः। समानाकारमात्रेण तु एकोऽयं शब्दो बह्वर्थ इति व्यवहारः।

तार्किकमतं प्रदर्शयति—यत्त्वित्यादिना। तार्किकैर्हि शशशृंगमित्यत्र शृङ्गे शशीयत्वभ्रम एव नतु बुद्धिपरिकल्पितः कोऽप्यर्थ इत्युक्तम्। तन्न, समीचीनम्। शुक्तिं रजतत्वेन जानतोऽपि पुरुषस्य शुक्त्या राजतकार्य्यं कर्तुमशक्यवत् भ्रमस्य वास्तविक-कार्यनिर्वाहकत्वाभावेनार्थवत्त्वाभावात्प्रातिपदिकत्वाप्राप्तौ शशशृङ्गमित्यत्र स्वाद्यनु-त्पत्तेः। नैयायिकनयेऽभावस्य प्रतियोगित्वसत्वप्रसञ्जनप्रसञ्जितप्रतियोगित्वनियमे-ऽभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वात् शशशृङ्गाऽप्रसिद्धया तदभावस्यात्यन्तमप्रसिद्धेः शृङ्गे शशीयत्वभ्रमस्वीकारे नितरां शाब्दबोधासम्भवाच्चेति तत्त्वम्।

अर्थपदयोरिति। पदार्थयोस्तादात्म्यस्वीकारात्, तत्तदर्थतादात्म्यापन्नं = तत्त-च्छब्दार्थतादात्म्यसम्बन्धावच्छिन्नः शब्दः भिन्नः अतिरिक्तः इति हेतोः 'अर्थभेदात् शब्दभेद' इति व्यवहारो दृश्यते।

अत्रेदं तत्त्वम्—येन येनार्थेन यस्य यस्य शब्दस्येतरेतराध्यासस्तयोरेव शब्दार्थयो-स्तादात्म्यम्। एकदाऽनेकार्थैरेकस्येतरेतराध्यासस्यासम्भवात्। अध्यासस्य ज्ञानस्व-रूपतया ज्ञानमात्रं प्रत्यात्ममनःसंयोगस्य कारणत्वेन मनसोऽणुत्वेन चानेकसंयोगा-सम्भवेन अनेकाध्यासस्य युगपद्वक्तुमशक्यत्वाच्चेति।

अर्थभेदाच्छब्दभेद इति व्यवहारेणैव कृष्ण इत्युच्चारिते अकारानुपूर्वीकपुंस्त्व-विशिष्टवसुदेवापत्यरूपोऽर्थो नियमेन भासतेऽतो नीलरूपावच्छिन्नबोधककृष्णशब्दस्य तटादिवदनियतलिङ्गत्वमापाद्य वसुदेवापत्यरूपेऽर्थे नियतपुंल्लिङ्गत्वमुक्तमाकरेऽन्यथा-ऽर्थभेदाच्छब्दभेदाभावे तत्कथनमसङ्गतं स्यात्।

नन्वेकस्मिन् पक्षे 'एकः शब्दो नानार्थः' 'अजा पादा भाषा' एतद्भाष्यस्य कथं सङ्गतिरित्यत आह—समानाकारेति। समानाकारमात्रेण=श्रावणप्रत्यक्षवि-षयतावच्छेदकधर्मस्यैक्यमात्रेण, तद्भाष्यस्य सङ्गतिरिति भावः।

हिन्दी—तार्किकों ने जो 'शशशृंगम्' इस स्थल में शृंग में शश का भ्रम मानकर बौद्धार्थ का खण्डन किया है वह ठीक नहीं, क्योंकि जिस प्रकार सितुए में पुरुष के

चाँदी का भ्रम होने पर चाँदी का कार्य नहीं कर सकता क्योंकि भ्रम वास्तविक कार्य का निर्वाहक नहीं होता है इसलिए शृङ्ग में शश का भ्रम होने पर अर्थवत्ता नहीं होने से प्रातिपादिक संज्ञा ही नहीं हो सकती तो 'शशशृङ्गम्' यह प्रयोग ही नहीं हो सकता। तथा अभावज्ञान में प्रतियोगी का ज्ञान ही कारण नैयायिकों के सिद्धान्त में है तो जब शश का शृङ्ग ही अप्रसिद्ध तो उसका अभाव तो बिलकुल ही अप्रसिद्ध तो शाब्दबोध भी नहीं हो सकता।

अब प्रश्न यह उठता है कि जब शब्द और अर्थ में तादात्म्य सम्बन्ध है तो 'अर्थभेदात् शब्दभेदः' यह व्यवहार क्यों होता है।

उत्तर यह है कि—'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानमेव तादात्म्यम्' अर्थात् शब्द और अर्थ दोनों भिन्न हैं किन्तु अभेद सा प्रतीत होता है इसलिये तत्तदर्थनिष्ठ-तादात्म्यसम्बन्धावच्छिन्नशब्द भिन्न है इसलिए 'अर्थभेदात् शब्दभेदः' यह व्यवहार ठीक है।

समानाकार मात्र से अर्थात् श्रावणप्रत्यक्षवियतावच्छेदक धर्म के एक होने से अर्थात् शब्द और अर्थ के तुल्याकार प्रतीत होने से 'एकोऽयं शब्दो बह्वर्थः' यह व्यवहार होता है, क्योंकि अर्थ के भेद से शब्द का भेद हो सकता है किन्तु बह्वर्थ का प्रतिपादक नहीं हो सकता है इसलिए यह व्यवहार शब्द और अर्थ इन दोनों के समान आकार से ही प्रतीत होता है।

**सा च शक्तिस्साधुष्विवापभ्रंशेष्वपि, शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां तिरश्चां चान्वयबोधः। न हि तेषां तदेव तत्सम्भवः।**

शक्ति निरूप्य तदाश्रयं वक्तुमुपक्रमते—सा चेति। सा च=वाच्यवाचकभावाख्या शक्तिः साधुष्विव=साधुपदेष्विव, अपभ्रंशेष्वपि=अपभ्रंशवाचकशब्देष्वपि बोध्येति शेषः।

अत्रेदं तत्त्वम्—यस्मात् पदात् यदर्थबोधस्तत्र तदर्थबोधकतारूपायाः शक्तेः कार्यवशादनुमानं सञ्जायते। 'गगरी' 'थाली' इत्यादि लौकिकभाषास्थपदादपि कम्बुग्रीवादिमदर्थबोधदर्शनात्तादृग्बोधानुकूला शक्तिरपभ्रंशेष्वपि नूनमवसेयेति तत्त्वम्। शक्तिग्राहकेति—

> 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
> वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥'

इत्यादिशक्तिग्राहकशिरोमणेर्व्यवहारस्य उभयत्र=साधुषु अपभ्रंशेषु च तुल्यत्वात् समानत्वात्। व्यवहारदर्शनेन च पूर्वजन्मनि अनुभूता या शक्तिस्तस्याः स्मरणं

सञ्जायते । अत एव=पूर्वजन्मानुभूतस्मरणस्वीकारादेव बालानां, तिर्यग्योनीनाञ्च सम्यगन्वयबोधो भवति । अन्यथा इष्टसाधनताज्ञानाभावात् तेषां स्तनपानादौ प्रवृत्तिर्न स्यात् । जडप्रायाणां पश्वादीनामपि प्रतिनियतजात्यनुकूलमेव निश्चिता काचित्प्रतिभा प्रतिबोध्यतेऽतस्तेषामपि पूर्वजन्मानुकूला शक्तिरवश्यमभ्युपेयेति तत्त्वम् । नहि तेषां= बालादीनां, तदैव=आद्यबोधकाल एव, तत्सम्भवः = शक्तिग्रहसम्भवः ।

हिन्दी—शक्तिनिरूपण के बाद अब उसका आश्रय बताते हैं कि—वह वाच्य-वाचक नाम की शक्ति जिस तरह साधु शब्दों में रहती है उसी प्रकार अपभ्रंश शब्दों में भी रहती है क्योंकि शक्ति के ग्राहक शिरोमणि का व्यवहार दोनों में तुल्य है। लौकिक व्यवहार देखने से ही पूर्वजन्म की अनुभूत शक्ति का स्मरण हो आता है। इसलिए बालकों को तथा तिर्यग् जाति को अन्वय बोध होता है । पूर्वजन्म का संस्कार यदि नहीं हो तो बोध नहीं हो सकता क्योंकि प्रथम बोधकाल ही में शक्तिग्रह सम्भव नहीं ।

यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वाराऽर्थबोध इत्याहुः । तन्न । साधु-स्मरणं विनाऽपि बोधानुभवात् । तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च । न च शक्तिभ्रमाद् बोधोऽसाधुशब्देष्विति वाच्यम् । निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात् । अत एव स्त्रीशूद्रबालादीनामुच्चारिते साधावर्थसंशये तदपभ्रंशेनार्थनिर्णयः । अत एव 'समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः' इति भाष्यम्,

**वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः ।**

इति हरिकारिका च सङ्गच्छते । अत एवार्यम्लेच्छाधिकरणं सङ्गच्छते । तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते, तथाऽप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतैवेति सिद्धा-न्तितम् । तव तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्तिविषयरजतज्ञानस्येव म्लेच्छप्रसिद्धेर्वस्त्वसाधकतयाऽऽर्यम्लेच्छप्रसिद्धयोः कस्य बलवत्त्वमिति विचा-रासङ्गतिः स्पष्टैव ।

साधुत्वं च व्याकरणान्वाख्येयत्वं पुण्यजनकताच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम् ।

यत्त्विति । तार्किकाः, असाधुशब्देन=साधुप्रकृतिकापभ्रंशशब्देन, साधुस्मरणद्वारा= साधुशब्दस्य स्मरणद्वारा, अर्थबोधः=अर्थस्य बोधो जायत इत्यर्थः—इत्याहुः स्वमत-मुक्तवन्तः ।

तार्किकमतं खण्डयति—तन्नेत्यादिना। यदुक्तं तार्किकैस्तन्न समीचीनम्। साधुस्मरणं विनापि पामराणां बोधानुभवात्। तद्वाचकसाधुशब्दम्=अपभ्रंशवाचकसाधुशब्दम्, अजानताम्=एतस्मिन्नर्थेऽयं साधुरिति ज्ञानाभाववताम्, बोधानापत्तेश्चेति साधुशब्दमजानतां बोधो न स्यादिति भावः।

ननु तर्हि असाधुशब्देषु शक्तिभ्रमाद् बोधो जायतामित्यपि न वाच्यम्। भ्रमस्य सन्देहपूर्वकत्वनियमात् सन्देहासम्भवेन भ्रमत्वायोगात्। दूरतश्चाकचक्यदर्शनेन इयं शुक्तिः रजतं वेति सन्देहे धनिनां गृहसामीप्यज्ञानवशात् शुक्ताविदं रजतमिति यथाऽवधारणं तथा नात्र सन्देहोत्पादकं किञ्चित्कारणं प्रतीयते।

भ्रमत्वं हि—तद्धर्माभाववन्निष्ठविशेष्यतानिरूपिततद्धर्मनिष्ठप्रकारताकत्वे सति ज्ञानत्वम्। तादृशमपि भ्रमत्वं प्रकृते शक्त्यभाववन्निष्ठविशेष्यतानिरूपितशक्तिनिष्ठप्रकारताकत्वाभावेन नास्तीति तार्किककथनं सर्वथाऽसमीचीनमिति ध्येयम्।

अत एव=असाधुशब्देष्वपि शक्तिस्वीकारादेव, स्त्री-शूद्रबालादीनामुच्चारिते साधुशब्दे कदाचिदर्थसन्देहे तदीयापभ्रंशशब्देनैव अर्थस्य निर्णयः क्रियते। घटमानयेति शृण्वतां पामराणां तद्वाक्यादर्थानवगमे लौकिकभाषाप्रयोगादेव लोकेऽर्थावधारणमिति साधुष्विवापभ्रंशेष्वपि नूनं शक्तिः समवगन्तव्येति तत्त्वम्।

नन्वीश्वरेच्छासंकेतरूपशक्तिरीश्वरानुच्चरितत्वादपभ्रंशेषु नास्तीति कथमपभ्रंशे शक्तिरिति चेन्न, तथा सतीश्वरस्य सर्वज्ञत्वानापत्तेः। ईश्वरानङ्गीकर्तॄणां नये साधुशब्दादपि शाब्दबोधानापत्तेश्च। पित्रादिसङ्केतवत् सादिदेवदत्तादिपदेष्वव्याप्तिदोषसम्भवाच्चेति बोध्यम्।

उक्तार्थे द्वितीयं मानं दर्शयति—अत एवेति। अत एव=अपभ्रंशेष्वपि शक्तिस्वीकारादेव, शब्दैरपशब्दैश्च, अर्थावगतौ अर्थज्ञाने, समानायां तुल्यायां शास्त्रेण सूत्रेण धर्मनियमः क्रियते एवं क्रियमाणमभ्युदयकारि भवति, इति पस्पशाह्निकभाष्ये व्याकरणप्रयोजनकथनावसरे इति भाष्यस्वारस्यं संगच्छते। वाचकत्वाविशेषेऽपि, इति। साधौ, असाधौ वा वाचकत्वसमानत्वेऽपि केवलं पुण्ये पापे नियमोऽर्थात् साधुशब्दोच्चारणे पुण्यम्, असाधुशब्दोच्चारणे पापम्, इति हरिकारिकायाः सारांशसंगतिः।

उक्तार्थे तृतीयं मानं प्रदर्शयति—अत एवेति। अत एव=अपभ्रंशे शक्तिस्वीकारादेव, आर्यम्लेच्छाधिकरणस्य सङ्गतिः। तव तु=साधुशब्दस्मरणद्वाराऽर्थबोधमुररीकुर्वतः, रजतज्ञानस्येवेति। शुक्तिविशेष्यकरजतत्वप्रकारको यो भ्रमस्तस्य यथा वस्तुतः शुक्तौ न रजतत्वसाधकता तथा प्रकृतेऽपि म्लेच्छवाक्यात् शक्तिभ्रमादेवार्थबोधे न वस्तु साधकमिति तद्विचार एवासङ्गतः स्यादिति भावः। व्याकरणान्वाख्येयत्वम्=व्याकरणजन्यसाधुत्वप्रकारकानाहार्य्याप्रामाण्यज्ञानानास्कन्दितज्ञानविशेष्यत्वम्।

हिन्दी—तार्किक लोगों ने 'असाधु शब्द से साधु शब्दों के स्मरण द्वारा ही अर्थ का बोध होता है' यह जो कहा है वह भी ठीक नहीं, क्योंकि पामरों को साधुशब्द के स्मरण के बिना ही अर्थबोध हो जाता है। और अपभ्रंशवाचक साधुशब्दों को जो नहीं जानते उनको बोध नही होना चाहिये, किन्तु होता है।

यदि यह कहें कि शक्तिभ्रम से असाधु शब्दों से भी बोध हो जायगा कोई क्षति नहीं है, यह नहीं कह सकते, क्योंकि भ्रम तो सन्देहपूर्वक ही होता है, सन्देह के बिना भ्रम भी नहीं हो सकता। सितुए में दूर से चमचमाहट देखने पर शुक्ति है या चाँदी है ? यह जब सन्देह होता है तब भ्रम होता है, वैसा यहाँ संदेहोत्पादक कोई कारण नहीं है। इसलिये तार्किक का कहना सर्वथा असङ्गत है।

अपभ्रंश शब्दों में भी शक्ति मानने ही पर स्त्री, शूद्र तथा बालकों से उच्चारित शब्दों में जब अर्थ में सन्देह होने लगता है तो उसके अपभ्रंश से अर्थ का निर्णय किया जाता है।

पस्पशाह्निक भाष्य में भी व्याकरण के प्रयोजन कथन के अवसर पर भाष्यकार ने कहा है कि—शब्दों से या अपशब्दों से अर्थज्ञान समान ही हैं अर्थात् दोनों से हो सकता है, किन्तु शास्त्र धर्म नियम बताता है कि साधुशब्द प्रयोग से पुण्य होता है असाधुशब्दप्रयोग से पाप होता है।

इसी बात को हरि ने भी कहा है। इसीलिए आर्य-म्लेच्छाधिकरण भी सङ्गत होता है वहाँ यह कहा है कि—आर्यलोग यवशब्द का प्रयोग दीर्घशूक में अर्थात् जौ में करते हैं, म्लेच्छ लोग अर्थात् अनार्य लोग यवशब्द को प्रियंगु में अर्थात् कौनी में प्रयोग करते हैं और उसी को समझते हैं। तो भी म्लेच्छप्रसिद्धि की अपेक्षा आर्यप्रसिद्धि प्रबल है। इसीलिये वेद में दीर्घशूक परक ही यवशब्द है ऐसा सिद्धान्त किया गया है। तुम्हारे मत में तो म्लेच्छबोध शक्तिभ्रममूलक है तो भ्रममूलक रजत ज्ञान की तरह म्लेच्छ-प्रसिद्धि वस्तु की साधिका नहीं हो सकती तो आर्य प्रसिद्धि तथा म्लेच्छ प्रसिद्धि इन दोनों में कौन प्रसिद्धि प्रबल है यह विचार ही असङ्गत हो जायगा।

क्योंकि—साधु वही है जो व्याकरण से सिद्ध हो, और जिसमें पुण्य पैदा करने का धर्म हो। उससे भिन्न असाधु है।

सा च शक्तिस्त्रिधा, रूढिर्योगो योगरूढिश्च । शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढिः, यथा मणिनूपुरादौ। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः, यथा पाचकादौ । शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः, यथा पङ्कजपदे। तत्र पङ्कजनिकर्तृ पद्ममिति बोधात्। पद्मेऽनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं

च विना न लक्षणावसरः, क्वचित् तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः

'भूमौ पङ्कजमुत्पन्नं कह्लारकैरवमुखेष्वपि पङ्कजेषु' इत्यादौ। स्पष्टं चेदम् 'आर्हाद्' इति सूत्रे भाष्ये।

हिन्दी—वह शक्ति तीन प्रकार की है—रूढि, योग, योगरूढि।

१. रूढि का लक्षण यह है—

'शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्तिः रूढिः।'

जिसमें शास्त्रकल्पित अवयवों का अर्थ नहीं हो और समुदायार्थ निरूपित शक्ति हो, अर्थात् जिसके टुकड़ों का अलग-अलग कोई अर्थ नहीं हो सके किन्तु समुदाय का अर्थ हो सके वह रूढि शक्ति कही जाती है। जैसे—मणिः, नूपुरः, इन दोनों में टुकड़ों का अर्थ कुछ नहीं होता।

२. योग का लक्षण यह है—

'शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः'

जिसमें शास्त्रकल्पित अवयवों का अर्थ हो सके अर्थात् जो प्रकृति प्रत्यय के योग से टुकड़ों का भी अर्थ कर सके वह योग शक्ति है। जैसे—पाचकः आदि, यहाँ पकानेवाला अर्थ, पच् प्रकृति से अच् प्रत्यय के योग बल से ही निकलता है, यहाँ टुकड़ों का अर्थ स्पष्ट मालूम पड़ता है।

३. योगरूढि का लक्षण यह है—

शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः।

अर्थात् निष्कृष्ट लक्षण यह हो सकता है—'अवयवार्थनिरूपितशक्त्याश्रयपदघटितशब्दनिष्ठत्वे सति समुदायार्थोपस्थितप्रयोजकत्वं योगरूढित्वम्' इति। तत्समन्वयश्चेत्थम्—यथा पङ्कजशब्दे—पङ्कपदस्य कर्दमे, जपदस्योत्पत्त्याश्रये शक्तिः—तदाश्रयपदमुक्तोभयं तद्घटितं पङ्कजपदं तन्निष्ठत्वे सति पुष्पविशेषरूपसमुदायार्थोपस्थितिप्रयोजकत्वं समुदायनिष्ठशक्तौ ह्यस्तीति।

अर्थात् जो शास्त्रकल्पित अवयवों के अर्थ के साथ विशेष अर्थ को बता सके या यह कहना ठीक है कि जो अपने मिले हुये शब्दों से निकलने वाला अर्थ को न बताकर कोई तीसरा ही अर्थ बता सके वह योगरूढि कहाती है। जैसे—पङ्कजशब्द यहाँ पांके में पैदा होने वाला जो हो वह पङ्कज (कमल कहाता है) किन्तु पांके में कमल तो पैदा नहीं होता इसलिये, यहाँ टुकडों का अर्थ नहीं बताकर कमल अर्थ बताया है।

सो यहाँ प्रश्न यह उठता है कि—इसे योगरूढि शक्ति क्यों कहते हैं, यह तो लक्षणा कही जा सकती है क्योंकि पङ्कज पद के अर्थ कमल में लक्षणा सिद्ध मालूम पड़ती है।

उत्तर यह है—कि पक्षेऽनुपपत्तिप्रतिसन्धानं सम्वन्धप्रतिसन्धानं च विना न लक्षणावसरः' अर्थात् पद्य में अन्वय या तात्पर्य की अनुपपत्ति ( गड़वड़ी ) का प्रतिसन्धान ( खोज ), या सम्वन्ध का प्रतिसन्धान नहीं ले तव तक लक्षणा का अवसर नहीं आता। यहाँ तो तात्पर्य में गड़बड़ी नहीं होने पाती क्योंकि केवल जल में भी कमल का होना असम्भव है कुछ कीचड़ होना आवश्यक है, पानी के विना कीचड़ भी नहीं हो सकता इसलिए कीचड़ अर्थ न वता कर जल में होने वाला कमल अर्थ योगरूढि शक्ति ही से निकल सकता है लक्षणा से नहीं।

कहीं-कहीं पर तात्पर्य के ग्रहण कराने वाला शब्द के वश से केवल रूढ्यर्थ का या केवल योग अर्थ का भान होता है। जैसे—

'भूमौ पङ्कजमुत्पन्नं, कल्हारकैरवमुखेष्वपि पङ्कजेषु'

इत्यादि स्थलों में।

यहाँ 'भूमौ पङ्कजमुत्पन्नम्' यह उदाहरण केवल रूढि अर्थ का है क्योंकि यहाँ केवल रूढि अर्थ का वोध है योगार्थ का वाध है।

'कह्लारकैरवमुखेऽवपि पङ्कजेषु' यह उदाहरण केवल योगार्थ का है। क्योंकि यहां अवयवार्थ लेकर ही अर्थ का वोध होता है। यह वात 'अर्हात्' इस सूत्र के भाष्य में स्पष्ट है।

अश्वगन्धादिपदमोषधिविशेषे रूढम्, अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढमित्युच्यते। एवं मण्डपपदं गृहविशेषे रूढं, मण्डपानकर्त्तरि यौगिकम्।

नन्वश्वगन्धादिपदे प्रोक्ताभिस्तिसृभिः शक्तिभिरोषधिविशेषार्थस्य वाजिशालार्थस्य च वोधो न स्यादित्येतदर्थमेतत्त्रितयातिरिक्ता यौगिकरूढशक्तिरावश्यकीत्यत आह—अश्वगन्धादिपदमिति।

अत्रेदं तत्त्वम्—'अर्थभेदाच्छब्दभेदः' इति सिद्धान्ते योगरूढिशक्त्यैव गतार्थत्वेन हि कश्चिच्चतुर्थोऽतिरिक्तः शब्दोऽस्ति यदर्थमन्यस्याः शक्तेरावश्यकतेति भावः।

अर्थभेदेऽपि शब्दैक्यमिति मते तु यौगिकरूढशक्तिरभ्युपेयेति विचार्याह—'इदं यौगिकरूढमित्युच्यते' इति।

हिन्दी—अश्वगन्ध शब्द औषधि विशेष में रूढ है, घोड़े के गन्ध रहने के कारण वाजिशाला अर्थ के वोध में यौगिक है। इसी प्रकार मण्डप पद गृहविशेष में रूढ है, मण्डपान करने वाला में यौगिक है इसलिये योगरूढि का ही यह उदाहरण है। यह यौगिक रूढ भी कहा जा सकता है।

सैषा शक्तिः संयोगादिभिर्नानार्थेषु नियम्यते।

तदुक्तं हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
समार्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति॥

एते संयोगादया नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरणद्वारा विशेषार्थनिर्णायिका इति तदर्थः।

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः के? इति प्रश्ने उत्तरमाह—संयोग इत्यादि। तत्र संयोगः प्रसिद्धः सम्बन्धः। विप्रयोगः विश्लेषः साहचर्यं परस्परापेक्षित्वं, सहावस्थानं वा। विरोधिता प्रसिद्धं वैरम्, सहानवस्थानं वा। अथ चतुर्थी विभक्ति-तुमन्-प्रत्ययादिबोध्यं प्रयोजनम्। प्रकरणं प्रसङ्गः वक्तृश्रोतृबुद्धिस्थविषयत्वम्। लिङ्गम् संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्मः। अन्यस्य च सान्निध्येन विवक्षितार्थतोपस्थापकस्य शब्दस्य सन्निधिः सन्निधानम्। सामर्थ्यम् कारणत्वम्। औचिती योग्यता। देशः रहोवनादिः। कालो वसन्तादिः समयः। व्यक्तिः पुंल्लिङ्गत्वस्त्रीलिङ्गत्वादिरूपं चिह्नम्। स्वरादयः उदात्तादयः प्रसिद्धा एव। आदिपदेन अभिनयः, अपदेशश्च गृह्येते। तत्राभिनयः साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया, अपदेशोऽभिमतनिर्देशः साहित्ये। व्याकरणे तु-आदिपदेन षत्वणत्वादीनां ग्रहणम्। तद्यथा—सुसिक्तमित्यत्र पूजार्थः सुः कर्मप्रवचनीयोऽतो न षत्वम्। सुषिक्तमित्यत्रोपसर्गोऽन्यार्थस्तेन षत्वम्। एवं प्रणायक इत्यत्रोपसर्गसंज्ञया णत्वेन प्रणयनक्रियायाः कर्ता प्रतीयते। प्रनायक इत्यत्र प्रगतनायकदेशो वध इत्यनुपसर्गत्वेन णत्वाभाव इति तत्त्वम्। एते संयोगादयश्चतुर्दश शब्दार्थस्य अनेकार्थस्य शब्दस्य अर्थस्तस्य, अनवच्छेदे=निश्चयाभावे, विशेषस्मृतिहेतवः—विशेषस्य स्मृतिः स्मरणं तस्या हेतवः कारणानि भवन्तीत्यर्थः।

अत्रेदं तत्त्वम्—अनेकार्थस्य शब्दस्य कतरोऽर्थो विवक्षितः? इति सन्देहापनोदाय संयोगादयस्तन्नियामकाः स्वीक्रियन्ते, एते ह्यविवक्षितमर्थं निरुन्धाना विवक्षितमेवार्थं नियमेनोपस्थापयन्ति। एषां क्वचिन् पार्थक्येन क्वचिच्चान्यथा नियामकत्वम्। एवञ्च यत्र संयोगादीनां नियन्त्रणाभावस्तत्र श्लेषस्यावसरः प्रसरति, यत्र पुनर्नियन्त्रणेऽपि विवक्षितोऽर्थो नैव प्रस्फुरति तत्र व्यञ्जनाया अवसरः, किन्तु संयोगादिभिर्नियन्त्रणे तु शक्तेरवसर इति ध्येयम्।

हिन्दी—पूर्वोक्त शक्ति नानार्थक शब्दों में संयोगादि के द्वारा विविक्षितार्थ की नियामिका होती है।

जैसा कि हरिने कहा है कि—'शब्दार्थ के अनिश्चय होने पर संयोगादि चौदह नानार्थक शब्दों में विशेषार्थ के निर्णायक होते हैं।'

तात्पर्य यह है कि—जहाँ पर संयोगादि नियन्त्रण का अभाव है वहाँ श्लेष होता है, जहाँ पर संयोगादि के द्वारा नियन्त्रण होने पर भी विवक्षित अर्थ नहीं होने पाता वहाँ व्यञ्जना का अवसर होता है किन्तु संयोगादि द्वारा विवक्षित अर्थ की नियामिका शक्ति ही है—दूसरा नहीं।

संयोगविप्रयोगयोरुदाहरणे सवत्सा धेनुरवत्सा[1] धेनुरिति। साहचर्यस्य रामलक्ष्मणाविति। साहचर्यं सादृश्यं सदृशयोरेव सहप्रयोग इति। नियमात्। रामार्जुनगतिस्तयोरित्यादौ विरोधेन तत्। अञ्जलिना जुहोति अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोतीत्यादिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्। सैन्धवमानयेत्यादौ प्रकरणेन तत्। अक्ताः शर्करा[2] उपदधाति'इत्यादौ 'तेजो वै घृतम्' घृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनकाञ्जनपरत्वम्। रामो जामदग्न्य इति जामदग्न्यसन्निधानाद्रामः परशुरामः। अभिरूपाय कन्या देया इत्यादौ अभिरूपतरायेति सामर्थ्यात् प्रतीयते।

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव[3] सः॥

इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम्, मधुसर्पिषा इत्यस्य सेचनार्थत्वम्, गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम्। भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात्परमेश्वरपदं राजबोधकम्। चित्रभानुर्भातीत्यादौ रात्रावग्नौ दिवा सूर्ये। व्यक्तिर्लिङ्गम्। मित्रो भाति मित्रं भातीत्यादावादौ सूर्योऽन्त्ये सुहृत्। स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः।

इति शक्तिनिरूपणम्।

---

१. सवत्सा इत्युक्ते धेनुरेव प्रतीयते इत्यर्थः।

२. मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः।

३. अप्रिय इत्यर्थः। कटुशब्दः इत्यादाविव कटुशब्दोऽप्रियार्थकः। अन्यथा निघण्ट्वादौ तस्य तीक्ष्णरसमरीचिशुण्ठीपिप्पल्याद्यर्थकत्वेन दृष्टत्वात् तस्य च निम्बेऽभावादसङ्गतिः स्पष्टैवेति बोध्यम्।

१. तत्र संयोगस्योदाहरणम्–सवत्सा धेनुरिति । तत्र वत्ससंयोगेन धेनोरेव बोधो नत्वन्यस्येति बोध्यम् ।

२ विप्रयोगस्योदाहरणम्–अवत्सा धेनुरिति । अत्र संसर्गवद्विप्रयोगस्यापि विशेषावगमकत्वेन सम्भावितवत्सा धेनुः प्रतीयते ।

३ साहचर्यस्योदारणम्–'रामलक्ष्मणौ' इति । अत्र रामपदं बलभद्र-भार्गव-दशरथापत्येषु त्रिष्वपि यद्यपि शक्तं तथापि लक्ष्मणपदसाहचर्यात् भगवतो दशकन्धारेरेव रामस्य रामपदेन बोधः ।

४. विरोधिताया उदाहरणम्–'रामार्जुनगतिस्तयोः ।' इति । अत्र रामार्जुनयोरिव तयोर्गतिरिति कस्यचिदुपमायां सदृशलक्षणया विरोधात् भार्गवकार्तवीर्ययोरेव बोधः ।

५. अर्थस्योदाहरणम् अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते इति । अत्र जुहोतीत्यादिपदार्थवशात्तत्तदाकाराञ्जलिपरत्वम् । हवने तत्तदाकारेणैव हवनकर्मणो दर्शनात् ।

६. प्रकरणस्योदाहरणम्—'सैन्धवमानय' इति अत्र सैन्धवपदस्य लवणेऽश्वे च शक्तत्वेऽपि भोजनप्रकरणवशात् लवणस्य, यात्रारूपप्रकरणवशात् अश्वस्य च बोधः ।

७. लिङ्गस्योदाहरणम्–अक्ताः शर्करा उपदधाति इति । अत्र यद्यपि अक्तपदं सामान्यत उपादानात् तैलघृतोभयाभ्यञ्जनपरकं तथापि 'तेजो वै घृतम्' इति वाक्येन तेज.पदस्य तेजोवर्धके लक्षणया घृतस्तुतिरूपाल्लिङ्गात् अक्तपदं घृतकरणकाभ्यञ्जनकर्मतामेव शर्करा तु बोधयति ।

८. अन्यस्य शब्दस्य सन्निधेरुदाहरणम्–'रामो जामदग्न्य' इति । अत्र जामदग्न्यपदसन्निधानात् रामो भार्गव एव प्रतीयते न तु दाशरथिहलधरौ ।

९. सामर्थ्यस्योदाहारणम्—'अभिरूपाय कन्या देया' इत्यत्र कन्या देयेति कथनेनैव वराय सुन्दरायेति लब्धे अभिरूपपदसामर्थ्यात् अतिसुन्दरायेत्यर्थः प्रतीयते ।

१०. औचित्यस्योदाहरणम्—'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः' यश्चेति । यश्च जनः निम्बं निम्बवृक्षं परशुना छिनत्ति । यश्च जनः एनं निम्बवृक्षं मधुसर्पिषा सिञ्चति । यश्च जनः एनं निम्बवृक्षं गन्धमाल्याद्यैः पूजयति । तस्य सर्वस्य जनस्य निम्बवृक्षः कटुरेवेत्यर्थः । अत्रौचित्यादेव छेदनार्थत्वादीनां बोधः ।

११. देशस्योदाहरणम्—'भात्यत्र परमेश्वरः' इति अत्र परमेश्वरपदं यद्यपि परमात्नो बोधकं तथापि अत्रेति पदेन राजधानीरूपदेशात् उत्कृष्टपुरुषविशेषं बोधयत् राजानमेव प्रत्याययति ।

१२. कालस्योदाहरणम्—'चित्रभानुर्भाति' इति । अत्र 'चित्रभानुर्विरोचनः' 'चित्रभानुर्विभावसुः' इत्यमरबलात् चित्रभानुपदं यद्यप्यग्निसूर्योभयशक्तं तथापि रात्रिरूपकालादग्नेर्बोधकम्, तथा दिवारूपकालज्ञानात् सूर्यस्य बोधकम् ।

१३. व्यक्तेरुदाहरणम्—'मित्रो भाति, मित्रं भाति', इति । अत्रोदाहरणेऽनेकार्थको शबलात् मित्रपदं यद्यप्युभयार्थबोधकं तथापि पुँल्लिगनिर्देशात् सूर्यार्थबोधकम्, क्लीब निर्देशात् सुहृद्बोधकम् ।

१४. स्वरस्योदाहरणम्—'स्थूलपृषतीम्' अत्र पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनि र्णयः, अन्तोदात्तस्वरेण तत्पुरुषार्थनिर्णयः । तत्र 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सूत्रेण पूर्वपदप्रकृतिस्वरः । 'तत्पुरुष एव समासस्य' इति सूत्रेऽन्तोदात्तस्वरो भवतीति ज्ञेयम् ।

आदिपदात् षत्वस्योदाहरणम्—सुसिक्तम्, अत्र पूजार्थकस्य सोर्ग्रहणे 'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा अनुपसर्गत्वात्षत्वं न भवति । सुषिक्तमित्यस्योपसर्गत्वे षत्वं भवतीति बोध्यम् ।

णत्वस्योदाहरणम्—प्रणायक इत्यत्रोपसर्गत्वे णत्वम् । प्रनायक इत्यत्र प्रगत नायकदेश इत्यर्थे न णत्वम् ।

इति 'तत्त्वप्रकाशिका' व्याख्यायां शक्तिनिरूपणं समाप्तम् ।

—०—

१. २. हिन्दी—संयोग-विप्रयोग का उदाहरण 'सवत्सा धेनुः अवत्सा धेनुः' है । यद्यपि धेनुपद खड्गादिनानार्थ बोधक है किन्तु वत्सपद के संयोग से या विप्रह गोवाचक धेनु का ही बोध होता है ।

३. साहचर्य का उदाहरण—'रामलक्ष्मणौ' है । यहाँ रामपद यद्यपि बलरा परशुराम, दाशरथिराम का वाचक है तथापि लक्ष्मण के साहचर्य से रावण नाश करनेवाले श्री रामचन्द्र ही का बोधक है ।

४. विरोधिता का उदाहरण—'रामार्जुनगतिस्तयोः' है, । यहाँ उन दोनों की राम-अर्जुन के समान है । इस उपमा में राम अर्जुन पद यद्यपि नानार्थ का वाचक किन्तु भार्गव परशुराम के साथ हैहयराज कार्तवीर्य अर्जुन का बराबर विरोध इसलिये राम पद से परशुराम ही; अर्जुन पद से कार्तवीर्य अर्जुन का ही बोध है रामचन्द्र तथा पाण्डव अर्जुन का बोध नहीं होता ।

५. अर्थ का उदाहरण—'अञ्जलिना जुहोति' 'अञ्जलिना सूर्यमुपतिष्ठते' । यहाँ जुहोतिपद के अर्थ से जिस अञ्जलि से हवन किया जाता है उसी तरह जोड़कर सूर्य का उपस्थान करता है इस अर्थ का बोध होता है ।

६. प्रकरण का उदाहरण—'सैन्धवमानय' है, यहाँ सैन्धवपद से यद्यपि, लवण और घोड़ा, दोनों का बोध होता है, किन्तु प्रकरणवशात् भोजनप्रकरण में नमक का बोध होता है और यात्राप्रकरण में घोड़े का बोध होता है।

७. लिंग का उदाहरण—'अक्ताः शर्करा उपदधाति' है, यहाँ उपक्तपद सामान्यतः उपात्त है, इसलिये तैल-घृत उभयाञ्जन बोधपरक है किन्तु 'तेजो वै घृतम्' अर्थात् घृत तेज को बढ़ाने वाला है इस घृतस्तुति लिंग से अर्थात् घृतप्रशंसा परक वाक्या से घृत से मिला हुआ ही शक्कर हवन में आधान करे इस अर्थ का बोध होता है।

८. अन्य शब्द के सामीप्य से भी अन्यार्थ का बोध होता है इसका उदाहरण—'रामो जामदग्न्यः' है, यहाँ रामपद यद्यपि रामचन्द्र बलराम दोनों का बोधक है किन्तु जामदग्न्यः पद के सन्निधान से जमदग्नि के पुत्र परशुराम ही का बोध होता है दशरथापत्य राम, या कृष्ण-बलराम का बोध नहीं होता है।

९. सामर्थ्य का उदाहरण—'अभिरूपाय कन्या देया' यह है, यहाँ 'कन्या देया' इतना ही कहने से 'वराय कन्या देया' इस अर्थ का बोध हो जा सकता है किन्तु 'अभिरूप' पद के सामर्थ्य से 'अभिरूपितराय' अर्थात् अत्यन्त सुन्दर वर को कन्या देनी चाहिये इस अर्थ का बोध होता है।

१०. औचित्य का उदाहरण—'यश्च निम्बं परशुना' इत्यादि है, इस श्लोक में केवल कर्म और करण का उपादान है क्रिया का नहीं किन्तु औचित्य अर्थात् योग्यता के अनुसार 'जो मनुष्य फरसे से निम्बवृक्ष को काटता है, जो इसे मधु और घी से सींचता है, जो इसे चन्दन माला वगैरह से पूजा करता है किन्तु सभी को नीम कड़ुआ मालूम पड़ता है। यहाँ औचित्य के कारण ही इन अर्थों का बोध होता है।

११. देश का उदाहरण—'भात्यत्र परमेश्वरः' है; यहाँ परमेश्वरपद से यद्यपि परमात्मा का बोध होता है किन्तु राजधानी रूप देश से राजा का बोध होता है।

१२. काल का उदाहरण—'चित्रभानुर्भाति' है, यहाँ कोशबल से चित्रभानुपद यद्यपि अग्नि और सूर्य दोनों का बोधक है किन्तु रात्रिकाल देखने से अग्नि का बोध होता है, और दिनकाल के ज्ञान से सूर्य का बोध होता है।

१३. व्यक्ति (लिंग) का उदाहरण—'मित्रो भाति' 'मित्रं भाति' है, यहां मित्रपद यद्यपि सूर्य और सुहृद दोनों का बोधक है किन्तु पुंलिंग मित्रपद से कोशबलात् सूर्य ही का बोध होता है, तथा नपुंसक मित्रपद से सुहृत् का ही बोध होता है।

१४. स्वर का उदाहरण - 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' यह है, यहाँ जब स्थूलपृषती शब्द अन्तोदात्त पढ़ा जाता है तब 'तत्पुरुष एव समासस्य' इस

सूत्र से अन्तोदात्त स्वर के विधान से 'स्थूला चासौ पृषती च' ऐसा विग्रह करने पर समानाधिकरण तत्पुरुष प्रतीत होता है।

और जब पूर्वपद प्रकृतिस्वरयुक्त अन्तोदात्त पढ़ा जाता है तो बहुव्रीहि प्रकृत्या पूर्वपदम्' इस सूत्र से बहुव्रीहिसमास में ही पूर्वपद प्रकृतिस्वर का विधान होता है इसलिए 'स्थूलानि पृषन्ति यस्याः' इस विग्रह से समानाधिकरणक बहुव्रीहि समास प्रतीत होता है।

स्वरादि में आदि पद से षत्व-णत्व का ग्रहण है इसलिये षत्व का उदाहरण 'सुषिक्तम्' सुसिक्तम् हो सकता है, 'सुः पूजायाम्' इस पाणिनिसूत्र से पूजा के ही अर्थ में कर्मप्रवचनीय संज्ञा का विधान है। इसलिए कर्मप्रवचनीय संज्ञा से उपसर्गसंज्ञा का बाध होने पर षत्व नहीं होता है। पूजार्थ से अन्य अर्थों में कर्मप्रवचनीयसंज्ञा नहीं होती है इसलिये षत्व होता है।

इति हिन्दीव्याख्यायां शक्तिनिरूपणं समाप्तम्।

---

# अथ लक्षणानिरूपणम्

ननु लक्षणा कः पदार्थ इति चेत्,

अत्र तार्किकाः—

स्वशक्यसम्बन्धो लक्षणा। सा च द्विधा। गौणी शुद्धा च। स्वनिरूपित-सादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी। तदतिरि-क्तसम्बन्धेन शक्यसम्बन्ध्यर्थपतिपादिका शुद्धा, प्रकारान्तरेणापि सा द्विविधा। अजहत्स्वार्था, जहत्स्वार्था च। स्वार्थसंवलितपरार्थाभिधायिकाऽजहत्स्वार्था। यथा छत्रिणो यान्ति, कुन्तान् प्रवेशय, यष्टीः प्रवेशय,' काकेभ्यो दधि रक्ष्यतामि-त्यादौ छत्रिसहितसेना–कुन्तास्त्रसहितपुरुष–यष्टिसहितपुरुष–काकसहितसर्वद-ध्युपघातकबोधः। स्वार्थपरित्यागेनेतरार्थाभिधायिकाऽन्या। तत्परित्यागश्च वाक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वम्। तेन गां वाहीकं पाठयेत्यादौ गोसदृशलक्षणायामपि न गोस्तदन्वयिपाठनक्रियान्वयित्वम्।

लक्षणापदार्थजिज्ञायासायां तार्किकमतं दर्शयितुमुपक्रमते–नन्वित्यादिना। तार्किकमते लक्षणायाः स्वरूपं प्रदर्शयति—"स्वशक्यसम्बन्धो लक्षणा" इति। अत्र स्वपदेन पदस्यैव ग्रहणं यच्च लाक्षणिकत्वेनाभिप्रेतम्, तस्य यः शक्योऽर्थस्तेन साकं यः सम्बन्धः स लक्षणा। तद्यथा—"गङ्गायां घोष" इत्यत्र, स्वं गंगापदं तच्छक्यः प्रवाहविशेष-स्तेन साकं यः सम्बन्धः स सामीप्यसम्बन्धः स तीरे विद्यतेऽतो गंगापदस्य तीरे लक्षणा भवतीति लक्षणसमन्वयः।

सा च लक्षणा गौणी-शुद्धाभेदेन द्विविधा। तत्र गौण्या लक्षणम्—'स्वनिरूपित-सादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी' इति। तदितरसम्बन्धेन = स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धातिरिक्तकार्य्यकारणभावादिसम्बन्धेन शक्यसम्बन्धी योऽर्थस्तत्प्रतिपादिका शुद्धा चेति तत्र शुद्धाया उदाहरणानि—कुन्ताः प्रविशन्ति, अत्र धार्य्यधारकभावः सम्बन्धः। राजासौ गच्छति इत्यत्र स्वस्वामिभावलक्षणः सम्बन्ध।

तत्र गौण्या उदाहरणम् "अग्निर्माणवकः" इत्यादि। अत्र स्वमग्निपदन्तन्निरूपितं यत् सादृश्यं शुचित्वादि तदधिकरणत्वसम्बन्धेन शक्यस्याग्नेः स्वनिष्ठशुचित्वसत्त्व-सम्बन्धी योऽर्थस्तत्प्रतिपादिका गौणी लक्षणा विद्यत इति समन्वयः।

सा च लक्षणा पुनः प्रकारान्तरेणापि अन्यप्रकारेणापि द्विधा अजहत्स्वार्था जहत्स्वार्था च।

तत्राजहत्स्वार्थायां लक्षणम्—

'स्वार्थसंवलितपरार्थाभिधायिका अजहत्स्वार्था' इति । अर्थात् 'स्वनिष्ठशो निरूपकार्थनिष्ठविषयतानिरूपितविषयताश्रयार्थविषयकोपस्थितिप्रयोजकम्' अजहत्स्वार्था इति निष्कृष्ट लक्षणम् । न जहति स्वमर्थं पदानि यस्यां साऽजहत्स्वार्थेति व्युत्पत्तिव

यत्र वाच्यार्थस्याप्यन्वयो भवेत्तत्र किलाऽजहत्स्वार्था भवति यथा—छत्रिणो त्यत्र छत्रिषु अच्छत्रिषु च गच्छत्सु छत्रिणां बाहुल्यात् छत्रिणो यान्तीति प्रयोगे त्रिषु यानक्रियायाः कर्तृत्वान्यथानुपपत्त्या छत्रिपदमजहत्स्वार्थलक्षणया च्छत्र्युभयबोधकत्वेन छत्रिसहितसेनाया बोधः ।

एवं 'कुन्ताः प्रविशन्ती'त्यत्र कुन्तानामचेतनपदार्थतया प्रवेशक्रियामन्वया वात् अजहत्स्वार्थलक्षणया कुन्तास्त्रसहितपुरुषाणां बोधः ।

एवं 'यष्टीः प्रवेशये'त्यत्र लक्षणया यष्टिसहितपुरुषाणां बोधः ।

"काकेभ्यो दधि रक्ष्यताम्" इत्यत्र यदि केवलं काकेभ्य एव दधि रक्षेत रक्षणेन किम्फलम् । इति दधिभक्षका ये जीवाः सन्ति, तेभ्यः सर्व्वेभ्यो दधि रक्ष इति लक्षणया बोध उपपद्यते । अत्राजहत्स्वार्थलक्षणयैव काकसहितसर्वदध्युपघात बोधः सञ्जायत इति भावः ।

जहत्स्वार्थाया लक्षणञ्च—

'स्वार्थपरित्यागेनेतरार्थाभिधायिका जहत्स्वार्था" इति । जहति स्वमर्थं यस्यां सा जहत्स्वार्थेति व्युत्पत्तेः ।

यत्र वाच्यार्थस्यान्वयाभावे स्वार्थपरित्यागपुरस्सरमितरार्थाभिधानस्याव तत्र जहत्स्वार्था भवति । यथा—"मञ्चाः क्रोशन्ति" इत्यादौ वाच्यार्थस्य क्रोशनकर्तृत्वान्वयासम्भवान्मञ्चपदस्य मञ्चस्थे पुरुषे लक्षणा । अत्र वाच्यार्थस्य त्यागस्तत्पुरस्सरमितरार्थस्य तत्स्थपुरुषस्य बोधो जहत्स्वार्थलक्षणयैवेति बोध्यम् ।

तत्परित्यागश्च=स्वार्थपरित्यागश्च, शक्यार्थस्य=वाच्यार्थस्य, लक्ष्यार्थान्वि लक्ष्यार्थान्वयवता सह, अनन्वयित्वम्=अन्वयित्वाभाववत्त्वम् । तेन=स्वार्थप गस्य शक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वरूपस्वीकारेण, 'गां वाहीकं पाठय' वाहीकस्य गोगतजाड्यमान्द्यादिसदृशलक्षणायामपि गोस्तदन्वयिपाठनक्रियान्वयित

अत्रेदं तत्त्वम्—बहिर्भवो वाहीकः । 'बहिषष्टिलोपो यञ्च' 'ईकक्' इति द्वयेन टिलोपे ईककि कृते निष्पन्नो वाहीकः पाञ्चालापरपर्यायो हलवाहकापर ब्राह्मणब्रुवो वा उच्यते ।

"विप्रसंस्कारयुक्तोऽपि नित्यं संध्यादिकञ्च यः ।
नैमित्तिकञ्च नो कुर्य्याद् ब्राह्मणब्रुव उच्यते ॥"

इत्युक्तो जातिमात्रेण ब्राह्मणः। अत्र हि बाहीकस्य गोत्वेन निरूपणात् गौणीत्वम्। ...ोर्वाहीकस्य चान्वयानुपपत्तौ गोपदं स्वार्थं परित्यज्याज्ञत्वादिसाधर्म्यसम्बन्धेन वाहीं- ...कार्थमङ्गीकरोतीति लक्षणाया अवसर आयाति।

किञ्च वाहीको गोपदवाच्य इति सङ्केताभावान्नैव गोपदं, नवा तद्गता गुणा एव ...हीकार्थं बोधयितुमीशते साक्षादेतदर्थमपि लक्षणाया आवश्यकत्वमापतति।

न च गोत्वे गृहीता शक्तिर्व्यक्तिमिव तत्सदृशमपि बाहीकं बोधयितुं शक्ता स्याल्लक्ष- ...ायाः काऽऽवश्यकतेति वाच्यम्, 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायाद् ...शब्देन गोशब्दार्थमात्रबोधनेन शक्तेर्विरतत्वात् 'शब्दबुद्धिकर्मणां विरम्य व्यापारा- ...वः' इति न्यायेन विरतायाश्च शक्तेः पुनरुत्थानाभावादन्यार्थबोधनाय तदावश्य- ...त्वात्।

न केवलमुक्तानि चत्वार्य्येवोदाहरणानि अजहत्स्वार्थायास्तानि तूपलक्षणानि ...ङ्गायां घोष' इत्यादेरपि। अतो 'गंगायां घोष' इत्यप्यजहत्स्वार्थाया एवोदाहरणं ...व्यम्। तद्यथा—स्वनिष्ठनिरूपकार्थनिष्ठविषयतानिरूपितविषयताश्रयार्थविषयको- ...स्थितिप्रयोजकत्वमित्यजहत्स्वार्थाया लक्षणे—गंगापदनिष्ठा या शक्तिस्तन्निरूपको प्रवाहविशेषरूपोऽर्थस्तन्निष्ठा या विषयता तन्निरूपिता या तीरनिष्ठा विषयता ...न्निरूपिका या उपस्थितिस्तत्प्रयोजकत्वमस्ति गंगायामिति लक्षणसमन्वयः।

हिन्दी—शक्तिनिरूपण के बाद लक्षणा निरूपण में—तार्किक के मत से लक्षणा लक्षण यह है—'स्वशक्यसम्बन्धो लक्षणा' अर्थात् स्वपद से जिसमें लक्षणा करनी उसका ग्रहण होता है। जैसे—"गंगायां घोषः" यहाँ पर गंगापद के तीर में ...णा करनी है इसलिये स्व गंगापद है उसका शक्य अर्थ प्रवाहरूप है उसके साथ ...मीप्य सम्बन्ध तीर में है इसलिए गंगापद में लक्षणा होती है।

वह लक्षणा दो प्रकार की होती है एक गौणी दूसरी शुद्धा। उसमें गौणी का ...ण यह है—

"स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी" ...दितरसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा' यह शुद्धा का लक्षण है।

अर्थात् जो स्वनिरूपित सादृश्य सम्बन्ध से शक्यसम्बन्धी अर्थ को बतावे वह ...ी लक्षणा है। जैसे—"अग्निर्माणवकः" यहाँ अग्निनिरूपित जो सादृश्य सम्बन्ध ...त्व (पवित्रत्व) तेजस्त्व आदि सम्बन्ध है उसका सादृश्य सम्बन्ध से शक्य ...न्धी जो 'यह बालक अग्नि के समान तेजवाला' यह अर्थ है उस अर्थ के ...पादन करने वाली गौणी लक्षणा है।

सादृश्य सम्बन्ध से इतर सम्बन्ध अर्थात् कार्यकारणभावलक्षणसम्बन्ध, आधारा- ...ावलक्षणसम्बन्ध, स्वस्वामिभावलक्षणसम्बन्ध, अवयवावयविभावलक्षण सम्बन्ध;

तात्कर्म्यलक्षण सम्बन्ध, तादर्थ्यलक्षण सम्बन्ध जिसमें हो वह शुद्धा लक्षणा है। जै
'आयुर्वै घृतम्', यहाँ कार्यकारणभाव सम्बन्ध सम्बन्धी आयु की तादात्म्येन प्रती
लिये 'आयुष्कारणं घृतम्' ऐसी लक्षणा की जाती है।

'राजाऽसौ गच्छति' यहाँ स्वस्वामिभावलक्षण सम्बन्ध से लक्षणा के
"राजा का पुरुष जाता है" यह बोध होता है।

अग्रमात्र अवयवभाग में 'हस्तोऽयम्' यहां अवयवावयविभाव लक्षण है।

ब्राह्मणोऽपि तक्षाऽसौ' यहां तात्कर्म्यलक्षण सम्बन्ध है। इन्द्र के लिये स्त
'अमी इन्द्राः' कहा जाता है। यहां तादर्थ्यलक्षण सम्बन्ध है।

वह लक्षणा अन्य प्रकार से भी दो प्रकार की है—एक अजहत्स्वार्था,
जहत्स्वार्था।

जो लक्षणा अपने अर्थ को नहीं छोड़कर अर्थात् अपने अर्थों के साथ-साथ
अर्थ को भी बताती है उसे अजहत्स्वार्था लक्षणा कहते हैं। और जहाँ वा
का भी अन्वय होता है वहाँ अजहत्स्वार्थालक्षणा होती है। जैसे—"छत्रिणो यान्ति"
छातेवाले, विना छाते वाले, दोनों जाते हों, किन्तु छाते वाले अधिक जाते हैं—इ
को बोध कराने के लिए लक्षणा की जाती है तो लक्षणा के द्वारा "छत्रिसहित
जा रही है" इस अर्थ का बोध होता है। यहाँ छत्री और अच्छत्री दोनों का
छत्रि पद है।

इसी प्रकार "कुन्तान् प्रवेशय" इस वाक्य में अचेतन पदार्थ कुन्त अस्त्र का
कार्य असम्भव है, इसलिये अजहत्स्वार्थ लक्षणा से "कुन्तास्त्र सहित पुरुषों को
करावें" इस अर्थ का बोध होता है।

उसी प्रकार 'यष्टीः प्रवेशय' इस वाक्य में केवल यष्टि का प्रवेशन
अन्वय होना असंभव है इसलिये लक्षणा के द्वारा "यष्टिसहित पुरुषों को
करावें" इस अर्थ का बोध होता है।

उसी प्रकार 'काकेभ्यो दधि रक्ष्यताम्' इस वाक्य से केवल 'कौवों से द
संरक्षण करना' अर्थ प्रतीत होता है किन्तु यदि अन्य जीव आकर खाजायेंगे तो
रक्षण का फल क्या होगा ? इसलिये अजहत्स्वार्था लक्षणा से 'दधिभक्षका ये
सन्ति, तेभ्यः सर्वेभ्यो दधि रक्षणीयम्' अर्थात् "कौवे के साथ-साथ जितने द
जीव हैं उन सबों से दधि संरक्षण करना चाहिये" इस अर्थ का बोध होता है।

अपने अर्थों को छोड़कर दूसरे अर्थों को बताने वाली लक्षणा 'जहत्स्वार्थ
कहाती है।

जैसे—'मञ्चाः क्रोशन्ति' यहाँ वाच्यार्थ मञ्च का क्रोशन क्रिया में

असम्भव है इसलिये वाच्यार्थ परित्याग है। लक्षणा के द्वारा मञ्च पर बैठे हुए पुरुषों का बोध होता है।

स्वार्थ का परित्याग—शक्यार्थ के लक्ष्यार्थ से अन्वय होने वाले पदार्थों के साथ अन्वय नहीं होना ही है—इसलिये 'गां वाहीकं पाठय' यहाँ पर गौ सदृश जाड्य मान्द्य अज्ञत्वादि साधर्म्य से लक्षणा होने पर भी जो पदार्थ का गौ में अन्वय होने वाला वाहीक पदार्थ के साथ पाठन क्रिया में अन्वय नहीं होता है, इसलिये शक्यार्थ गो का सर्वथा परित्याग कर ही वाहीकार्थ की प्रतीति होती है।

सा च लक्षणा तात्स्थ्यादिनिमित्तिका। तदाह—

**तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च।**
**तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः॥ इति।**

तात्स्थ्यान्मञ्चा हसन्ति। ग्रामः पलायितः। ताद्धर्म्यात्सिंहो माणवकः। गौर्वाहीकः। तत्सामीप्याद् गङ्गायां घोषः। तत्साहचर्याद्यष्टीः प्रवेशय। तादर्थ्या-दिन्द्रार्था स्थूणा इन्द्रः।

तात्स्थ्यादिति। कारिकायां तत्पदेन सर्वत्र शक्यार्थस्य ग्रहणम्। 'मञ्चाः क्रोशन्ति' इत्यत्र शक्यार्थस्य मञ्चस्याचेतनत्वेन कोशनक्रियायामन्वयासम्भवाल्लक्षणया तत्र मञ्चे उपविष्टा ये पुरुषास्तेषां बोधो भवति।

एवं 'ग्रामः पलायितः' इति वाक्ये ग्रामस्याचेतनत्वेन पलायनकर्तृत्वासम्भवात् लक्षणया ग्रामस्था ये पुरुषास्ते पलायिता इत्यर्थस्य बोधः।

ताद्धर्म्यादित्यस्योदाहरणे—सिंहो माणवकः, गौर्वाहीकः। सिंहो माणवक' इत्यत्र यः सिंहः स माणवको नास्ति, यो माणवकः स सिंहो नास्तीति सिंहपदशक्यस्य घातुकवन्यपशुविशेषस्य माणवकेऽभेदेनान्वयासम्भवात् सिंहे ये धर्माः क्रौर्यादिधर्मास्तेषां माणवकेपि दर्शनात् लक्षणया 'सिंहसदृशो माणवक' इति बोधः।

एवं 'गौर्वाहीक' इत्यत्र वाहीके गोवृत्तिजाड्यमान्द्यादिधर्मदर्शनाद् लक्षणया 'गोसदृशो माणवक' इति बोधः।

तत्सामीप्यादित्यस्योदाहरणम्—गङ्गायां घोष इति। तत्र शक्यार्थस्य गंगा-पदवाच्यार्थस्य प्रवाहविशेषस्य घोषेऽवृत्तितयाऽन्वयासम्भवाल्लक्षणया 'गंगातटे घोष' इति बोधो जायते।

तत्सहचर्यादित्योदाहरणम्—'यष्टीः प्रवेशय' अत्र यष्टीनामचेतनत्वेन प्रवेशन-क्रियायामन्वयासम्भवात् तत्सहचरितत्वेन लक्षणया 'यष्टिसहितान् पुरुषान् प्रवेशय' इत्यर्थस्य बोधः सञ्जायते।

तादर्थ्यादित्यस्योदाहरणम्—'स्थूणा इन्द्रः' इति। अत्रेन्द्रपदस्य स्थूणपदार्थ-

स्तम्भेन साकमभेदान्वयासम्भवात् इन्द्रोद्देश्यकयागीयपशुबन्धनोपकारकत्वेन इन्द्रो-परकारकत्वे पर्यवसानात् इन्द्रोपकारके लक्षणया 'इन्द्रोपकारिका स्थूणा' इति बोधो भवति ।

हिन्दी—वह लक्षणा तात्स्थ्य, ताद्धर्म्य, तत्सामीप्य, तत्साहचर्य, तादर्थ्य निमित्त से हुआ करती है—

१. जिस शक्यार्थ का क्रिया में स्वतः अन्वय नहीं हो सके किन्तु उसमें स्थित पदार्थ लेकर अन्वय हो वह तात्स्थ्यनिमित्त है । जैसे—'मञ्चाः क्रोशन्ति' इस वाक्य में अचेतन शक्य मञ्च का आह्वान क्रिया का कर्तृत्व सर्वथा असम्भव है इसलिए मञ्च पद का मञ्चस्थ पुरुष में लक्षणा होती है, यहाँ तात्स्थ्य निमित्त है । तथा 'ग्रामः पलायितः' इस वाक्य से 'गाँव का भागना' अर्थ प्रतीत होता है किन्तु ग्राम तो अचेतन पदार्थ है किस प्रकार भाग सकता है । इसलिए लक्षणा तात्स्थ्य निमित्त से ग्रामस्थ पुरुष में होती है ।

२. जिस शक्यार्थ के धर्म निमित्त को लेकर ही परस्पर पदार्थ में अन्वय सम्भव हो वहाँ ताद्धर्म्य निमित्त है । जैसे—'सिंहो माणवकः' इस वाक्य में सिंह पदार्थ का माणवक में अन्वय सर्वथा असम्भव है । इसलिये सिंह में रहनेवाले क्रूरत्वादिधर्मनिमित्त को लेकर सिंहसदृश में लक्षणा होती है और लक्षणा से 'सिंहसदृश माणवक है' इस अर्थ का बोध होता है, यहाँ ताद्धर्म्य निमित्त है ।

उसी प्रकार 'गौर्वाहीकः' यहाँ पर वाहीक अर्थात् हलवाहे में गो में रहनेवाले जाड्य, मान्द्यादि धर्म लेकर 'गोसदृश वाहीक है' यह अर्थ लक्षणा के द्वारा होता है यहाँ भी ताद्धर्म्य ही निमित्त है ।

३. जिस शक्यार्थ के अन्वय होने में नजदीकी पदार्थ निमित्त हो जाय वहाँ तत्सामीप्य निमित्त से लक्षणा होती है । जैसे—'गङ्गायां घोषः' यहाँ पर शक्य गङ्गापदार्थ प्रवाह विशेष का घोष में अन्वय सर्वथा असम्भव है इसलिए तत्सामीप्य निमित्त से गङ्गातट में लक्षणा होती है, यहाँ तत्सामीप्य निमित्त है अर्थात् गङ्गा के समीप 'तट में गोशाला' है इस अर्थ का बोधक है ।

४. जिस पदार्थ की लक्षणा से साहचर्य निमित्त हो जाता है वह तत्साहचर्य निमित्त है । जैसे—'यष्टीः प्रवेशय' इस वाक्य में यष्टि का प्रवेशन क्रिया में अचेतन पदार्थ होने के कारण अन्वय होना असम्भव है । इसलिए साहचर्य निमित्त से लक्षणा होती है और लक्षणा के द्वारा 'यष्टिसहित पुरुषों को प्रवेश करावें' इस अर्थ का बोध होता है ।

५. जिसके लिए जो पदार्थ हो वही यदि उसके लिए परस्पर निमित्त हो जाय तो वह तादर्थ्य निमित्त कहाता है—जैसे 'स्थूणा इन्द्रः' यहाँ स्थूणा पदार्थ स्तम्भ

इन्द्र में अन्वय असम्भव है। इसलिये इन्द्र के लिये जो यज्ञ में पशुओं का बन्धन होता है उसमें स्तंभ उपकारक है अतः तादर्थ्य निमित्त लेकर लक्षणा के द्वारा 'इन्द्र का उपकारक स्तंभ है' यह अर्थ होता है।

अन्वयाद्यनुपपत्तिप्रतिसन्धानञ्च[1] लक्षणाबीजम्।

वस्तुतस्तु तात्पर्यानुपपत्तिसन्धानमेव तद्बीजम्। अन्यथा गङ्गायां घोष इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताऽप्यन्यथानुपपत्तिपरिहारात्। गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च। अस्माकं तु भूत-पूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः। 'नक्षत्रं दृष्ट्वा वाचं विसृजेद्' इत्यत्रान्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात्। एकानुगम-कस्वीकारेण निर्वाहेऽनेकानुगमकस्वीकारे गौरवाच्च। विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः। वाक्यार्थे किञ्चिदंशत्यागः किञ्चिदंशपरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे ग्रामो दग्धः पटो दग्ध इति व्यवहारः। 'तत्त्वमसि' इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयो-स्त्यागः शुद्धचैतन्ययोरभेदान्वयः।

लक्षणायां बीजं प्रदर्शयति—अन्वयाद्यनुपपत्तीति। अन्वयाद्यनुपपत्तिज्ञानपूर्वक-शक्यसम्बन्धस्मरणोद्बुद्धसंस्कार एव लक्षणायां बीजमिति तत्त्वम्। अन्वयस्य सम्ब-न्धस्य अनुपपत्तिः उपपत्त्यभावो बाध इति यावत्।

वास्तविकं लक्षणायां बीजं प्रदर्शयति—वस्तुतस्त्वित्यादिना। वस्तुतस्तात्पर्ये-ग्राऽनुपपत्तिस्तत्प्रतिसन्धानमेव लक्षणायां बीजमवगन्तव्यमिति भावः। अन्यथा = तात्प-र्यानुपपत्तेर्लक्षणाहेतुत्वास्वीकारे, 'गंगायां घोष' इत्यादौ घोषादिपदे एव मकरादिलक्ष-णापत्तावन्यथानुपत्तिपरिहारः स्यादिति भावः।

अन्वयानुपपत्तेर्लक्षणाबीजस्वीकारे 'गंगायां पापी गच्छती'त्यादौ गंगापदस्य नरके लक्षणयाऽपि तदनुपपत्तिपरिहारसम्भवश्च स्यात्।

अस्माकं वैयाकरणानान्तु पूर्वं भूतं यत्पापं तदवच्छिन्नलक्षकत्वे तात्पर्यसत्वान्नैव कश्चिद् दोषलेशसम्भव इति भावः।

अत्रेदं तत्त्वम्—अन्वयाद्यनुपपत्तेरेव लक्षणाया बीजस्वीकारे लक्षणाजन्यशाब्दबोधे-

---

१. लक्षणायाः शक्यसम्बन्धस्य बीजं ज्ञापकमित्यर्थः। तथापि—गंगायां घोष इत्यादौ प्रवाहादिरूपशक्यार्थोपस्थितौ तत्र अन्वयायोग्यत्वादिना तात्पर्यविषयत्वा-भावे ज्ञाते गंगापदादेः प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादिना स्वशक्यसम्बन्धरूपः सम्बन्धो गृह्यते 'तीरं गंगापदशक्यसंम्बन्धि' इति अनन्तरं तदुपस्थितौ अन्व-यबोध्यत्वादिना तत्र तात्पर्यविषयत्वे निश्चिते तद्विषयकः शाब्दबोधो जायते इति।

ऽन्वयव्यतिरेकाभ्यां मुख्यार्थबाधज्ञानस्य मुख्यार्थसम्बन्धज्ञानस्य च हेतुत्वे, समभिव्याहृतपदतात्पर्य्यविषये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थासंसर्गरूपे बाधे च, छत्रिणो यान्ति, कुन्तान् प्रवेशय, काकेभ्यो दधिरक्ष्यतामित्यादौ छत्रादिमुख्यार्थानां समभिव्याहृतक्रियासु कर्तृत्वादिभिरन्वयस्य बाधाभावे कथं लक्षणाया अवसरः ? किन्तु तदीयतात्पर्यविषये मुख्यच्छत्र्यच्छत्रियान-भोजनार्थप्रवेश-दध्युपघातकावधिरक्षणेषु मुख्यार्थतावच्छेदकरूपेण सर्वथाऽन्वयबाधे लक्षणाया अवसर इति तात्पर्यानुपपत्तिप्रतिसन्धानमेव लक्षणायां बीजमवगन्तव्यमिति ।

नक्षत्रं दृष्ट्वेति । मौनव्रतप्रकरणे 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यत्र क्रियायामन्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव नक्षत्रदर्शनयोग्यकालविशेषे लक्षणाऽन्यथा लक्षणायास्तत्राप्यन्वयाबाधे लक्षणायाः कोऽवसरः ? इति तत्त्वम् ।

ननूभयोर्लक्षणायां बीजस्वीकारे का क्षतिरित्याशङ्कां समाधत्ते—एकानुगमकेति। एकानुगमकस्वीकारेण=एकप्रमाणवचनस्वीकारेण निर्वाहेऽर्थात् तात्पर्यानुपपत्त्यैव लक्षणोपपत्तौ अनेकानुगमकस्वीकारे द्वितीयान्वयानुपपत्तेर्बीजत्वे गौरवादिति भावः।

जहदजहल्लक्षणायाः स्थलं प्रदर्शयति—विशिष्टार्थबोधकेति । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयस्तत्र किल जहदजहल्लक्षणा ।

तत्र वाच्यार्थे किञ्चिदंशत्यागो यथा महिषीयं धेनुरित्यादौ धेनुपदशक्यांशे गोत्वावच्छिन्नस्य त्यागः धनकर्म परिग्रहादभेदोपपत्तिश्च ।

ग्रामैकदेश इति । ग्रामशब्दस्य सारण्यकः ससीमकः सस्थण्डिलकः सगेहसमूहस्य यद्यपि वाच्यस्तथापि गेहमात्रेऽपि दग्धे ग्रामो दग्ध इति व्यवहारः । एवं तन्तुसंयोगावच्छिन्नयथासम्भवैकहस्तादिपरिमाणावच्छिन्नार्थबोधकेऽपि पटपदे अङ्गुलिमात्रेऽप्यवयवे दग्धे पटो दग्ध इति व्यवहारः ।

जहदजहल्लक्षणाया एवोदाहरणम्—तत्त्वमसीति । तत्त्वमसीत्यत्र तत्पदवाच्यस्य सर्वज्ञत्वावच्छिन्ने त्वपदस्य च अल्पज्ञत्वावच्छिन्ने चैतन्ये शक्तिः, एनयोरैक्यायोगादैक्यसिद्ध्यर्थं सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागेन शुद्धचैतन्ययोरभेदान्वयः सिद्ध्यति ।

हिन्दी—अन्वय आदि की अनुपपत्ति अर्थात् असंगति हो जाने पर तत्संगति के लिये प्रतिसन्धान अर्थात् यत्न का अन्वेषण करना ही लक्षणा में बीज है, किन्तु यह ठीक नहीं ।

यथार्थ में तो तात्पर्य की अनुपपत्ति होने पर तत्संगति के लिये प्रतिसन्धान अर्थात् यत्नान्वेषण ही लक्षणा में बीज है नहीं तो 'गंगायां घोषः' इत्यादि स्थलों में घोषादि पदों में ही मकरादि की लक्षणा से अन्वयानुपपत्ति का परिहार सम्भव हो सकता है फिर गंगापद के गंगातट में लक्षणा मानने की क्या आवश्यकता ? किन्तु यह बात नहीं 'शीतल और पवित्र स्थान में गोशाला है' इसमें तात्पर्य है वह तात्पर्य घोष

में मकरादि लक्षणा से नहीं निकल सकता है। इसी प्रकार 'गंगा में पापी जाता है' यहां गंगापद के नरक में लक्षणा होने से भी अन्वयानुपपत्ति का परिहार हो सकता है। किन्तु 'पूर्वजन्म में पाप किया हुआ पुरुष पाप हटाने के लिये गंगा में नहाने जाता है इस तात्पर्य से पापी पद के ही पूर्वजन्मार्जित पापवाला पुरुष में लक्षणा मानी जाती है न कि गंगापद के नरक में। इसी प्रकार 'नक्षत्र देखकर बोलना छोड़ दे' इस मौन व्रत प्रकरणक वाक्य में किसी प्रकार की अन्वयानुपपत्ति नहीं है, किन्तु सन्ध्या समय के बाद रात्रि में बोलना मना है इस तात्पर्य से नक्षत्रदर्शनयोग्यकाल में लक्षणा मानी जाती है। इसलिये अन्वयानुपपत्ति प्रतिसन्धान लक्षणा में बीज नहीं माना जा सकता है किन्तु तात्पर्यानुपपत्ति प्रतिसन्धान ही लक्षणा में वास्तविक बीज है। दोनों को लक्षणा में बीज मानना भी ठीक नहीं, क्योंकि एक अनुगमक प्रमाण वचन से निर्वाह यदि हो जाय तो अनेक प्रमाण वचन मानना महागौरव है। अनेकार्थ बोधक शब्द के पदार्थ के एकदेश में जब लक्षणा मानी जाती है तब वहाँ वृद्ध लोग 'जहदजहल्लक्षणा' से व्यवहार करते हैं। जहाँ वाच्य के एकदेश त्याग कर किसी एकदेश में अन्वय होता है वहाँ जहदजहल्लक्षणा होती है। वाक्यार्थ में किसी अंश का त्याग और किसी अंश का नहीं त्याग करना अर्थात् परिग्रह करना होता है इसीलिये इसका नाम जहदजहल्लक्षणा है।

जैसे ग्राम शब्द यद्यपि जंगल, सीमा, स्थण्डिल तथा गेहसमूह का बोधक है किन्तु गांव के किसी एकदेश के भी जल जाने पर 'गांव जल गया' यह व्यवहार होता है।

इसी प्रकार पटशब्द यद्यपि तन्तुसंयोगावच्छिन्न किसी विस्तृत शाटी ( साड़ी ) वगैरह का बोधक है, किन्तु किसी पट के एकदेश के भी जल जाने पर 'कपड़ा जल गया' यह व्यवहार होता है।

'तत्त्वमसि' इसी जीव और ब्रह्म का एक्यबोधक वाक्य में तत्-पद सर्वज्ञत्व का और त्वं-पद अल्पज्ञत्व का जब बोधक है तब दोनों की एकता किस प्रकार हो सकती है! इसलिये एकता के लिये सर्वज्ञत्व-अल्पज्ञत्व का त्याग है और शुद्धचैतन्य का परिग्रह है इसलिये अभेदान्वय होता है।

स्वबोध्यसम्बन्धो लक्षणेति केचित्। गभीरायां नद्यां घोष इत्याद्यनुरोधात्। तथाहि—न तावद् गभीरपदं तीरलक्षकं, नद्यामित्यनन्वयापत्तेः। नहि तीरं नदी, अत एव न नदीपदेऽपि, गभीरपदार्थानन्वयात्, न हि तीरं गभीरम्। न च प्रत्येकं पदद्वये सा, विशिष्टनदीबोधानापत्तेः। तस्मात्समुदायबोध्यगभीरत्वविशिष्टनदीपदार्थः, तत्सम्बन्धो लक्षणेति। द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणायां लक्षितलक्षणेति व्यवहारः। स्वबोध्यपदवाच्यत्वं सम्बन्धः।

मीमांसकमतं दर्शयितुमुपक्रमते—स्वबोध्येति। केचित्=मीमांसकाः 'स्वबोध्यसम्बन्धो लक्षणा' इति हि लक्षणाया लक्षणम्, आहुरित्यग्रिमक्रियायामन्वयः। स्वं वाक्यं तेन बोध्यः ज्ञाप्यः यः सम्बन्धः सैव लक्षणा। गभीरायां नद्यामिति वाक्यस्य बोध्यः यः सम्बन्धः 'गभीराभिन्ना नदी' इति, स सम्बन्धस्तीरेऽस्तीति लक्षणसमन्वयः। न हि तावद् गभीरपदस्य तीरे लक्षणा, नद्यामित्यत्रान्वयानापत्तेः। न हि तीरमेव नदी, गभीरतीरे नद्यामित्यर्थासम्भवात्। नदीपदेऽपि न लक्षणा। नदीपदेन नदीतीरग्रहणे गभीरसामानाधिकरण्यासम्भवात् समानविभक्तिकनामार्थयोरभेदान्वयव्युत्पत्तेर्गभीरपदबोध्यताहशतीरस्य नदीपदार्थे प्रवाहविशेषेऽभेदान्वयानापत्तेरिति तात्पर्यम्। प्रत्येकं पदद्वयेऽपि नैव लक्षणा 'गभीराभिन्नायां नद्यां घोषः' इति विशिष्टबोधानापत्तेः। तस्माद् हेतोः समुदायबोध्यः समुदायज्ञाप्यः गभीरत्वविशिष्टः नदीपदार्थः तेन साकं सम्बन्ध एव लक्षणेति।

लक्षितलक्षणाया उदाहरणं प्रदर्शयति—द्विरेफपदस्येति। यत्र किल शक्यपरम्परासम्बन्धे नार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा। यथा द्विरेफपदस्य द्वौ रेफौ यस्मिन्निति बहुव्रीहिणा रेफद्वये शक्तस्य भ्रमरपदघटितपरम्परासम्बन्धेन मधुकरे वृत्त्या द्विरेफपदबोध्यं यद् भ्रमरपदं तद्वाच्यत्वस्य पुष्परसास्वादकर्तृकृष्णवर्णपतंगे सत्त्वाल्लक्षितलक्षणेति व्यवहारः। लक्षितस्य लक्षणा लक्षितलक्षणेति समासः। सम्बन्धश्चात्र स्वबोध्यपदवाच्यत्वम्।

शक्यसम्बन्ध एव लक्षणा नतु शक्यस्य साक्षात्सम्बन्धो लक्षणा गौरवात्। तथा च परम्परासम्बन्धेन भ्रमरोपस्थापकत्वाद् द्विरेफपदस्य भ्रमरे वृत्तिः। एवं च लक्षितपदघटितलक्षणा लक्षिते लक्षणेति परेषां मतम्।

हिन्दी—स्वबोध्यसम्बन्ध ही को लक्षणा मीमांसक मानते हैं—अर्थात् जिस वाक्य में लक्षणा करनी हो वही स्वपद से लिया जाता है जैसे 'गहरी नदी में घोष है' इस वाक्य से बोध्य जो सम्बन्ध वही लक्षणा है। लक्षणा के द्वारा 'गभीराभिन्न नदी में घोष है' इस विशिष्टार्थ का बोध होता है।

गभीर पद के तीर में लक्षणा नहीं मानी जा सकती क्योंकि नदी में अन्वय नहीं हो सकता। तीर ही नदी नहीं हो सकती इसलिये नदीपद में भी लक्षणा नहीं होती है क्योंकि गभीरपदार्थ का अन्वय नहीं हो सकता है, इस लिये कि तीर तो गहरी नहीं है। एक-एककर गभीर और तीर दोनों में भी लक्षणा नहीं हो सकती, क्योंकि गभीरत्व विशिष्ट नदी का बोध नहीं होगा। इसलिये वाक्यसमुदाय बोध्य गभीरत्व विशिष्ट नदी पदार्थ है और उसका सम्बन्ध लक्षणा है।

जहाँ पर शक्य के परम्परासम्बन्ध से अन्य अर्थ की प्रतीति होती है वहाँ लक्षितलक्षणा होती है। जैसे—द्विरेफपद। दो रेफ जिसमें हो उसे द्विरेफ कहते हैं किन्तु

शक्यार्थं भ्रमर में नहीं घटता क्योंकि दो रेफ उसमें नहीं होता, इसलिये लक्षित लक्षणा के द्वारा द्विरेफ पद पुष्परसास्वाद करनेवाले भौंरे का बोधक है।

प्रकारान्तरेण पुनर्लक्षणा द्विविधा। तथा हि—

**प्रयोजनवती रूढा लक्षणा द्विविधा मता। इति।**

असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा। त्वचा ज्ञातमित्यादौ यथा त्वचस्त्वगिन्द्रियं। इयं तु शक्त्यपरपर्यायैवेति बोध्यम्। गङ्गायां घोष इत्यत्र तीरे गङ्गागतशैत्यपावनत्वादिप्रतीतिः प्रयोजनम्। गौर्वाहीक इत्यत्र सादृश्यं लक्ष्यतावच्छेदकं गवाभेदप्रत्ययः प्रयोजनम्। कुन्ताः प्रविशन्तीति भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमित्याहुः।

तन्न। सति तात्पर्ये 'सर्वे सर्वार्थवाचका' इति भाष्याल्लक्षणाया अभावात्। वृत्तिद्वयावच्छेदकद्वयकल्पने[1] गौरवात्[2]। जघन्यवृत्तिकल्पनाया अन्याय्यत्वाच्च। कथं तर्हि गङ्गादिपदात्तीरप्रत्ययः। भ्रान्तोऽसि, सति तात्पर्ये 'सर्वे सर्वार्थवाचका' इति भाष्यमेव गृहाण।

प्रकारान्तरेणेति। प्रकारान्तरेण=कविसम्प्रदायप्रसिद्धप्रकारेण, प्रयोजनवती-रूढा-भेदाभ्यां लक्षणाया द्वैविध्यम्। असति प्रयोजने शक्यार्थबाधप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधेऽनादितात्पर्यवती लक्षणा शक्यापरपर्याया निरूढा (प्रसिद्धा) लक्षणा। तद्यथा—त्वचा ज्ञातमित्यादौ त्वचस्त्वगिन्द्रिये रूढिलक्षणया त्वगिन्द्रियजन्यज्ञानीयविषयतावदिदमिति शाब्दबोधः।

एतल्लक्षणाद्वये दर्पणकारवचनम्—

मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते।
रूढेः प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता॥' (सा. द. २.५)

---

१. अयं भावः—प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादौ गङ्गापदादेः 'सर्वे सर्वार्थवाचकाः' इति भाष्यात् सामान्यतः पूर्वमेव ज्ञात शक्तिरूपः सम्बन्ध एव कल्पनीयो, न तु शक्यसम्बन्धरूपः। तथा सति तयोरुभयोः शाब्दबोधजनकपदार्थोपस्थितिजनकपदपदार्थसम्बन्धरूपं शाब्दबोधजनकपदपदार्थसम्बन्धत्वरूपं वा वृत्तित्वं कल्पनीयम्, शाब्दबोधकारणतावच्छेदकत्वम् उपस्थितिकारणतावच्छेदकत्वं च शक्तित्वशक्यसम्बन्धत्वयोरुभयोः कल्पनीयम्, इति गौरवम्। शक्तिकल्पनापक्षे तु तस्या एक वृत्तित्वकल्पनं, तत्त्वस्यैव च तत्तदवच्छेदकत्वकल्पनमिति लाघवम्। तन्मते अन्यदपि गौरवं भूषणादौ स्पष्टं प्रतिपादितं तत् तत एवावगन्तव्यम्। व्यवहारादिना गङ्गापदादौ तीरादिशक्तेः पूर्वं विशेषरूपेणाग्रहेण *प्रसिद्धत्वात् लक्षणापदेन व्यवहार इति बोध्यम्।

२. अन्याय्यत्वादिति। पूर्वोपस्थितशक्तिसम्बन्धस्य वृत्तित्वकल्पनमुपेक्ष्य पश्चादुपस्थिततद्घटितसम्बन्धस्य वृत्तित्वकल्पनाया अनुचितत्वादित्यर्थः।

प्रयोजनवत्या द्वितीयमुदाहरणम्— गौर्वाहीक इति। अत्रोदाहरणे लक्ष्यतावच्छेदकसाहस्र्येन गवाभेदप्रत्ययप्रयोजनसिद्धये प्रयोजनवती लक्षणा।

प्रयोजनवत्या लक्षणायास्तृतीयमुदाहरणम्— कुन्ताः प्रविशन्तीति। अत्र भीतिपलायनवाक्ये कुन्तविशिष्टपुरुषे कुन्तगतं यत् तैक्ष्ण्यं तत्प्रतीतिप्रयोजनसिद्धये प्रयोजनवती लक्षणा इति केचन मीमांसका आहुः।

इत्थं मीमांसकमतं प्रदर्श्य खण्डयति—तन्नेत्यादिना। अत्रेदं तत्वम्—सति तात्पर्य्ये 'सर्वे सर्वार्थवाचकाः' एतद्भाष्यपर्यालोचनया सर्वशब्दानां सर्वार्थवाचकत्वे लक्षणाया आवश्यकतैव नास्ति। बोधजनकत्वरूपे वाचकत्वे लक्षणयाऽर्थबोधकेऽपि समानत्वात्। एकवृत्यैव कार्यनिर्वाहे अनेकवृत्तिकल्पनाया अन्याय्यत्वात्। 'अवच्छेदकभेदे शक्तिभेद' इति तार्किकसिद्धान्ते वृत्तिद्वयावच्छेदककल्पने गङ्गायां घोष इत्यत्र गंगापदस्य प्रवाहादिसम्बन्धित्वेन उपस्थिततीरादौ शक्यसम्बन्धरूपलक्षणास्वीकारे शाब्दबोधजनकपदार्थोपस्थितिजनकपदपदार्थसम्बन्धत्वरूपस्य वृत्तित्वकल्पने शाब्दबोधकारणतावच्छेदकत्वस्य, उपस्थितिकारणतावच्छेदकत्वस्य च कल्पने महागौरवाच्च।

मम मते शक्तिकल्पनापक्षे तु तस्या एव वृत्तित्वकल्पने, तत्त्वस्यैव च तत्तदवच्छेदकत्वकल्पने महल्लाघवम्। अत्रेदमाकूतम्—लक्षणाङ्गीकारे शक्तिजन्योपस्थितिमन्तरेणापि शक्तिजन्या या उपस्थितिस्तस्याः शाब्दबोधसम्भवेनान्योन्यं व्यभिचारस्तद्वारणाय चाव्यवहितांशनिवेशोऽनन्तकार्य्यकारणभावस्वीकारे च गौरवमेकम्। पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुत्वकल्पने गौरवं द्वितीयम्। इत्यनन्तगौरवप्रसक्तत्वेन लक्षणायाः शक्तिरेवैका लाघवान्मन्तव्येति वैयाकरणसिद्धान्तः।

जघन्येति। शक्त्यैव कार्य्यनिर्वाहे वृत्तिद्वयकल्पनं जघन्यमिति जघन्यवृत्तिकल्पनाया अन्याय्यत्वमिति भावः।

'कथन्तर्हि गङ्गादिपदात् तीरप्रत्ययः' इति तु तव केवलं भ्रान्तिः, सति तात्पर्य्ये 'सर्वे सर्वार्थवाचकाः' इति भाष्यपर्यालोचनया पूर्वोपस्थितशक्तिसम्बन्धस्यैव वृत्तित्वकल्पनस्यौचित्यात्।

हिन्दी—वह लक्षणा प्रकारान्तर से अर्थात् कविसम्प्रदाय-प्रसिद्ध प्रकार से दो प्रकार की है—एक निरूढा, दूसरी प्रयोजनवती।

किसी भी प्रयोजन नहीं रहने पर शक्यसम्बध को रूढा लक्षणा कहते हैं अर्थात् शक्यार्थ के बाध होने पर तत्प्रतिसन्धानपूर्वक तत्सम्बन्धी दूसरे अर्थ के बोध में अनादितात्पर्यवाली रूढा (प्रसिद्धा) लक्षण कही जाती है। जिसका दूसरा नाम शक्ति भी है। जैसे—'त्वचा ज्ञातम्' यहाँ त्वक्पद के त्वगिन्द्रिय में रूढा लक्षणा है।

प्रयोजनवती लक्षणा कुछ प्रयोजन रहने ही पर होती है और उसके तीन उदाहरण हैं—

प्रथम 'गंगायां घोष:' यह उदाहरण है, यहाँ गंगा में जो शैत्य-पावनत्व धर्म है उसकी प्रतीति कराना ही प्रयोजन है इसलिये यहाँ गंगापद के गंगातट में प्रयोजनवती लक्षणा है।

दूसरा उदाहरण जो 'गौर्वाहीक:' है, यहाँ गोलक्ष्यतावच्छेदक जो जाड्य-मान्द्यादि सादृश्य धर्म है वह वाहीक हलवाहे में भी है इसलिये गो से अभेद बोध करना ही प्रयोजन है अत: यहाँ भी प्रयोजनवती लक्षणा है।

तीसरा उदाहरण जो दिखाया गया है 'कुन्ता: प्रविशन्ति' इस भीतिपलायन वाक्य में अर्थात् युद्ध में पराजित होकर मरण के भय से भागकर घर में प्रवेश करते हुए कुन्तास्त्र सहित पुरुषों के वाक्य में अचेतन कुन्तास्त्र का प्रवेक्रिया में अन्वय असम्भव है अत: कुन्तगत तीक्ष्णत्व-प्रतीति कराने के लिये कुन्तपद के कुन्तास्त्र सहित पुरुष में प्रयोजनहेतुका लक्षणा की जाती है।

ये मीमांसक के मत हैं। किन्तु यह मत ठीक नहीं क्योंकि 'तात्पर्य रहने पर सभी सभी अर्थ के वाचक हैं' इस भाष्य-वल से लक्षणा की आवश्यकता ही नहीं है, और यदि एक ही वृत्ति से कार्य निर्वाह हो जाय तो दो वृति में दो अवच्छेद-कत्व कल्पना करने में वहुत गौरव होगा। क्योंकि पूर्व उपस्थित शक्ति सम्बन्ध का वृत्तित्व कल्पना को छोड़कर दो वृत्ति की कल्पना जघन्य है। इसलिए जघन्यवृत्ति की कल्पना अनुचित है।

यदि यह कहें कि लक्षणा नहीं मानेंगे तो गंगादि पद से तीर का वोध किस प्रकार होगा? तो यह भ्रम है क्यों कि भाष्यकार ने तो तात्पर्य रहने पर सभी शब्दों का सर्वार्थवाचक वताया है इसलियें गंगादिपद से तीर का वोध क्यों नहीं हो सकता!' इस प्रकार तार्किक मत खण्डन कर नागेश ने शक्ति वृत्ति ही को स्थित पक्ष माना है।

तथाहि—शक्तिर्द्विविधा—प्रसिद्धाऽप्रसिद्धा च। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्। सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रसिद्धेति किमनुपपन्नम्।

ननु 'सर्वे सर्वार्थवाचका' इति चेद् ब्रूपे तर्हि घटपदात्पटप्रत्ययः किन्न स्यादिति चेन्न। सति तात्पर्ये इत्युक्तत्वात्तात्पर्याभावादिति गृहाण। तात्पर्यं चात्र ऐश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदादिभिर्लब्धमिति सर्वं सुरुद्म्।

इति लक्षणानिरूपणम्।

---

तथाहीति। वैयाकरणमते शक्तेरेव द्वैविध्यम्, नतु लक्षणायाः स्वीकारः। त
आमन्दबुद्धिवेद्यात्वम्=सकलजनज्ञेयात्वम् प्रसिद्धात्वम् 'केवलसहृदयहृदयेनैव वेद्यात्व
अप्रसिद्धात्वम्' तत्र=प्रसिद्धाऽप्रसिद्धयोः, 'गंगायां घोषः' इत्यत्र गंगादिपदाना
प्रवाहादौ या शक्तिः सा प्रसिद्धा, तीरादौ या शक्तिस्साऽप्रसिद्धा, इति एवं शक्तेरे
केवलं स्वीकारे किम् अनुपपन्नम् किन्न समीहितं सिद्धमिति भावः।

भाष्यसिद्धान्ते सन्दिहानं मीमांसकं प्रत्याह—नन्वित्यादिना। यदि सर्वे
सर्वार्थवाचकत्वम् तदा घटपदात्पटबोधः कुतो न? इति मीमांसकसन्देहः, स च सन्देह
चेन्नेत्यादिना निराक्रियते—सर्वे सर्वार्थवाचका इति भाष्ये सति तात्पर्य्यं इत्यु
त्वात् पटे तात्पर्याभावात् घटपदात् पटप्रत्ययो न भवतीति तात्पर्य्यम्। तच्च तात्प
र्यम् ऐश्वरम्=ईश्वरोद्भावितम्, अस्मदादिभिश्च देवताभ्यः महर्षिभ्यः, वृद्धवरम्परात
लब्धम्. इति एवं सर्वं वस्तु सुरूढम्=सुप्रसिद्धम्।

अत्रेदं तत्वम्—यदर्थे यत्पदं प्रसिद्धं तदर्थे तत्पदवाच्यत्वं तदर्थवाचकत्व
तत्पदस्येष्यते। तत्पदादेव जायमानस्तदर्थबोधो मुख्यो भवतीति नियमेन प्रसिद्धै
शक्तेर्वाचकभावनियामिकात्वात् घटपदं पटवाचकमिति व्यवहारो नैव जायते।
तस्मात् तदर्थंनिरूपितप्रसिद्धशक्तिमत्वं तदर्थवाचकत्वम् तत्पदनिष्ठप्रसिद्धशक्तिनिरू
कत्वं तत्पदवाच्यत्वमिति फलितम्।

हिन्दी—वैयाकरण-सम्मत शक्ति भी दो प्रकार की है—एक प्रसिद्धा, दूसरी
अप्रसिद्धा। मन्दबुद्धि तक जानने योग्य शक्ति प्रसिद्धा शक्ति है, जो केवल सहृदय लो
से हा वेद्य हो वह अप्रसिद्धा शक्ति है। उनमें गंगायां घोषः' इस स्थल में गंगा
पद के प्रवाह आदि में जो शक्ति है वह प्रसिद्धा शक्ति है, तीरादि में जो शक्ति
वह अप्रसिद्धा शक्ति है। लक्षणा की कोई आवश्यकता नहीं। तो इस प्रकार क
अनुपपन्न अर्थात् क्या अनिष्ट होने पाता है! कुछ नहीं।

यदि मीमांसक यह कहें कि सब यदि सर्वार्थवाचक हैं तो घट पद से पट
बोध क्यों नहीं होता! तो यह कहना ठीक नहीं क्योंकि कुछ तात्पर्य रहने पर
सर्वार्थ का वाचक हो सकता है, यहाँ घट पद का पट में तात्पर्य नहीं है इसलिये
पद से घट का बोध हो सकता है और वह तात्पर्य ईश्वर का ही यहाँ प्रा
है, उस तात्पर्य को हमलोगों ने देवता, महर्षि तथा लोकपम्परा से प्राप्त किया है
इसलिये सभी वस्तु सुप्रसिद्ध हैं। एक भी कपोलकल्पित नही हैं।

इति लक्षणाविचारः समाप्तः।

—०—

# अथ व्यञ्जनानिरूपणम्

ननु व्यञ्जना कः पदार्थः? उच्यते। मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति। वैयाकरणानामप्येतत्स्वीकार आवश्यकः। एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादि[1]-वैशिष्ट्यज्ञानं च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः।

व्याकरणस्य सर्वशास्त्रोपकारकत्वादालङ्कारिकसमयप्रसिद्धां तृतीयां व्यञ्जनामपि वृत्तिं निर्वक्तुमुपक्रमते प्रश्नमुखेन—नन्विति। आलङ्कारिकैर्हि 'तिस्रः शब्दस्य शक्तयः' इत्यादिनाऽभिधा-लक्षणा-व्यञ्जनास्तिस्रः शक्तय उक्तास्तत्र लोकप्रसिद्धं मुख्यमर्थं या बोधयति सा मुख्याऽभिधा वृत्तिः, यथा गङ्गायां घोष इत्यत्र गङ्गापदात् प्रवाहविशेषं मुख्यमर्थम्। गङ्गापदात् प्रवाहसमीपदेशं तीरं या बोधयति सा द्वितीयाऽप्रसिद्धा लक्षणा। अस्याश्च मुख्यार्थबाध एव प्रसारः। या च मुख्यार्थस्य बाधेऽबाधे वा मुख्यार्थविशिष्टमर्थान्तरं बोधयित्वा वक्तृविशिष्टत्वप्रतिभादिकमपेक्षते सा व्यञ्जना वृत्तिः। तत्र कः व्यञ्जनापदार्थः। इत्यपेक्षायामाह—मुख्यार्थबाधेति। मुख्यार्थबाधनिरपेक्षबोधजनकः, मुख्यार्थबाधनिरपेक्षः मुख्यार्थबाधापेक्षारहितो यो बोधस्तज्जनकः, एतेन लक्षणावद् व्यञ्जनायां मुख्यार्थबाधस्यापेक्षा नास्तीति व्यज्यते। 'निश्शेषच्युतचन्दनं स्तनतटम्' इत्यादौ मुख्यार्थबाधाभावेऽपि अधमपदार्थपर्यालोचनया व्यङ्ग्यार्थप्रतीतेर्दर्शनात्। मुख्यार्थसम्बन्धासम्बन्धसाधारणः, मुख्यार्थस्य सम्बन्धोऽसम्बन्धो वा तदुभयसाधारणः, लक्षणा तु मुख्यार्थसम्बन्धाभावान्न भवति, इयन्तु तत्सम्बन्धाभावेऽपि भवतीति लक्षणातोऽस्या वैलक्षण्यम्। प्रसिद्धाप्रसिद्धार्थविषयकः, लक्षणा तु रूढेरेव सत्वे भवति, इयन्तु रूढेरभावेऽपि भवतीति लक्षणातोऽस्या भेद इति तात्पर्यम्।

---

१. वक्त्रादयश्च वक्तृबोद्धव्यकाकुवाक्यवाच्यान्यसन्निधिदेशकालप्रस्तावचेष्टादयः। प्रस्तावः प्रकरणम्, इतरे प्रायः प्रसिद्धाः। ते चेमेऽर्थशक्तिमूलव्यञ्जनयाऽर्थावबोधे सहकारिण इति केचित्। अपरे तु शब्दशक्तिमूलव्यञ्जनास्थलेऽप्येषां सहकारिता। अत एव स्यालकादिना प्रयुक्ते 'सुरभिमांसं भवान् भुङ्क्ते' इति वाक्येऽश्लीलार्थान्तरप्रतीतिः न तु गुर्वादिप्रयुक्ते इत्याद्यन्यत्र विस्तरः।

वक्त्रादीति । वक्त्रादीनां यद्वैशिष्ट्यं तस्य ज्ञानेन 'प्रतिभया च उद्बुद्धो यः संस्का
स संस्कारविशेषः व्यञ्जना उच्यते ।

अत एव=पूर्वोक्तसंस्कारविशेषस्य व्यञ्जनायाः स्वीकारादेव, निपाता
द्योतकत्वम् अर्थात् व्यञ्जकत्वम्, तेषां मुख्यार्थाभावेन लक्षणाया असम्भवात् । स्फो
स्य व्यङ्ग्यता च, तत्रापि लक्षणाया नितरामसम्भवः । हर्य्यादिभिराचार्य्यैरुक्त
द्योतकत्वञ्चेति । स्वसमभिव्याहृतं यत्पदं तत्पदनिष्ठा या शक्तिस्तस्या व्यञ्जकत्व
केवलमालङ्कारिकाणामेव व्यञ्जना नाऽऽवश्यकी किन्तु वैयाकरणानामपीति दर्शयति
वैयाकरणानामपि एतत्स्वीकारात् व्यञ्जनायाः स्वीकार आवश्यकः, द्योतकत्व
व्यञ्जकत्वस्यैव स्वरूपत्वात् । अभिधालक्षणाभ्यां व्यञ्जनाया वैलक्षण्यं प्रदर्शयति
एषा त्विति । अभिधालक्षणे पदवाक्ययोरेव भवतः । एषा तु पदे पदैकदेशे वा
वाक्यैकदेशे वाक्यसमूहे चेति विशेष इति भावः । वक्त्रादीति । वक्त्रादयश्च वक्तृबोद्धव्य
काकुवाक्यवाच्यान्यसन्निधिदेशकालप्रस्तावचेष्टादयस्तद्वैशिष्ट्यज्ञानञ्च व्यङ्ग्यविशेष
बोधे सहकारीति न सर्वत्र स्थले तदपेक्षेति अन्यत्र गुरुमञ्जूषादौ विस्तरेण प्रपञ्चित

हिन्दी—व्यंजना कौन पदार्थ है, इस प्रश्न का उत्तर देते हैं—मुख्यार्थ
की अपेक्षा के बिना ही ज्ञान उत्पन्न करने वाला, मुख्यार्थ के सम्बन्धाऽसम्बन्ध
अर्थों का साधारण, प्रसिद्धाऽप्रसिद्ध दोनों अर्थों का ज्ञापक, वक्ता आदि की विशे
के ज्ञानजनक तथा प्रतिभा आदि से जगा हुआ भावनाविशेष ही 'व्यंजना'
अतएव भर्तृहरि आदि प्राचार्यों ने 'निपातानां द्योतकत्वम्' अर्थात् निपातों
द्योतक और स्फोट को व्यंजक ( व्यंजना ) कहा है ।

द्योतकता क्या है, इसका समाधान करते हैं—'द्योतकत्वं चे'ति अर्थात् अपेक्षा
नियत पूर्ववर्ती एवं नियत परवर्ती पद में स्थित शक्ति का व्यंजन ( प्रकाशित
करना ही द्योतकता है । वैयाकरणों को भी व्यंजना स्वीकार करना आवश्यक है।

यह व्यंजना—शब्द, शब्दार्थ, पद, पदैकदेश, वर्ण, रचना, चेष्टा ( मुख,
कटाक्ष ) आदि सभी स्थलों में रहती है । क्योंकि ऐसा ही अनुभव होता है ।

वक्ता आदि की विशेषता का ज्ञान व्यंग्य विशेष में सहकारी है । इसीलिए
व्यंग्यों में उसकी अपेक्षा नहीं है । यह अन्य ( लघुमंजूषादि ) ग्रन्थों में सुवि
रूप से वर्णित है ।

यत्तु तार्किकाः लक्षणयैव गतार्था व्यञ्जनेति न सा स्वीकार्येत्याहुः ।

तन्न । लक्षणाया मुख्यार्थबाधपूर्वकलक्ष्यार्थबोधकत्वात् । मुख्यार्थस
द्धार्थस्यैव लक्षणाया बोधकत्वात् व्यञ्जनाया अतथात्वेन तदनन्तर्भा
च्चेति दिक् ।

इति व्यञ्जनानिरूपणम्

—०—

व्यंजनावृत्तिमनङ्गीकुर्वतां तार्किकाणां मतं प्रदर्श्यं खण्डयति नागेशः—यत्त्विति।
'गङ्गायां घोष' इत्यादौ 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन जल-प्रवाहाद्यर्थमात्रबोधनादभिधायां विरतायां, तटाद्यर्थमात्रबोधनाल्लक्षणायाञ्च विरतायाम्, अन्वयबोधमात्रेण तात्पर्याख्याञ्चवृत्तौ विरतायां तासां वस्त्वलङ्काररसादिबोधनेऽक्षमत्वात् शीतत्वपावनत्वादिव्यङ्ग्यमर्थं बोधयितुं व्यंजनावश्यमङ्गीकर्तव्येति आलंकारिकाणां मतम्।

परमेतन्मतं तार्किका इत्थं खण्डयन्ति—'दूरस्था भूधरा रम्या' इत्यादौ नानार्थकव्यञ्जकस्थले भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिसम्भवे, 'गंगायां घोषः' इत्यादौ च शीतत्वपावनत्वादिविशिष्टतीरस्यापि लक्षणयैव प्रतीतिसम्भवे, शक्तिलक्षणान्तर्भूताया व्यञ्जनायाः शब्दशक्तिमूलार्थशक्तिमूलयोर्भेदयोः शब्दशक्ति-मूलिकाया व्यञ्जनाया अनुमानादिना अन्यथासिद्धत्वेऽपि—

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥"

इत्यादौ 'हे प्रिय भवद्गमनोत्तरं मम प्राणवियोगो भविष्यति। अतो न गन्तव्यम्' इत्याद्यर्थस्यापि 'इयं मदीयगमनोत्तरकालिकप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्' इत्यनुमानेनैव स्वीकार्येति तार्किका आहुः।

परमेतत्तार्किकमतं नागेशमतेऽकिञ्चित्करं प्रतिभाति। मुख्यार्थबाधपूर्वकं लक्षणाया लक्ष्यार्थबोधकत्वात्। मुख्यार्थसम्बद्धमेवार्थं लक्षणा बोधयितुं प्रभवति व्यञ्जना तु न अपेक्षते लक्षणया कथं व्यंजनाया गतार्थत्वम्।

हिन्दी—तार्किकों ने जो यह कहा है कि 'लक्षणा ही से व्यञ्जना गतार्थ है अतः व्यञ्जना नहीं माननी चाहिये' यह भी ठीक नहीं क्योंकि लक्षणा तो मुख्यार्थ के बाध होने पर ही लक्ष्यार्थ का बोधक है तथा मुख्यार्थ-सम्बद्ध ही अर्थ को लक्षणा बोध कराती है, किंतु व्यञ्जना तो चाहे मुख्यार्थ का बाध हो या नहीं दोनों हालत में बोध कराती है, तथा मुख्यार्थ से सम्बद्ध अर्थ या असम्बद्ध अर्थ दोनों को बोध कराती है इसलिए लक्षणा से व्यञ्जना का गतार्थ कभी नहीं हो सकता।

इति व्यञ्जनाविचारः समाप्तः।

—०—

# अथ स्फोटनिरूपणम्

ननु कोऽयं वृत्त्याश्रयः शब्दः। वर्णाः प्रत्येकमिति चेद्, न। द्वि
वर्णोच्चारणवैयर्थ्यापत्तेः। नापि वर्णसङ्घातः। उच्चरितप्रध्वंसित्वेन यौ
सम्भवात्। अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात्क्षणात्मककालस्य प्रत्यक्ष
त्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात्। उच्चारणाधिकरणकालोत्तरक्ष
ध्वंसप्रतियोगित्वमुच्चरितप्रध्वंसित्वम्। 'इको यणचि' इत्यादौ
इतिपरिभाषोपस्कृतवाक्यार्थेऽयं पूर्वोऽयं पर इति नष्टस्य प्रत्यक्षविषय
पौर्वापर्यव्यवहारायोगाच्च।

अष्टसु स्फोटेषु कः स्फोटो युक्त इत्यपेक्षायामाह—नन्विति। शाब्दबो
वृत्तिमत्पदज्ञानस्यैव हेतुत्वेन कीदृक्शब्दे शक्तिर्लक्षणा वा स्वीक्रियते इति। प्रश्न
सिद्धान्तविवेचनपुरस्सरं वर्णस्फोटं द्वेधा खण्डयितुमुपक्रमते— वर्णा इति। घटा
रम्भकघकारादयो वर्णा एव कम्बुग्रीवादिमदाद्यर्थनिरूपितवृत्तिमन्त इति ता
प्रत्येकं वर्णानां तत्तदर्थनिरूपितवृत्तिमत्वस्वीकारे द्वितीयादिवर्णोच्चार
प्रसंगोऽर्थात् शीघ्रोपस्थितिकत्वेनान्तरङ्गेषु आद्यवर्णेष्वेव वृत्तिस्वीकारेणान्य
पत्तावन्येषां वर्णानां वैयर्थ्यं स्यादिति तात्पर्यम्। नापि वर्णसंघात इति।
मुत्पत्तिविनाशशालित्वेन अनित्यत्वात् उत्तरोत्तरवर्णस्थितिलक्षणे पूर्वपू
स्थित्यसम्भवेन वर्णसमुदायरूपपदस्यासम्भवेन शक्ततावच्छेदकानुपूर्व्यज्ञानात्
नुमातुमशक्यत्वमिति भावः। क्षणस्थायित्वादिति। क्षणशब्देन तदाधा
ग्रहणम्। शब्दतन्मात्राद्वारा प्रकृतेर्यः परिणामविशेषः स एव क्षण उच्यते।
रूपकालस्य न प्रत्यक्षत्वम्। अतिसूक्ष्मत्वात् किन्तु तत्समूहरूपकाल एवेति
प्रत्यक्षविषयेदंशब्देन=प्रत्यक्षविषयो य इदंशब्दस्तद्विषयो योऽयं पूर्व
भिलापस्तेन। पौर्वापर्येति—पौर्वापर्यस्य व्यवहारो ज्ञानन्तदयोगात् तदसम्भवा
एकैकवर्णवर्तिवागिन्द्रियमेकमेव वर्णमुच्चारयितुं शक्नोति ननु द्वौ वर्णौ। उच्च
वर्णस्तत्क्षणमेव नश्यतीति पौर्वापर्यस्य नितरामसम्भव इति तत्त्वम्।

हिन्दी—शाब्दबोध में वृत्तिमत्पद का ज्ञान ही कारण हुआ करता है
वृत्ति का आश्रय शब्द-कौन है। इसका विवेचन करते हैं—ननु इत्यादि ग्रन्थों
उनमें प्रत्येक वर्ण अर्थात् वर्णस्फोट वृत्ति का आश्रय नहीं हो सकता, क्योंकि
उपस्थित होने के कारण अन्तरंग आद्यवर्ण ही में वृत्ति मान लेने से अर्थ
जायगा। द्वितीय-तृतीयादि वर्णों का उच्चारण व्यर्थ हो जायगा। वर्ण
भी अर्थात् पदस्फोट भी वृत्ति का आश्रय नहीं हो सकता, क्योंकि

उच्चारण के बाद नष्ट हो जाते हैं इसलिए अनित्य हैं और उत्तर-उत्तर वर्णों की
त्ति क्षण में पूर्व-पूर्व वर्णों की स्थिति असम्भव है तो वर्णसमुदाय रूप पद भी
कालावच्छेदेन असम्भव है इसलिए वर्णसमुदाय भी वृत्ति का आश्रय नहीं हो
ता क्योंकि वर्णों की उत्पत्ति या अभिव्यक्ति (प्रकाशमानता) क्षण ही भर
नेवाली है, और क्षणात्मक काल का प्रत्यक्ष नहीं होने पाता इसलिए तदवच्छिन्न
ति तत्काल में उत्पन्न वर्ण का भी प्रत्यक्ष होना असम्भव है। क्योंकि उच्चरित
ध्वंसित्व का लक्षण यह है कि—जिस अधिकरण में उच्चारण किया जाय उस
चारणाधिकरण काल के बाद उसकी स्थिति या उसका विनाश नहीं हो किन्तु
गल विनाश हो जावे अर्थात् उच्चारण होते ही जिसका विनाश हो उसी को
चरितप्रतिध्वंसित्व कहते हैं।

'इको यणचि' इत्यादि स्थलों में 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यादि परि-
षाओं के बल से 'अजव्यवहितपूर्वत्वविशिष्टस्येको यण् स्यात्' इत्यादि वाक्यार्थ
त हो जाने पर नष्ट वर्ण का 'अयं पूर्वः' 'अयं परः' इस प्रत्यक्षविषयक इदं
से पौर्वापर्यव्यवहार होना अत्यन्त अयुक्त है इसलिए वर्णसमुदाय भी वृत्ति का
य नहीं हो सकता।

यत्तु तार्किकाः—वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वम-
हितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वाच्छाब्द-
ः।

यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं
माना एव सन्तीति न पदप्रत्यक्षानुपपत्तिः।

यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध-
ाहुः।

यत्तु तार्किका इति। इदं हि तार्किकमतम्—वर्णानां यद्यप्यनित्यत्वंतथापि उत्तरो-
यो वर्णस्तस्मिन् पूर्वपूर्ववर्णवत्त्वम् अव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशात् पूर्व-
वर्णानुभवजनितसंस्कारबलात्, गृह्यते बोध्यते इत्येवं पदस्य प्रत्यक्षत्वात् शाब्द-
शाब्दज्ञानं जायते। पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णानुभवस्यैव तावद्
गोचरस्मृतेर्जनकत्वादिति तत्त्वम्।

आनुपूर्वीज्ञानस्य द्वितीयमुपायं प्रदर्शयति—यद्वेति। पूर्वपूर्ववर्णेभ्यो जायमानाः
ः शब्दजशब्दन्यायेन=यथा वीचिरुत्पन्ना तरङ्गान्तरमुत्पादयतीति वीचितरङ्ग-
येन एकशब्दाच्छब्दान्तरोत्पत्तिर्जायत इति पूर्वपूर्ववर्णेभ्यः उत्तरोत्तरवर्णा उत्पद्यन्ते
घटशब्दे घकारादकार उत्पन्नष्टकारमुत्पादयति स चाकारम् एवं यावदन्ति-

मवर्णश्रवणं तिष्ठतीति तत्तद्वर्णाव्यवहितोत्तरतत्तद्वर्णत्वरूपानुपूर्वीज्ञानस्य नितरां ...म्यमिति सारम् ।

आनुपूर्वीज्ञानस्य तृतीयमुपायं प्रदर्शयति—यद्वेति । पूर्वपूर्ववर्णानुभवज... संस्कारस्तत्सध्रीचीनः सहचरितो यश्चरमवर्णानुभवस्तत एव शाब्दबोधः ... जायते यथा घटशब्दे घकारज्ञानजन्यः संस्कारः अकारज्ञानजन्यसंस्कारे संक्रामति ... च टकारज्ञानजन्ये । तत्रानुपूर्वीघटकमुत्तरत्वञ्च—

'स्वविषयकज्ञानजन्यसंस्कारोत्तरसंस्कारविषयत्वरूपम् । एष चात्मविशेषगुणो ...ज्जीवं प्राणिनं न विजहातीति यदा यदा एकसम्बन्धिज्ञानेनोद्बुध्यते तदा तदा ... विषयकानर्थानुपस्थापयति । यतश्च तदर्थोपस्थितिं प्रति तदर्थविषयकापेक्षयाऽनुभव... द्वुद्धसंस्कार एव हेतुरिति तत्त्वम् ।

हिन्दी—तार्किकों ने यह कहा है कि—वर्णों को अनित्य होने पर भी ... उत्तरवर्ण में पूर्वपूर्ववर्णकत्त्व भी अव्यवहितोत्तरत्व सम्बन्ध से अर्थात् उत्त... व्यवधान शून्य रहने से संस्कारवश गृहीत होता है इसलिये पद के प्रत्यक्ष... शाब्दबोध हो जायगा ।

अथवा पूर्वपूर्ववर्णों से जायमान शब्द शब्दजशब्दन्याय से अर्थात् वीचि... न्याय से जिस प्रकार एक तरंग उठकर अन्य तरङ्गों को भी उत्पन्न करा... उसी प्रकार एक शब्द से शब्दान्तर की भी उत्पत्ति होती है । इसलिए अन्ति... पर्यन्त उत्पन्न ही होते रहते हैं अतः पदप्रत्यक्ष में कोई भी अनुपपत्ति नहीं हो ... अथवा पूर्वपूर्ववर्णों के अनुभव से उत्पन्न संस्कार के साथ-साथ अन्तिम ... अनुभव से शाब्दबोध हो जायगा तो वर्णसमुदाय क्यों नहीं वृत्ति का आ... सकता ! यह तार्किकों का सिद्धान्त है ।

तन्न । आद्येऽयं पूर्वोऽयं पर इत्यभिलापासम्भवेन अव्यवहितो... सम्बन्धायोगात् । नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुम... त्वाच्च । द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्यानि... त्वेन तत्र शक्त्याश्रयत्वस्य ग्रहानुपपत्तेः । अविद्यमाने आश्रयत्वाङ्गीका... घटो जलवानित्याद्यापत्तेश्च । तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्सं... स्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ वि... संस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः । उत्पत्तिविनाशवद्वर्णसमुदा... पदस्य मनुष्यादिवद्भेदे 'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्स... ष्वङ्गं भवति' इति भाष्यविरोधापत्तेश्च । प्रादुर्भूतोऽभिव्यक्तः ।

तन्नेति । आद्ये=अव्यवहितोत्तरत्वसम्बन्धेनेत्यादि प्रथमोपाये 'अयं पूर्वः' ... इत्यभिलापस्यैवासम्भवेन अव्यवहितोत्तरत्वसम्बन्धस्यैव योजनासम्भव इति नष्टविद्यमानपदार्थयोरव्यवहितोत्तरत्वसम्बन्धो यतो वक्तुमनर्हः ।

वर्णे वर्णापेक्षयाऽव्यवहितोत्तरत्वञ्च—

'स्वध्वंसाधिकरणक्षणवृत्युत्पत्तिकत्वम्, स्वोच्चारणध्वंसाधिकरणक्षणवृत्युच्चारणविषयत्वं वाऽभिप्रेतं तच्च नष्टविद्यमानपदार्थयोर्नितरामसम्भवीति सारम्।

द्वितीये = शब्दजशब्दन्यायपरकोपाये, पूर्वोक्तन्यायेन पदप्रत्यक्षस्य यथा कथञ्चित् उपपादनेऽपि पदस्याविद्यमानत्वेन शक्त्याश्रयत्वस्य ग्रहानुपपत्तेः। 'एतत्पदम् एतदर्थनिरूपितशक्तिमत्' इत्याकारकस्य आश्रयत्वसंसर्गावच्छिन्नशक्तिनिष्ठप्रकारताकस्य पदनिष्ठविशेष्यतानिरूपकस्य शक्तिग्रहस्यासम्भवापत्तेः। विधेयतावच्छेदकरूपेण विधेयान्वयं प्रति उद्देश्यतावच्छेदकरूपेणोद्देश्यज्ञानमेव कारणमिति पदत्वेन रूपेण पदज्ञानमन्तरा पदमुद्दिश्य शक्तिविधानानुपपत्तेरिति तात्पर्यम्। अविद्यमानपदार्थेऽपि आश्रयत्वस्वीकारे नष्टस्य घटस्य जलवत्त्वासम्भवेन 'नष्टो घटो जलवान्' इत्यस्यापि बोधापत्तिश्च स्यात्।

तृतीये = पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोधोपाये—येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्य स्थितौ प्रमाणाभावात् 'सरो रसः, नदी दीन' इत्यादौ सरोबोधतात्पर्येण रस इत्यस्य, रसबोधतात्पर्येण सर इत्यस्य एवं नदीबोधतात्पर्येण दीन इत्यस्य, दीनबोधतात्पर्येण नदी इत्यस्य व्युत्क्रमेण बोधः स्यादिति तत्त्वम्। उत्पत्तिविनाशशालिवर्णसमुदायरूपपदस्य मनुष्यादिवद् अर्थात् यथाऽऽत्मन एकत्वेऽपि प्रतिक्षणपरिणामिनां मनुष्याद्याब्रह्मस्तम्बदेहिनां तत्तदवयवभेदाद् भेदेन मनुष्योऽयम्, सरीसृपोऽयम्, पशुरयमिति भेदज्ञानन्तथा वर्णानामप्युत्पत्तिविनाशशालित्वेन तत्तद्वर्णारब्धसमुदायरूपपदस्य भेदस्वीकारे तु 'एक इन्द्रशब्दः क्रतुशते पृथक् पृथक् प्रतियज्ञं प्रादुर्भूतः, एककालावच्छेदेन सकलयज्ञेष्वङ्गं भवतीति भाष्यविरोधापत्तिश्च स्यादिति तार्किकाणां सकला युक्तिर्निरर्थिकैवेति नागेशमतम्।

हिन्दी—किन्तु तार्किकों का यह सिद्धान्त ठीक नहीं—क्योंकि प्रथम उपाय जो बताया है उसमें 'यह पूर्व वर्ण है', यह पर वर्ण है' यह कहा नहीं जा सकता। इसलिए अव्यवहितोत्तरत्व सम्बन्ध भी नहीं हो सकता।

द्वितीय युक्ति जो उन्होंने दिखाई है वह भी ठीक नहीं क्योंकि 'शब्दजशब्दन्याय' से पदप्रत्यक्ष होने पर भी पद के अविद्यमान रहने से उसमें शक्तिग्रह हो नहीं सकता। और यदि अविद्यमान वस्तु में भी आश्रय माना जाय तो 'फूटा घड़ा जल भरा है' यह भी बोध क्यों नहीं हो सकता! इसलिए उनकी द्वितीय कल्पना भी ठीक नहीं।

तृतीय युक्ति जो उन्होंने यह दिखाई है कि पूर्व पूर्व वर्ण के अनुभव से जायमान संस्कार के साथ-साथ अन्तिम वर्ण के अनुभव से ही शाब्दबोध हो जायगा—यह भी ठीक नहीं। क्योंकि जिस क्रम से अनुभव होता है उसी क्रम से उस

संस्कार की स्थिति रहती है इसमें कोई प्रमाण नहीं है इसलिए सर कहने से ? का बोध एवं नदी कहने से दीन का बोध भी व्युत्क्रम से बोध होने लगेगा।

और यदि उत्पत्ति और विनाशशाली वर्ण समुदाय रूप पद को भी मनुष्यों की तरह अर्थात् जिस प्रकार आत्मा के एक रहने पर भी पल-पल परिवर्तनशील मनुष्यादि प्राणिमात्र के अवयवों के भेद से 'यह मनुष्य है' यह सर्प है' 'यह पशु' इस प्रकार भेदज्ञान होता है उसी प्रकार वर्णों के भी उत्पत्ति विनाशशील होने उन उन वर्णों से आरब्ध समुदायरूप पद के भी भेद माने जायँ तो 'एक इन्द्र सैकड़ों यज्ञों में अलग अलग व्यक्त होकर सम्पूर्ण यज्ञों में अङ्ग हो जाता है' भाष्य विरोध हो जायगा। इसलिए तार्किकों की सभी युक्तियाँ असंगत हैं नागेश का सिद्धान्त है।

ननु कस्तर्हि वृत्त्याश्रयश्शब्दः । स स्फोटात्मक इति गृहाण ।

ननु कोऽयं स्फोटः ? उच्यते । चतुर्विधा हि वागस्ति—परा, पश्यन्ती मध्यमा, वैखरी च। तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद् वाग्ब्रह्मयोगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते तत आस्य पर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत् स्थानेऽभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते।

तदाह—

> परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
> हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।। इति
> वैखर्या हि कृतो नादः परश्रवणगोचरः ।
> मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ।।

इति च ।

वृत्त्याश्रयः शब्दः कः ? प्रश्नमुखेन 'स्फोटात्मकः शब्दवृत्त्याश्रय' इति स प्रदर्शयति नागेशः—नन्वित्यादिना ।

कोऽयं स्फोटः ? इति प्रश्नमुखेन स्फोटस्वरूपं निर्वक्ति—चतुर्विधेति ।

> 'वैखरी शब्दनिष्पत्तिर्मध्यमाऽश्रुतिगोचरा ।
> उद्योतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ।।

इति परा-पश्यन्ती-मध्यमा-वैखरीतिभेदात् चतुर्विधा वागस्ति ।

तत्र चतुर्विधेषु वाग्भेदेषु, मूलाधारस्थो यः पवनस्त-संकारीभूता तद्वयञ्जिता, मूलाधारस्था = षण्णवत्यंगुलो देहायामः । तत्राष्टचत्वारिंशत्तममधस्तादुपरि च परित्यज्य मध्ये मूलाधारस्तत्स्था । अत एवोक्तम्—

'पाय्वन्ताद् द्वयङ्गुलादूर्ध्वं लिङ्गाच्च द्वयङ्गुलादधः ।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते' ।। इति ।

शब्दब्रह्मरूपा स्पन्दशून्या=क्रियाशून्या निरीहा च ब्रह्मणो यथैकत्वं निर्गुणत्वं निष्क्रियत्वं तथा सृष्टिकारित्वञ्चैवमस्या अपि स्वजन्यवायुप्रयोज्यपश्यन्तीरूपधारणेन मध्यमारूपपरिणामात् ककाराद्यखिलवर्णोत्पादकत्वे परमात्मजीवात्मनोरिव परापश्यन्त्योर्योगिमात्रगम्यत्वादिति शब्दस्य ब्रह्मरूपत्वम् । बिन्दुरूपिणी=बिन्दुस्वरूपा परा वाक् कथ्यते । नाभिपर्यन्तम्—

'नवाङ्गुलोर्ध्वतस्तस्मादस्थिकन्दोऽण्डसन्निभः ।
चतुरङ्गुलविस्तारस्तन्मध्यं नाभिरुच्यते ।।'

इत्युक्तनाभिपर्य्यन्तम्, आगच्छता सञ्चलता तेन वायुना अभिव्यक्ता=प्रकाशिता मनोगोचरीभूता=मनोगम्या पश्यन्ती नाम वाक् प्रोच्यते । एतद् द्वयम्=परा पश्यन्ती च वाग्ब्रह्मयोगिनां समाधौ—

'सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन ।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः ।।'
'समाधिस्तु समाधानं जीवात्मपरमात्मनोः ।
ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः ।।'

इत्युक्तलक्षणायाम्, निर्विकल्पकज्ञानम् सविकल्पकज्ञानमित्युच्यते ।

ततो हृदयपर्यन्तमागच्छताऽऽक्रामता तेन वायुनाऽभिव्यक्ता प्रकटिता तदर्थवाचकस्फोटरूपा तत्तदर्थप्रतिपादकस्फोटस्वरूपा श्रोत्रग्रहणायोग्यत्वेन श्रोत्रेन्द्रियाग्राह्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या बुद्धावेवावगम्या मध्यमा नाम वागुच्यते । अर्थात् स्वयं कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा मध्यमा वागित्यभिप्रायः ।

तत आस्यपर्यन्तमागच्छताऽऽक्रामता तेन वायुना ऊर्ध्वमाक्रामता च मूर्धानमाहत्य मूर्धस्थानं प्रतिहत्य परावृत्य च तत्तत्स्थानेषु अभिव्यक्ता प्रतिध्वनिता अन्यदीयश्रोत्रेन्द्रियेणापि ग्रहणयोग्या वैखरी वागुच्यते ।

हिन्दी—तो वृत्याश्रय शब्द कौन है ! इस आशंका में नागेश ने स्फोटात्मक शब्द ही को वृत्ति का आश्रय माना है ।

वह स्फोट कौन है ! स्फोट किसे कहते हैं ! इस आशंका में नागेश कहते हैं कि—वाक् चार हैं—परा, पश्यन्ती, मध्यमा और वैखरी । उनमें परा वाक् उसे कहते हैं—जो ९६ छियानवें अंगुल के शरीर प्रमाण में ४८ अड़तालीस अंगुल नीचे ऊपर छोड़कर मध्यभाग को मूलाधार कहते हैं । उस मूलाधार में स्थित वायु से संस्कृत मूलाधार में ही रहने वाली शब्द ब्रम्हस्वरूप क्रियाशून्य विन्दुरूप ही परा वाक् कही जाती है ।

उसके वाद नाभिपर्यन्त आक्रमणकरने वाली हवा से व्यञ्जित मन ही में दृष्टिगोचर पश्यन्तीवाक् कही जाती है । ये दोनों अर्थात् परा और पश्यन्ती वाग्रूपी ब्रह्म योगियों की समाधि में निर्विकल्पक और सविकल्पक विषय कहा जाता है ।

उससे बाद हृदयपर्यन्त आक्रमण करने वाली, हवा से प्रकटित, उन उन अर्थों का प्रतिपादन करने वाली, स्फोट रूप, नहीं सुनने योग्य, सूक्ष्मरूप, जपादिक्रिया में केवल बुद्धीन्द्रिय से ही ग्राह्य मध्यमा वाक् कही जाती है ।

उसके वाद मुखपर्यन्त आक्रमणकरने वाली हवा से ऊपर और मूर्धस्थान में टकराकर पुनः लौटकर उन उन स्थानों में व्यञ्जित होती हुई, जिसको दूसरे लोग भी सुन सकें वही वैखरी वाक् कही जाती है ।

मूल चक्र में रहने वाली वाक् परा वाक् कही जाती हैं । जो मूल चक्र ९६ अंगुल के देह प्रमाण में ४८ अंगुल के नीचे अर्थात् नाभि प्रदेश से नीचे बीचोबीच भाग को कहते हैं । नाभि में रहने वाली वाक् पश्यन्ती वाक् कही जाती है । हृदय में रहने वाली वाक् मध्यमा वाक् कही जाती है । कण्ठदेश में रहने वाली वाक् वैखरी वाक् कही जाती है । वैखरी वाक् से किया हुआ शब्द अन्य लोगों के भी श्रवणगोचर होता है । मध्यमा वाक् से किया हुआ शब्द स्फोटव्यञ्जक कहा जाता है ।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः । वैखरीनादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च । तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च ।

तदाह हरिः—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।। इति ।**

स्फोटात्मक इति। शाब्दिकानां वाच्य-लक्ष्य-व्यङ्ग्यार्थप्रतिपादकानां वाचक-लाक्षणिकव्यञ्जकानां शब्दानां तन्निष्ठजातेर्वा स्फोटव्यवहारः। स्फोटशब्दो हि—स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिवद् योगरूढः। केवलयोगस्वीकारे वाच्य-लक्ष्य-व्यङ्ग्यानां चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेनातिव्याप्तिदोषस्य तत्र सम्भवात्। तथा चार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वमेव स्फोटत्वमिति लक्षणं पर्यवस्यति।

अनादिनिधनमिति। शब्दतत्त्वं यद् ब्रम्ह अनादिनिधनम्=आद्यन्तरहितम्, अक्षरम्=अक्षरनिमित्तत्वादनश्वरम्, अर्थभावेन=प्रयोजनसद्भावेन, अर्थबोध-नायैव शब्दप्रयोगसद्भावेनार्थबोध एवास्य प्रयोजनमिति भावः। विवर्तते तत्तत्-कत्वगत्वादिरूपेण प्रतीयते। यथा परब्रह्मविवर्तः संसारोऽयं मनुष्यत्वपशुत्वादि-नानारूपेण प्रतीयते। एवं शब्दब्रह्मविवर्तसंघातः कत्वगत्वादिरूपेण प्रतीयते इति भावः। यतः अनादिनिधनादेकस्माद् ब्रह्मणः शकाशादेतस्य नरपशुसरीसृपाद्याकार-बधस्य जगतः नामरूपविकासः प्रयोजनम्। 'नामरूपे व्याकरवाणीति यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिसिद्धम्, तथाऽर्थबोधरूपप्रयोजनसद्भावेनैकस्य स्फोटात्मक-शब्दस्य वर्णपद-वाक्य-महावाक्यादिरूपव्याकरणं प्रयोजनम्। एतदेव प्रक्रियोच्यते इति कारिकार्थः। तदेवं संग्रहः—वर्णरूपमध्यमानादव्यङ्ग्यो वर्णस्फोटः। पदरूपमध्यमा-नादव्यङ्ग्यो द्वितीयः पदस्फोटः। वाक्यरूपमध्यमानादव्यङ्ग्यो वाक्यस्फोट इति।

हिन्दी—एक ही बार मध्यमा और वैखरी वाक् से शब्द उत्पन्न होता है। उसमें मध्यमाजन्य शब्द अर्थ का वाचक होता है और स्फोटात्मक शब्द का व्यञ्जक होता है। वैखरी नादजन्य ध्वनि सभी लोगों के श्रवणेन्द्रिमात्र से श्रव्य होता है और भेरी नाद की तरह निरर्थक होता है। और मध्यमानाद अत्यन्त सूक्ष्म है और कान बन्द कर लेने पर जप वगैरह में सूक्ष्मतर वायु से व्यङ्ग्य शब्द ब्रह्मरूप स्फोट का व्यञ्जक है। उस प्रकार मध्यमा नाद से व्यङ्ग्य शब्द स्फोटात्मक ब्रह्मरूप है और नित्य है। इसी बात को हरि ने कहा है—

शब्दतत्वब्रह्म आदि अन्त से रहित है और अक्षर रूप है अर्थात् नश्यमान नहीं है, तथा अर्थ-बोध कराने के ही प्रयोजनवश कत्वगत्वादि रूप अक्षर में परिणत होता है। जिस प्रकार परब्रह्म से विवृत (परिणत) संसार मनुष्य-पशु आदि रूप में प्रतीत होता है उसी प्रकार शब्द ब्रह्म से विवृत कत्वगत्वादि रूप अक्षर परिणत होता है। जिस प्रकार ब्रह्म से संसार की सृष्टि होती है उसी प्रकार शब्द ब्रह्म से वर्ण-पदादि व्याकरण की सृष्टि होती है।

स च यद्यप्येकोऽखण्डश्च, तथाऽपि पदं वाक्यं जपाकुसुमादिलौहित्यपीत-त्वादिव्यञ्जकोपरागवशाद लोहितः पीतः स्फटिक इति भानवद् वर्णादिव्यङ्ग्यः वर्णरूपः पदरूपो वाक्यरूपश्च। यथा च मुखे मणिकृपाणदर्पणव्यञ्जकोपाधि-वशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्। तदुक्तम्—

**पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च।**
**वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥ इति।**

पदे नेति । पदे वर्णा न विद्यन्तेऽर्थात् पदे पचतीत्यादौ वर्णविवेको न, वाक्येषु अवयवा न च अर्थात् अवयवविवेको न, वाक्यात् पदानाम् अत्यन्तम्, कश्चन प्रविवेकः भेदो न प्रतीयत इत्यर्थः ।

हिन्दी – वह स्फोट यद्यपि एक है और अखण्ड है तो भी पद-वाक्य आदि नाम से कहा जाता है । जिसप्रकार जपाकुसुम आदिगत लौहित्य ( लालिमा ) पीतत्व ( पीला-पन ) वगैरह व्यंजक ( प्रकाशक ) उपरागवश से अर्थात् संक्रमणवश से लाल स्फटिक पीला स्फटिक प्रतीत होता है उसी प्रकार वर्णादि उपाधिवश वर्णरूप स्फोट, पदरूप स्फोट, वाक्यरूप स्फोट प्रतीत होता है । तथा जिस प्रकार मुख में मणि, तलवार, दर्पण आदि प्रकाशक उपाधि के वश से मुख भी लम्बा, गोल, चौड़ा प्रतीत होता है। इस बात को हरि ने कहा है—

पद में पृथक् वर्ण प्रतीत नहीं होता है और वाक्यों में भी पृथक् अवयव प्रतीत नहीं होते हैं । वाक्यों से पदों का अत्यन्त भेद किसी प्रकार नहीं प्रतीत होता ।

किञ्च व्यञ्जकध्वनिगतं कत्वगत्वादिकं स्फोटे भासते । बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोके अवधारणाद् । व्यञ्जकरूपितस्यैव स्फटिकादेर्भानाच्च । यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः; यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो; जीवानां च परस्परं भेदः; एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात्ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः ।

ननु स्फोटात्मकशब्दस्य मध्यमानादव्यङ्ग्यत्वेऽपि ब्रह्मवत् नित्यत्वैकत्वयोर्व्यवस्थितिदर्शनादयं ककारः, अयं खकार इति व्यवहारो न स्यात्तस्य भेदनिबन्धनत्वादत आह—किञ्चेति । व्यञ्जको यो ध्वनिस्तद्गतं कत्वम् गत्वमित्यादिकञ्च स्फोटे भासते । यथाऽतिस्वच्छस्य निर्मलस्यापि स्फटिकस्य जपाकुसुमादिरक्तादिवस्तुच्छायागतेन रक्तत्वाध्यवसायः, तथाऽतिभेदरहितस्यापि नित्यस्यैकस्यापि स्फोटस्य विकारध्वनिगतकत्वखत्वाद्यध्यवसायेन ककारो गकार इति व्यवहारविषयत्वमिति तात्पर्य्यम् । बिम्बगतेति । बिम्बगतो यो धर्मस्तद्वैशिष्ट्येनैव प्रतिबिम्बस्य लोके अवधारणात् निश्चयात् । व्यंजकनिरूपितस्यैवेति । जपाकुसुमादिनानाव्यंजकरूपप्रतिबिम्बजजन्यतद्रूपनिरूपितस्य नानात्वेन प्रतीतेरपि स्फटिकस्यैकत्वमिति तत्त्वम् ।

यथा चैकस्य आकाशस्योपाधिवशान्नानात्वं, घटाकाशो मठाकाश इत्यादिभेदस्तथैव स्फोटस्योपाधिवशान्नानात्वमिति तात्पर्यम् ।

यथा चैकस्यैव चेतनस्येति । लोके यथाऽमलः स्फटिकमणिः स्वसन्निहितानां नानाविधवर्णानां बन्धूकादीनां वर्णमाधत्ते रक्तः स्फटिक इत्यादिस्तथा विभुरात्मापि गुण-भावितस्य प्रकृत्या प्रकाशितस्य देहादिलक्षस्योपाधेर्भावं देवत्वमनुष्यत्वादिकं धत्त इत्युपाधिवशात् जीवेश्वरभेद इति स्फोटेऽपि वर्णोपाधिवशान्नानात्वमिति तत्त्वम् ।

अत्रायं निष्कर्षः—यथाद्विपादत्वोपाधिवशान्मनुष्यम्, अमृताशित्वोपाधिवशात्सुरत्वम् देवविरुद्धकार्यकारित्वादसुरत्वं चतुष्पदत्वाच्च पशुत्वम् । यथा चैक एवेश्वरस्तत्त-च्छरीरं प्रविश्य स्वमायासम्बन्धकृतं जीवत्वमुपगम्यास्मादयं भिन्न इत्येव व्यवह्रियते । तथायं स्फोटोऽपि नित्य एको वायुसंयोगजन्यस्यान्तर्गततत्तत्स्थानावच्छेदेन उच्चारित-ध्वनिगतकत्वखत्वादिकं प्रतिपद्य परस्परं भेदं प्राप्नोतीति ।

हिन्दी—अब सन्देह यह होता है कि– स्फोटात्मक शब्द यद्यपि मध्यमा नाद से व्यङ्ग्य है तो भी ब्रह्म की तरह नित्य है और एक है तो 'यह ककार है' 'यह खकार है' यह भिन्न व्यवहार नहीं होना चाहिये ।

उत्तर यह है कि व्यंजक ध्वनिगत कत्व, खत्व, गत्व आदि स्फोट में भासित होता है । क्योंकि बिम्ब में रहने वाला ही धर्म प्रतिबिम्ब में भी देखा गया है। तथा व्यंजक निरूपित ही स्फटिकादि का भान होता है। तात्पर्य यह है कि जिस प्रकार अत्यन्त स्वच्छ और निर्मल स्फटिक में जपाकुसुम वगैरह लाल, पीले पदार्थों की छाया पड़ने से वह लाल पीला, हरा प्रतीत होता है उसी प्रकार स्फोट के भी नित्य और एक होने पर भी ध्वनिगत कत्व खत्वादि उपाधिवश ककार, खकार, गकार आदि भिन्न भिन्न प्रतीत होता है ।

तथा जिस प्रकार आकाश एक ही है किन्तु उपाधि वश घटाकाश, मठाकाश आदि भिन्न भिन्न प्रतीत होता है ।

तथा जिस प्रकार चेतन आत्मा एक ही है किन्तु गुण भावित देहादिलक्षण द्विप-दत्व उपाधि वश से मनुष्य कहे जाते हैं : एवम् अमृतपानकर्तृत्व उपाधि वश से देव कहे जाते हैं, देवताओं के विरुद्ध कार्य करने के उपाधिवश असुर कहे जाते हैं, चतुष्पदत्व उपाधिवश पशु कहे जाते हैं। एवं जिस प्रकार ईश्वर एक ही है किन्तु शरीर प्रविष्ट हो जाने पर मायासम्बन्ध उपाधि से जीवत्व प्राप्तकर जीव ईश्वर भिन्न भिन्न प्रतीत होता है उसी प्रकार स्फोट नित्य और एक ही है किन्तु व्यंजक ध्वनिगत कत्व खत्वादि के भान से ककार खकार आदि भिन्न प्रतीत होता है ।

औपाधिको भेद इत्यत्रोपाधिः कत्वादिर्भिन्न उपाधेयस्तु आकाशस्फोटा-दिरेक एवेति तात्पर्यम् । पदवाक्ययोस्सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यस्फोट एक एव । पूर्वपूर्ववर्णस्तु तात्पर्यग्राहकः । न्यायनये चित्रगुरित्यादौ चित्रादिपदवत् ।

उपाधेयस्तु = उपाधिप्रतिपाद्यस्तु आकाशस्फोटादिः = आकाशश्च स्फोटश्च आकाशस्फोटौ तावान्दी यस्येति विग्रहः अथवा आसमन्तात्काशते इत्याकाशः स्वयं प्रकाशः ब्रह्मरूपः स चासौ स्फोटश्चेति विग्रहः।

शब्दस्य स्फोटरूपस्य ब्रह्मरूपत्वं स्मृतिपुराणादौ प्रसिद्धम्—

"शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति।

"शब्दे ब्रह्मणि निष्णातो न निष्णायात् परे यदि" इति च।

नन्वन्तिमवर्णस्यैव स्फोटत्वे तस्यैवार्थबोधकत्वात्पूर्वपूर्ववर्णोच्चारणानर्थक्यमित्यत आह 'पूर्वपूर्ववर्णास्त्विति' तात्पर्यग्राहकः = अन्तिमवर्णरूपस्फोटात्मकशब्दजन्यबोधजनकत्वप्रकारकवक्तृतात्पर्यग्राहक इति फलितोऽर्थः।

न्यायनये = न्यायमते, चित्रगुरित्यादौ चित्रगवादिबहुव्रीहौ गवादिपदमेव चित्राद्यभिन्नगवादिस्वाम्यर्थलाक्षणिकम्। चित्रादिपदन्तु लक्षणायां तात्पर्यग्राहकं यथा कल्प्यते तथा प्रकृतेऽपि चरमवर्णजन्यबोधे पूर्वपूर्ववर्णास्तात्पर्यग्राहका अवगन्तव्याः। यतश्च तन्मते विशिष्टशक्तेरस्वीकारादिति सारम्।

हिन्दी—औपाधिक भेद में उपाधि कत्व खत्व आदि भिन्न हैं किन्तु उपाधेय अर्थात् उपाधि से प्रतिपाद्य आकाश—स्फोट आदि एक ही है यह तात्पर्य है, और यदि पदवाक्य सखण्ड हैं उस पक्ष में भी अन्तिम वर्ण व्यंग्य स्फोट एक ही है। पूर्व पूर्व वर्ण तो केवल तात्पर्य का ग्राहक है। न्यायमत में जिस प्रकार चित्रगु आदि बहुव्रीहि में गवादिपद ही लक्षणया चित्रादि से अभिन्न गवादि स्वामी अर्थ का बोधक है। चित्रादि पद तो केवल तात्पर्य का ग्राहक है उसी प्रकार स्फोट में भी अन्तिम वर्ण ही व्यङ्ग्य है, पूर्व वर्ण तो केवल तात्पर्य का ग्राहक है।

ध्वनिस्तु द्विविधः। प्राकृतो वैकृतश्च। प्रकृत्याऽर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः। तस्मात्प्रकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः।

हरिरप्याह—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥ इति।

शब्दस्याभिव्यक्तेरूर्ध्वं, वैकृता ध्वनयो जायन्ते इति शेषः। वृत्तिभेद इति।

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥ इति।

स्फोटस्य ग्रहणे इति। स्फोटस्य=मध्यमानादव्यङ्ग्यस्य ग्रहणे=प्रकाशने, प्राकृतः=प्रकृतेः स्वभावादागतो वैखरीनादाख्यश्चतुर्थः, ध्वनिः=नादः, हेतुः=कारणम्, इष्यते इष्टोऽस्तीति भावः। शब्दस्य=वैखरीनादात्मकस्य, अभिव्यक्तेः=उच्चारणात्, ऊर्ध्वम्=अनन्तरम्, वृत्तिभेदे=व्यापारभेदे यत्नभेदे वा, वैकृताः=विकृते-विकारात् आगताः वैकृताः ध्वनयः समुपोहन्ते=प्रकाशन्ते, तैः=वैकृतैर्ध्वनिभिः, स्फोटात्मा=स्फोटात्मको नित्यः शब्दः, न, भिद्यते=न भिन्नः प्रतीयत इत्यर्थः।

वृत्तिभेदे तु वृत्तयो व्यापारास्त्रिधा, द्रुता मध्या, विलम्बिता चेति भेदात्। अभ्यासार्थे इति। अभ्यासार्थे=घोषणार्थम्, द्रुता=शीघ्रोच्चारणानुकूला वृत्तिर्व्यापारः, चिन्तने=शब्दार्थविचारे स्मरणे वा, मध्या=नात्युच्चस्वरा, नातिनीचस्वरा वृत्तिः व्यापारः स्मृता। शिष्याणां=छात्रणाम्, उपदेशार्थम्, विलम्बिता=कालकृतविलम्बेनोच्चारणानुकूला वृत्तिः=व्यापारः, इष्टा=अभिमतेत्यर्थः। छात्रोपदेशस्य विचारपूर्वकत्व-नियमेन विलम्बेनोच्चारणपूर्वकोपदेशेनैव छात्राणां शब्दार्थबोधो भवतीति तात्पर्यम्। अत्रेदमवधेयम्–द्रुतायां वृत्तौ तदुत्तारयति वक्तरि ब्रह्माण्डसम्बद्धा सामृतबिन्दुस्राविणी-तियोगप्रसिद्धेर्यस्याः सुषुम्णाऽऽख्यनाडिकाया अनवपानीयबिन्दवः स्रवन्ति। तस्या एव मध्यमायां वृत्तौ द्वादशबिन्दवः स्रवन्ति, विलम्बितायां वृत्तौ षोडश बिन्दवः स्रवन्तीति पूर्वपूर्वतस्त्रयो भागा अग्रेऽधिका जायन्त इति।

हिन्दी—ध्वनि दो प्रकार की हैं। प्राकृत, और वैकृत। प्रकृति से अर्थात् अर्थ बोध कराने की इच्छा से स्वभाव से ही उत्पन्न स्फोट की व्यञ्जक पहली प्राकृत ध्वनि कही जाती है। उस प्राकृत ध्वनि से उत्पन्न विकार विशिष्ट देरतक ठहरने वाली निवर्तक अर्थात् दूसरे शब्दों को हटाने वाली वैकृतिक ध्वनि है। हरि ने भी कहा है—

स्फोट के ग्रहण अर्थात् प्रकाशन में प्राकृतध्वनि इष्ट है। शब्द के उच्चारण के बाद व्यापार भेद में वैकृत ध्वनि निकलती है। उनसे स्फोटात्मक शब्द भिन्न नहीं है।

वृत्ति व्यापार तीन हैं–द्रुता, मध्या, विलम्बिता। अभ्यास करने में द्रुता अर्थात् जल्द जल्द व्यापार उपयोगी होता है, और किसी विषय के चिन्तन करने में मध्या वृत्ति मध्य व्यापार उपयोगी होता है। तथा छात्रों के उपदेश के समय विलम्बित वृत्ति अर्थात् विलम्ब व्यापार उपयोगी है।

तिसृषु वृत्तिषु समुपोहन्ते कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यत इति तदर्थः। अत्रेदं बोध्यम्—केनचिद् घटमानयेति वैखरीनादः प्रयुक्तः, स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः, स नाद इन्द्रियद्वारा बुद्धिहृद्गतस्सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते तत्र वैखरीनादो वह्नेः फूत्कारादिवन्मध्यमानादोत्साहकः, मध्यमानादस्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः। परस्य विलम्बेनानुभवसिद्धत्वाद्। अत

एव श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्याकर-ग्रन्थस्सङ्गच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण तु बुद्धि-निर्ग्राह्यत्वम्, स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूषितः कृत इति तदर्थः। तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्णपदवाक्यानिष्ठजातेर्वा-चकत्वम्। तदुक्तम्—

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। इति।**

तस्मादष्टविधस्फोटात्मकश्शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटो वाक्य-जातिस्फोट एव वा वृत्त्याश्रयः। तत एव लोकेऽर्थबोध इत्याद्युक्तत्वादिति सर्वं सुस्थम्।

इति स्फोटनिरूपणम्।

———

अत्रेदं बोध्यमिति। केनचित् पुरुषेण घटमानयेति घटकर्मकेच्छया वक्त्रा वैख-रीनादाख्यो ध्वन्यपरपर्यायो मध्यमानादस्फुरणाय, प्रयुक्तः=उच्चारितः। सः=नादः केनचित् पुरुषेण श्रोत्रेन्द्रियेण गृहीतः=श्रावणप्रत्यक्षविषयीकृतः। स वैखरीनादः, इन्द्रियद्वारा=श्रोत्रादीन्द्रियद्वारा, बुद्धिहृद्गतः=बुद्धिश्च हृच्च बुद्धिहृदी ते गतः विषयीकृतः अर्थात् बुद्धिविषयीकृतः सन् हृद्गत इत्यर्थः। बुद्धिर्नाम निश्चयात्मिका अन्तःकरणवृत्तिः। अनुसन्धानात्मिका अन्तःकरणवृत्तिर्हि चित्तं हृदिति चोच्यते। पूर्वाननुभूतो हि विषयो बुद्धिविषयो भवति। हृदः पुनः पूर्वानुभूत इति तयोर्भेदः। तयोरैक्यव्यवहारस्तु विषयपरिच्छेदकत्वोर्विशेषात्। अत एव बुद्धेश्चित्तेऽन्तर्भाव इति वेदान्तिनां डिण्डिमघोषः। अर्थबोधकम्=अर्थप्रत्यायकं, शब्दम्, स्वनिष्ठं यत् कत्वादि तेन, व्यञ्जयति=प्रकाशयति। तस्मादर्थबोधो जायते। स्फुटति अभिव्यक्तीभवति अर्थोऽस्मादिति व्युत्पत्त्या स्फोटोऽर्थप्रकाशकत्वम्। प्रकाशश्च ज्ञानम्। तथाचार्थ-निष्ठविषयताप्रयोजकशक्तिमत्त्वं स्फोटस्य लक्षणम्। उच्चारयितुः=उच्चारणकर्तु-र्वक्तुः, युगपदेव=समकालमेव, मध्यमावैखरीभ्यां वाग्भ्यां नाद उत्पद्यते। तत्र वैख-रीनादः वह्नेः फूत्कारादिवत्=यथाऽप्रज्वलितस्य वह्नेः फूत्कारादय उद्बोधकास्तथा मध्यमानादस्य, उत्साहकः=प्रवर्तकः, मध्यमानादः स्फोटं व्यंजयति प्रकाशयतीत्यर्थः। इत्यतो हेतोः शीघ्रमेव=झटित्येवार्थबोधः—अर्थज्ञानं जायते। परस्य=अन्यपुरुषस्य, विलम्बेन=अत्वरितेन अर्थबोधानुभवसिद्धत्वात्।

श्रोत्रोपलब्धिरिति। उपलब्धिर्ज्ञानम्। श्रोत्रेण श्रोत्र एव वा उपलब्धिर्यस्येति व्यधिकरणपदो बहुव्रीहिः। श्रोत्रेन्द्रियजन्यज्ञानविषय इत्यर्थः। सप्तमीविशेषणे बहुव्री-हाविति सूत्रे सप्तमीग्रहणेन तादृशस्यापि बहुव्रीहेः स्वीकारात्। शब्दविषयकप्रत्यक्षं प्रति सन्निकर्षद्वारा श्रोत्रेन्द्रियस्य करणत्वादिति तात्पर्य्यम्। वस्तुतस्तु—उपलब्धि-रित्यत्र करणे क्तिन्। स्त्रियां क्तिन्निति सूत्रे भावे अकर्तरि च कारके इत्यनुवर्त्य स्त्री-

लिङ्गे भावादौ क्तिन्विधानात् । तथा च श्रोत्रमुपलब्धिः उपलब्धिकरणं यस्य समानाधिकरणपद एव बहुव्रीहिर्ज्ञेयः । वर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वादिन्द्रियसम्बद्धविषयस्यैव प्रकाशमानत्वनियमात् । तस्य च श्रोत्रस्य शून्यक्रियत्वादन्यत्र गमनासम्भवेन वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा दूरदेशस्थशब्दानां श्रोत्रसम्बन्ध इति शब्दस्याकाशदेशत्वं स्पष्टमेव ।

अथवा श्रोत्रेण उपलब्धिः श्रोत्रोपलब्धिः सा अस्यास्तीति श्रोत्रोपलब्धिः शब्दः । गुणवचनेभ्यो मतुपो लुगिष्ट इति मतुपो लुक् । यथा शुक्लो गुणोऽस्येति शुक्लः पटः । उपलब्धिः साक्षात्कारस्तथा च 'श्रवणेन्द्रियजन्यसाक्षात्कारविषयः शब्द' इत्यर्थः । नच न कर्मधारयादिति व्युत्पत्तिविरोध इति वाच्यम् । तदर्थस्यैव प्रतिपत्तिकरत्वात् । बुद्धिनिर्ग्राह्यः=बुद्ध्याऽन्तःकरणेन निर्ग्राह्यः अवधार्य्यः । प्रयोगेण=उच्चारणेन, अभिज्वलितः=वर्णपदवाक्यात्मकतया प्रकाशितः, आकाशदेशः=आकाशे देशः स्थानं यस्य स शब्द इत्यर्थः । शब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात् । अत एव शब्दगुणकमाकाशमिति परेषामपि निष्कर्षः । इत्याकरग्रन्थः=भाष्यग्रन्थः संगच्छते । कत्वादितेति । तत्र कत्व-खत्वादिना हि किल श्रोत्रोपलब्धित्वम् श्रोत्रेन्द्रियग्राह्यत्वम्, स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्=अन्तःकरणेन्द्रियग्राह्यत्वम् । स च प्रयोगेण उच्चारणेन, वैखरीरूपेण नादेन अभिज्वलितः प्रकाशितः स्वरूपरूषितः कृत इति । आकाशरूपेणैव रूषितः परिणतः कृत इति तदर्थः=आकरग्रन्थार्थः । तत्रापि अर्थगतजातेर्यथा शक्यत्वं तथा शक्यतावच्छेदकवर्णादिगतजातेरेव वाचकत्वमिति तात्पर्यम् ।

अनेकव्यक्त्यभिव्यङ्ग्या=अनेकाभिः वर्णव्यक्तिभिः अभिव्यङ्ग्या जातिः स्फोट इति स्मृता कथितेति ।

तस्मात्=एवं पूर्ण विवेचनात्, अष्टविधस्फोटात्मकः=

| | |
|---|---|
| १ वर्णजातिस्फोटः | ५ वाक्यजातिस्फोटः |
| २ वर्णव्यक्तिस्फोटः | ६ वाक्यव्यक्तिस्फोटः |
| ३ पदजातिस्फोटः | ७ अखण्डपदस्फोटः |
| ४ पदव्यक्तिस्फोटः | ८ अखण्डवाक्यस्फोटः |

इत्यष्टविधः स्फोटात्मकः शब्दः वृत्त्याश्रयशक्त्याश्रयः इति सिद्धान्तः ।

वर्णपदभेदस्फोटानां वृत्त्याश्रयत्वाभावेन दूषितप्रयत्वात्स्वमते सिद्धान्तं दर्शयति—वस्तुतस्त्विति । यथार्थतस्तु वाक्यस्फोटः, वाक्यजातिस्फोट एव वा वृत्त्याश्रयः । तत एव=वाक्यस्फोटादेव, लोके अर्थबोध इत्याद्युक्तत्वात्=इत्याद्यभियुक्तोक्तत्वात्, इति=एवम्, सर्वं वस्तु सुस्थम्=सुष्ठु सिद्धान्तितम् । शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण वाक्यस्फोट एव शक्तिग्रहात्, स्फोटात्मकशब्दस्यैव वृत्त्याश्रयत्वमिति निर्णयात् सर्वं वस्तु निरापत् दोषकलङ्कलेशशून्यम् इति तत्वम् ।

इति संस्कृतव्याख्यायां स्फोटनिरूपणम्

हिन्दी—इन पूर्वापर वाक्यों का तात्पर्य्य यह जानना चाहिये कि—किसीने 'घड़ा लाओ' इस वैखरी नाद का अर्थात् परश्रव्य शब्द का प्रयोग किया। उस शब्द को किसी ने कान से सुना। वह वैखरी नाद श्रवणेन्द्रिय द्वारा बुद्धि तथा हृदय में पहुँच कर अर्थ बोध कराने वाला क ख ग, आदि शब्द को व्यक्त कर देता है, जिससे अर्थ साफसाफ व्यक्त होने लगता है। क्योंकि जिससे स्पष्ट अर्थ व्यक्त हो वही स्फोट है। उच्चारण करने वाले को मध्यमा तथा वैखरी वाक् से एक ही बार नाद उत्पन्न होता है। उसमें अग्नि के प्रज्वालक फूत्कार के समान वैखरी नाद जिस प्रकार शब्द का प्रज्वालक अर्थात् प्रोत्साहक होता है उसी प्रकार मध्यमानाद का प्रोत्साहक होता हुआ मध्यमानाद को व्यक्त करता है। इसलिए शीघ्र ही उससे अर्थज्ञान होने लगता है। क्योंकि दूसरे को विलम्ब से अर्थ का बोध होना अनुभवसिद्ध बात है। इसलिए—

"कान से जो सुना जाय, बुद्धि से जो ग्राह्य हो, और उच्चारण करने से जो व्यक्त हो जाय वही आकाश स्थान वाला शब्द है" यह भाष्य ग्रन्थ संगत होता है। उसमें भेद यह है कि-क, ख, ग, घ, आदि वर्ण श्रवणेन्द्रिय का विषय हैं, स्फोटात्मक पचति, भवति, रामः, कृष्णः इत्यादि पद बुद्धीन्द्रिय का विषय है। वह शब्द प्रयोग करने से अर्थात् उच्चारण करने से वैखरी रूप नाद से प्रकाशित होकर आकाश रूप में परिणत होकर शब्द कहाता है यही भाष्य ग्रन्थ का अर्थ है। उसमें भी जिस प्रकार अर्थगत जाति का शक्यत्व अर्थात् वाच्यत्व माना गया है उसी प्रकार शक्ततावच्छेदिका अर्थात् पदत्वावच्छेदिका पदत्वादिव्यावर्तिका वर्णनिष्ठ, पदनिष्ठ, वाक्यनिष्ठ जो जाति उस जाति का वाचकत्व भी माना गया है। उसे हरिने भी कहा है—

"अनेक वर्णव्यक्ति से अभिव्यक्त जाति ही स्फोट है" इसलिए आठ प्रकार का स्फोटात्मक शब्द ही वृत्ति का आश्रय है। किन्तु यथार्थ में तो वाक्यस्फोट या वाक्यजातिस्फोट ही वृत्ति का आश्रय है। क्योंकि उससे संसार में अर्थबोध होने पाता है, वर्ण पदादि से नहीं। इस लिए हरिने कहा है कि—

"वाक्यस्फोटेति निष्कर्षे तिष्ठतीति मतस्थितिः।" न्याय भाष्यकारों ने भी कहा है कि—'पदसमूहो वाक्यमर्थसमाप्तौ'।

अर्थात् सभी का निचोड़ अर्थ निकालने में वाक्य स्फोट ही रहता है। और पद समूह जो वाक्य वही अर्थ की समाप्ति में समर्थ है, अन्य नहीं।

इति हिन्दीव्याख्यायां स्फोटनिरूपणं समाप्तम्।

---

## अथ आकाङ्क्षानिरूपणम्

अथ शाब्दबोधसहकारिकारणानि आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्याणि । वाक्यसमयग्राहिकाऽऽकाङ्क्षा । सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव, तथापि तस्याः स्वविषयेऽर्थे आरोपः । अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् । इदमेवाभिधानापर्यवसानमित्युच्यते[1] । पदे तु नारोपः, अर्थबोधोत्तरमेवाकाङ्क्षोदयात् । पदं साकाङ्क्षमिति तु साकाङ्क्षार्थबोधकमित्यर्थकम् । तदुक्तं समर्थसूत्रे भाष्य-"परस्परव्यपेक्षां सामर्थ्यमेके । का पुनश्शब्दयोर्व्यपेक्षा । न ब्रूमश्शब्दयोरिति, किं तर्हि अर्थयोरिति"। ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य[2] ज्ञानमिति तद्विषये तादृशान्वयबोधजनकत्वेऽप्याकाङ्क्षेति व्यवहारः ।

यद्वा उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासा आकाङ्क्षा । आद्यस्-'पश्य मृगो धावति' इत्यत्र, दर्शनार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव । अन्त्यन्तु-'पचति तण्डुलं देवदत्तः' इत्यादौ, क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तद्विषयत्वाच्च ।

अत एव घटः कर्मत्वम् आनयनं कृतिरित्यतो घटमानयेतितन्नान्वयबोधः । आकाङ्क्षाविरहात् । घटमानयति विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्वाच्च ।

इत्याकाङ्क्षानिरूपणम् ।

---

वैयाकरणमतेऽर्थबोधजनकत्वरूपाया एव शक्तेर्ग्रहणे तत्र बोधपदेन शब्दबोधस्य ग्रहणाच्छब्दजन्यबोधस्यैव शाब्दबोधत्वेन शाब्दबोधम्प्रति शाब्दबोधे वा कानि सहकारिकारणानि ? इत्याशङ्क्य समाधत्ते-अथेति, तत्र सहकारिकारणत्वञ्च—मुख्यकारणजन्यकार्यजनकत्वे सति मुख्यकारणभिन्नत्वम् । यथा घटकार्य्यं प्रति कपालस्य मुख्यकारण-

---

१. अभिधानस्यापर्यवसानम् अपूर्णतेत्यर्थः ।

२. एतादृशज्ञानस्य बोधहेतुत्वात् एकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः । अन्वयबोधश्च-तदाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः । तेन खण्डवाक्यार्थबोधोत्तरं न महावाक्यार्थबोधानुपपत्तिः । एतन्मूलिकैव च 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति व्युत्पत्तिरित्यादि लघुमञ्जूषायां स्पष्टमिति तत एवावगन्तव्यम् ।

त्वम् । इतरेषान्तु सहकारिकारणत्वम् । यथा वा स्वर्गं प्रति यागादेर्मुख्यकारणत्वमपूर्व
तु सहकारिकारणत्वम् । एवं शाब्दबोधे पदज्ञानस्य मुख्यकारणत्वं, पदार्थोपस्थित्यादी
नान्तु सहकारिकारणत्वमवगन्तव्यम् तदुक्तं कारिकावल्याम्—

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥' इति

'एकपदस्य पदार्थान्तरसमभिव्याहार आकाङ्क्षा' 'पदस्य पदान्तरप्रयुक्तान्वया
भावकत्वमाकङ्क्षा' इत्याकाङ्क्षायाः केषाञ्चन लक्षणद्वयं निराकर्तुमुपक्रमते—वाक्य
समयेति । आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्येषु त्रिविधेषु शाब्दबोधसहकारिकारणे
स्वमते आकाङ्क्षाया लक्षणं निर्वक्ति—'वाक्यसमयग्राहिकाऽऽङ्क्षा' इति । त
समयशब्दस्य शक्तिपरकत्वेन 'वाक्यशक्तिग्राहिकाऽऽकाङ्क्षेत्यर्थः । अत एवोक्त
न्यायभाष्यकारैः—

'समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं, वाक्यलक्षणाया
वाचोऽर्थलक्षणम्' इति । सा चाकाङ्क्षा एकपदार्थस्य ज्ञाने तदर्थान्वययोग्यो योऽर्थस्त
यत् ज्ञानं तद्विषयिणी 'एतत्पदपार्थान्वयी अर्थः कः ?' एवंविधा या इच्छा सा यद्य
पुरुषनिष्ठैव । यथा घटादिपदार्थज्ञानानन्तरं तदर्थान्वयिन आनयनादेर्या जिज्ञा
पुरुषनिष्ठैव, तथापि तस्याः=आकाङ्क्षायाः, स्वविषये=आकाङ्क्षाविषयेऽर्थे आरो
विषयतासम्बन्धेनाकाङ्क्षाया अर्थेऽपि विद्यमानादिच्छायाः सम्बन्धस्य चारोप इ
तत्त्वम् । यतश्च 'अयमर्थः अर्थान्तरमाकाङ्क्षतो'ति व्यवहारो दृश्यते ।

इदमेव 'अभिधानापर्यवसानम्' इत्युच्यते । अर्थात् अभिधानस्य वाचकत्व
अपर्यवसानम् अपूर्णत्वमिति यावत् ।

ननु पदे तस्याः कथन्नारोप इत्याशङ्कां निराचष्टे—पदे त्विति । पदे तु त
आकांक्षायाः नारोपः, अर्थबोधोत्तरमेव=पदनिष्ठो योऽर्थस्तन्निरूपिता या वृत्तिस्तज्ज्ञा
त्तरं याऽर्थोपस्थितिस्तदुत्तरमेवेत्यर्थः, आकांक्षायाः समुदयात् ।

ननु आकाङ्क्षायाः पदे आरोपाभावे पदं साकाङ्क्षम् इति कथं प्रयोगः । इत्याश
समाधत्ते—पदमिति । अयम्भावः—पदं साकाङ्क्षमिति प्रयोगस्तु 'साकाङ्क्षार्थबोधप
इति न कश्चिद् दोषः । अत्रेदं तत्त्वम्—

ननु पदस्य वाचकत्वपक्षे तत्तदर्थबोधस्य तत्तदर्थनिरूपिततत्पदनिष्ठवृत्तिज्ञानक
सम्भवसत्त्वेऽपि संसर्गे वृत्त्यभावेन शाब्दबोधे संसर्गभानं दुरुपपादमिति चेन्न । तत्पद
तत्तदर्थबोधं प्रति तत्पदनिष्ठतत्तदर्थनिरूपितवृत्तिज्ञानस्य हेतुत्वेन संसर्गस्यापि भा
यान्वयबोधम्प्रति आकाङ्क्षाज्ञानस्यापि कारणत्वस्य वक्तव्यत्वात् । नन्वयं दो
वाक्यशक्तिवादिनामपि विद्यत एवेति चेन्न । तन्मते संसर्गविशिष्टे शक्तेः सत्त्वा
त्तत्वम् ।

अन्विताभिदानवादिनो मीमांसकास्तु—इतरार्थान्वितार्थे शब्दस्य शक्ति मन्वाना 'इतरान्वितो घटो घटपदशक्य:'' इत्येवं सर्वत्र स्थले शक्तिग्रहं ब्रुवन्ति। ते च किल तत्रान्वयत्वसामान्यरूपेण अन्वयमात्रोपस्थितौ योग्यतावशात् तात्पर्यवशाच्च अन्वय विशेष-भानं मन्यन्त इति बोध्यम्।

उक्तार्थे प्रमाणं दर्शयति—तदुक्तं समर्थसूत्रे भाष्य इति। तद्भाष्ये हि 'परस्पर-व्यपेक्षां सामर्थ्यमेके' इत्युक्त्वा पुनः शङ्कते—'शब्दयोः का पुनर्व्यपेक्षा? ततो भाष्य-कारः पक्षमेनं स्थिरीकरोति—'न ब्रूमः शब्दयोः' इति किन्तर्हि 'अर्थयोरिति' अर्थात् देवदत्तो गामपेक्षते मदीया इयं गौरिति, गौश्च देवदत्तमपेक्षते अहमस्येति, ततश्च स्वं स्वमर्थं प्रति शब्दस्य विशेषणत्वेन गुणीभावादर्थयोरेवाकांक्षा नतु शब्दयोरिति तात्पर्य्यम्।

ईदृशजिज्ञासाया उत्थापकं ज्ञानं कस्येति दर्शयति–ईदृशेति। एकपदार्थे इति। यथा घटपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्य अपरपदार्थज्ञानाभावप्रयोज्येति भावः। एवञ्च घटपदार्थे आनयपदार्थाभावप्रयोज्यबोधाजनकत्वस्य ज्ञानम्। अत एव 'पदस्य पदान्तर-प्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षे'ति तार्किकाणां सिद्धान्तः। यथा घटमिति सुबन्तमानयेति च तिङन्तमपेक्ष्यैव घटकर्मकानयनार्थबोधञ्जनयति। एवमानयेति तिङन्तं पदं घटमिति सुबन्तं पदमपेक्ष्यैव तत्तदर्थबोधञ्जनयति तयोरन्योन्यमन्यतरद्विनार्थबोधानुत्पादकत्वादिति तात्पर्यम्। तद्विषये=बोधाजनकत्वज्ञानविषये।

वेदान्तिनस्तु—पदार्थानां परस्परजिज्ञासाविषयत्वमाकांक्षा। क्रियाश्रुतौ कारकस्य, कारकश्रुतौ क्रियायाश्च जिज्ञासाविषयत्वम्। जिज्ञासां विनापि क्वचिच्छाब्दबोधदर्शनात् तत्संग्रहाय योग्यत्वपदोपादानमिति प्राहुः।

नन्वेवं घटमानयेति वाक्यजन्यशाब्दबोधवत् 'घटः कर्मत्वम् आनयनं कृतिरि' त्यादावपि कर्मत्वपदोपस्थाप्यकर्मत्वज्ञाने तदर्थान्वययोग्यानयनार्थस्य यज्ज्ञानं तद्विषयिणी येच्छा तद्रूपाकाङ्क्षायाः सत्त्वात् शाब्दबोधापत्तिरित्येतदर्थमन्यल्लक्षणं वक्तुं प्रारभते—यद्वेति। उत्थापकतासम्बन्धेन विषयतासम्बन्धेन वा उभयसम्बन्धेन वाऽर्थान्तरस्य या जिज्ञासा सैवाकाङ्क्षाऽभिप्रेता। आद्यस्य उत्थापकतासम्बन्धस्योदाहरणम्—पश्य मृगो धावतीति। अत्र दर्शनार्थस्य कारकधावनाकाङ्क्षाया उत्थापकम्। अन्त्यसम्बन्धस्यो-दाहरणम्–पचति तण्डुलं देवदत्त इति। अत्र क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थादक त्वात्तद्विषयत्वाच्चोभयसम्बन्धस्येदमुदाहरणं बोध्यम्।

अत एव=कथिताकाङ्क्षायाः शब्दबोधम्प्रति कारणत्वादेव। घटमानयेत्यत्र घटनिष्ठकर्मतानिरूपकानयनबोधे घटमित्येतत्सुबन्तानयेति तिङन्तपदयोरेव साकांक्षत्वं बोध्यम्।

इति संस्कृतव्याख्यायामाकांक्षानिरूपणम्

—

हिन्दी—शाब्दबोध में सहायक कारण चार हैं—आकांक्षा, योग्यता, आसत्ति औ तात्पर्य। उनमें वाक्यशक्ति को ग्रहण कराने वाली आकांक्षा है। और वह ए पदार्थ के ज्ञान में उस पदार्थ के अन्वययोग्य अर्थ का ज्ञानविषयक इच्छा 'इस के अन्वय योग्य अर्थ कौन है?' इस प्रकार की यद्यपि पुरुष ही में रहती है, तो उस आकांक्षा का आकांक्षाविषयक अर्थ में आरोप माना जाता है। क्योंकि अर्थ अन्य अर्थ की आकांक्षा करता है यह व्यवहार देखा जाता है। इसी अभिधानपर्यवसान भी कहा जाता है। आकांक्षा का पद में आरोप नहीं हो सक क्योंकि अर्थबोध हो जाने के बाद ही आकांक्षा का उत्थान होता है। 'सब प साकांक्ष हैं' यह व्यवहार नहीं होना चाहिए जब कि अर्थ में आरोप होता है आशंका पर कहते हैं कि—'पद साकांक्ष हैं' इसका तात्पर्य यह है कि पद साकांक्ष अ का बोधक है।

इसलिए समर्थ सूत्र के भाष्य में भाष्यकार ने यह कहा है कि—परस्पर व्यपेक्ष को कोई सामर्थ्य कहते हैं। वह दो शब्दों की कौन-सी व्यपेक्षा है? फिर भाष्यकार कह हैं कि मैं केवल दो शब्दों ही की व्यपेक्षा नहीं कह रहा हूँ किन्तु शब्दद्वयनिष्ठ अर्थों की।

इस प्रकार की जिज्ञासा का उत्थापक ज्ञान एक पदार्थ में अन्यपदार्थ के अभा प्रयुक्त अन्वयबोध का जो जनक नहीं है उसका होता है इसलिए तद्विषय में अर्थात् बो का जनक जो पदार्थ नहीं है उसके ज्ञान के विषय में उस प्रकार के अन्वय बोधजन रहने पर भी आकांक्षा होती है ऐसा व्यवहार होता है।

किन्तु इस प्रकार का आकांक्षा का लक्षण मानने पर 'घटमानय' की तरह घटः कर्म त्वम् आनयनं कृतिः' यहाँ पर भी शाब्दबोध प्रसङ्ग होने लगेगा इसलिए आकांक्षा क दूसरा लक्षण कहते हैं यद्वा—इत्यादि ग्रन्थ से। अर्थात् उत्थापकत्व, या विषयत सम्बन्ध से या दोनों सम्बन्धों से अर्थान्तर की जिज्ञासा ही को आकांक्षा कहते हैं।

पहले का उदाहरण—'पश्य मृगो धावति' है, देखो मृग दौड़ा जा रहा है क्योंकि यहाँ पर दर्शन अर्थ कारक धावन क्रिया आकांक्षा का उत्पादक है और धावन अर्था दौड़ना उसका विषय है।

अन्त्य का उदाहरण—'पचति तण्डुलं देवदत्तः' यह है। 'देवदत्त चावल पकाता' क्योंकि यहाँ पर क्रिया कारक दोनों को ही परस्पर उसका उत्थापक है और उसका विषय भी है।

इसलिए अर्थात् शाब्दबोध के प्रति आकांक्षा ही कारण रहने के कारण 'घटः कर्मत्वम् 'आनयनं कृतिः' इस वाक्य से 'घटमानय इस वाक्य की तरह अन्वय बोध नहीं होने पाता। क्योंकि वहाँ आकांक्षा का विरह है। 'घटमानय' यहाँ तो सुबन्त तिङन्त दोनों ही साकांक्ष हैं।

इति हिन्दीव्याख्यायामाकांक्षानिरूपणं समाप्तम्।

—

## अथ योग्यतानिरूपणम्

योग्यता च—परस्परान्वयप्रयोजकधर्मवत्त्वम्। तेन 'पयसा सिञ्चति' इति वाक्यं योग्यम्। अस्ति च सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले, करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम्।

अत एव 'वह्निना सिञ्चति' इति वाक्यमयोग्यम्। वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात्।

एतादृशस्थलेषु नान्वयबोधः, किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकाः। तन्न। बौद्धार्थस्यैव सर्वत्र बोधविषयत्वेन बाधस्याभावात्॥
हरिरप्याह—

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च"। इति।
अतो बन्ध्यासुतादिशब्दानां प्रातिपदिकत्वम्॥

वह्निना सिञ्चतीत्यतो बोधाभावे तद्वाक्यप्रयोक्तारं प्रति 'अद्रवेण वह्निना कथं सेकं ब्रवीषि' इत्युपहासानापत्तेश्च। वाक्यार्थबोधे जाते बुद्धार्थविषये प्रवृत्तिस्तु न भवति, बुद्धार्थेऽप्रामाण्यग्रहादित्यन्यत्र विस्तरः।

---

आकांक्षानिरूपणोत्तरं योग्यतां निर्वक्तुं प्रारभते—योग्यतेत्यादिना। यत्तु नैयायिकाः—बाधाभावो योग्यता। सा च तात्पर्य्यविषयीभूतपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगिताभावः। यथा—तात्पर्यविषयीभूतजलकरणकत्वसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगिताभाव इति वदन्ति। तन्न। विशिष्टबुद्धौ बाधाभावस्यैकरूपेण कारकत्वासम्भवात्। पृथक् कारणत्वकल्पने तु महागौरवाच्च। तदपेक्षया शाब्दबोधे योग्यताज्ञानस्यैव कारणत्वकल्पनौचित्यात्।

अन्वयप्रयोजकसमभिव्याहृतकार्य्यशक्तिमत्त्वं योग्यता। सा च शाब्दबोधे नितरां भासते। अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्यैव जलाहरणशक्तिमत्त्वेन सच्छिद्रेतरत्वप्रकारको बोध इति परे।

परस्परेति। परस्परमन्वयप्रयोजको यो धर्मस्तद्वत्त्वम्। अयमेव "अर्थाबाध" इत्युच्यते।

तथा चेत्थं कार्य्यकारणभावः फलितो भवति—

तद्वाक्यजन्यतदर्थनिष्ठविषयतानिरूपकशाब्दबोधं प्रति तद्वाक्यघटकपदार्थनिष्ठविशेष्यतानिरूपकपरस्परान्वयबोधप्रयोजकधर्मप्रकारकज्ञानं कारणमिति।

तच्च ज्ञानं हि पदार्थस्मृत्यनन्तरमेवापेक्ष्यते। तदैव बाधज्ञानोदयसम्भवात्। नह्येकपदस्यापरपदार्थसमभिव्याहारे तत्सम्भवः। एवञ्च शाब्दबोधं प्रति योग्यताऽपि हेतुरिति बोध्यम्।

पयसा सिञ्चतीत्यादौ तु सेकान्वयप्रयोजकधर्मंजलत्वस्य पयसि, एवं पयः करणकान्वयप्रयोजकधर्मसेकत्वस्य सेकक्रियायामिति समन्वयः। तथा चात्र जल निष्ठकरणतानिरूपकार्द्रीकरणानुकूलैकाश्रयको वर्तमानकालिको व्यापार इति शाब्द बोधः फलति।

अत एव=योग्यताया अन्वयबोधप्रयोजकत्वादेव। वह्निना सिञ्चतीत्यत्र तृतीयार्थ करणताया निरूपकत्वेनार्द्रीकरणरूपे सेक एवान्वयः किन्तु नितरां तदसम्भवः। वह्नावार्द्रीकरणताया बाधितत्वात्।

बोद्धार्थस्यैवेति। बुद्धिविषयार्थस्यैव शब्दार्थत्वेन तस्य शाब्दबोधविषयत्वे निर्बाधमिति भावः।

अत्रेदं तत्वम्—कस्यापि ज्ञानस्य बाधज्ञानं हि वस्तुतो न प्रतिबन्धकम्। बाध कालेऽपि विद्यमानायां सामग्र्या ज्ञानस्य समुत्पद्यमानत्वात्। तत्र स्वसामग्र्या जायमान योर्ज्ञानयोर्यस्य ज्ञानस्य दोषविशिष्टसामग्रीजन्यत्वं नैव तस्य प्रामाण्यम्। यस्य तु पुनर्दो षरहितसामग्रीजन्यत्वं तस्यैव प्रामाण्यमिति सर्वं लघुमञ्जूषायां स्पष्टम्।

अत्यन्तासत्यपीति कारिकाया उत्तरार्धस्तु इत्थमवसेयः—

अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च।
अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्॥

अतो बन्ध्यासुतेति—

एष बन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः॥
करिणां शतमङ्गुल्या अग्रे क्रीडति नित्यशः।
कर्णयोर्विवरं सिंहः प्रविश्य प्रति गर्जति॥

इत्यादिशब्दानामुत्पद्यमानस्य शाब्दज्ञानस्यानुभवसिद्धतया नैव कदाचित् बाध सम्भवः, किन्तु तज्ज्ञानाविषयीभूतबाह्यार्थस्य बाधादप्रामाण्यं विषयस्याबाधाच्च सर्वं प्रामाण्यमिति तत्वम्।

इति संस्कृतव्याख्यायां योग्यतानिरूपणम्।

हिन्दी—परस्पर में अन्वय का प्रयोजक अर्थात् जुटानेवाला धर्म जिसमें रहे उसे योग्यता कहते हैं। जैसे 'पयसा सिञ्चति' इस वाक्य में सेकक्रिया के साथ अन्वय जुटाने वाला द्रवत्वयोग्यता जल में है। और करण कारक के द्वारा जल में अन्वय प्रयोजक ओदा करने की योग्यता सेकक्रिया में है।

इस लिये 'वह्निना सिञ्चति' अर्थात् आग से सींचता है, यह वाक्य अयोग्य है क्योंकि आग की सेकक्रिया में अन्वयकराने वाला द्रवत्वयोग्यता नहीं है। इसलिये 'वह्निना सिञ्चति' यह वाक्य प्रमाणित नहीं है।

नैयायिकों ने यह कहा है कि—ऐसे स्थलों में 'अन्वयबोध नहीं होता, किन्तु प्रत्येक पदार्थ का बोध होता है', यह भी ठीक नहीं। क्योंकि बौद्धार्थ ही सभी जगहों में बोध का विषय हुआ करता है इसलिये वहाँ बोध का अभाव है।

हरि ने भी कहा है—

अत्यन्त अविद्यमान पदार्थ में भी शब्दज्ञान करता है।

इस लिये "वन्ध्या का लड़का आकाश का फूल कान पर रख कछुए के दूध में स्नानकर खरहे की सींग का धनुष बनाकर धारण करता हुआ जाता है" इन वाक्यों में भी बौद्धार्थ लेकर ही प्रातिपदिक संज्ञा होती है।

'वह्निना सिञ्चति' इस वाक्य से बोध नहीं होने पर ही इस वाक्य के प्रयोग करने वालों के प्रति द्रवरहित अग्नि से किस प्रकार सींचने को कहते हो यह उपहास तभी हो सकता है जब कि बौद्धार्थ माना जाय अन्यथा नहीं लेकिन वाक्यार्थ वोध हो जाने पर बौद्धार्थ विषय में प्रवृत्ति लोगों की नहीं होती क्योंकि बुद्धिविषयक अर्थों में प्रामाण्य नहीं हुआ करता है। यह सब लघुमञ्जूषा में विस्तारपूर्वक वर्णित है।

इति हिन्दीव्याख्यायां योग्यतानिरूपणं समाप्तम्।

——

# अथ आसत्तिनिरूपणम्

प्रकृतान्वयबोधाननुकूलपदाव्यवधानम्—आसत्तिः । गिरिरग्निमानित्या-सन्नम् । अनासन्नं च—'गिरिर्भुक्तमग्निमान् देवदत्तेन' इति । आसत्तिर्-मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम् । अमन्दबुद्धेस्त्वासत्त्यभावेऽ-पदार्थोपस्थितावाकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न बोधे तस्य कारणत्वम् । ध्वनितं चेदं[1] 'न पदान्त' सूत्रभाष्ये ।

स्थाल्यामोदनं पचतीत्यादौ स्थाल्यामित्यस्यौदनपदेन व्यवधाने सत्यपि प्रकृतान्वयबोधानुकूलत्वादासन्नत्वाक्षतिः ।

इत्यासत्तिनिरूपणम्

---

योग्यतां निरूप्य आसत्तिं निरूपयितुमुपक्रमते—प्रकृतान्वयेति । प्रकृतो यो-न्वयबोधस्तदनुकूलपदेन अव्यवधानमासत्तिरिति तत्वम् । प्रकृतान्वयबोधानुकूलपद-व्यवधाने तु शाब्दबोधो भवत्येवेति तात्पर्यम् । अन्वयप्रतियोगिपदार्थानां तद्बोधकपदा-नाञ्चाव्यवधानेनोपस्थितिरेव आसत्तिरित्यर्थः ।

एकपदोच्चारणानन्तरं स्वारसिकार्द्धमात्राकालव्यवधानस्य पदान्तरोच्चारणे सर्वत्र सुसहत्वात् । अत एव गामित्युच्चार्य्य प्रहरानन्तरमानयेत्युच्चारणे आसत्त्यभावा-न्न गवानयनप्रतीतिः । ध्वनितञ्चेदं संहितासंज्ञासूत्रे भाष्ये ।

"गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ गिरिपदस्य भुक्तपदेन व्यवधानानास-त्तिः । परमियमासत्तिर्मन्दबुद्धेरेव शाब्दबोधे कारणं न त्वमन्दबुद्धेः । यतस्त्वा-सत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षादितः शीघ्रमेव बोधो जायते इति नासत्तेः कारणत्वम् ।

ध्वनितञ्चेति । तत्र भाष्ये स्वरदीर्घयलोपानां स्थानिवद्भावनिषेधप्रसङ्गे स्वरे कर्तव्ये "आकर्षिकः । चिकीर्षकः । दीर्घे प्रातिदीव्न" इत्यादौ लोपाजादेशस्य स्थानिवद्भावः प्रतिषेधनिक इति निषेधं विधाय तर्त्हि वक्तव्यम् न वक्तव्यम् । इह हि लोपोपि प्रकृतः आदेशोऽपि । विधिग्रहणमपि प्रकृतमनुवर्तते । दीर्घादयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसन्धिमात्रं वक्तव्यम्, स्वरदीर्घयलोपविधिषु लोपाजादेशो-

---

१. तत्र हि—'स्वरदीर्घयलोपेषु' इत्यादिवार्तिकस्यासंग्रहसिद्धार्थकत्वप्रतिपादना-र्थमिदमुक्तम् । 'आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुं, न चैतान्या-नुपूर्व्येण सन्निविष्टानि । अनानुपूर्व्येण सन्निविष्टानामपि यथेष्टमभिसम्बन्धो भवति । तद्यथा—अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तम-द्राक्षीरित्यस्य यथेष्टमभिसम्बन्धो भवति, उदाहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिती' ।

न स्थानिवत्'' इति। तत्राक्षेपः कृतः—आनुपूर्व्येण सन्निविष्टानां यथेष्टसम्बन्धः शक्यते कर्तुम्। चैतान्यानुपूर्व्येण सन्निविष्टानि। तस्योपरि समाधीयते—आनुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति। तद्यथा—अनड्वाहमुदाहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति तस्य यथेष्टमभिसम्बन्धो भवति। उदाहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति'' उक्तम्।

अनेन भाष्येण आसत्तिं विनापि शाब्दबोधो जायत इति स्पष्टं सूच्यते।

अन्वयबोधाननुकूलेति विशेषणस्य प्रयोजनं दर्शयति—स्थाल्यामोदनं पचतीति उदाहरणम्।

इति संस्कृतव्याख्यायामासत्तिनिरूपणम्।

---

हिन्दी—प्रकृत अर्थात् प्रकरणगत अन्वयबोध के जो पद अनुकूल नहीं हो उससे व्यवधान न होने ही को आसत्ति कहते हैं अर्थात् अन्वयबोध के अनुकूल पदों से व्यवधान रहने पर शाब्दबोध होता है। जैसे—गिरिरग्निमान्'' यहाँ पर गिरि पद के अग्निमान् पद से सान्निध्य रहने पर ही शाब्दबोध होता है।

''गिरिर्भुक्तमग्निमान् देवदत्तेन'' यहाँ आसत्ति नहीं है क्यों कि यहाँ गिरिपद के अग्निमान् पद के साथ ''भुक्तम्' इस पद से व्यवधान रहने के कारण तथा ''भुक्तम्'' इस पद के अग्निमान् व्यवधान रहने के कारण शाब्दबोध नहीं होने पाता।

पर यह आसत्ति मन्दबुद्धिवालों के ही शीघ्रतया शाब्दबोध में कारण हुआ करती है। तीक्ष्णबुद्धि वालों को तो आसत्ति नहीं रहने पर भी पदार्थोपस्थिति में आकाङ्क्षा वगैरह से शीघ्रतया बोध हो जाता है इसलिये शाब्दबोध में आसत्ति कारण नहीं है। यह 'नपदान्त' सूत्र के भाष्य में ध्वनित है।

इस भाष्य में—अनड्वाहमुदाहारि-या त्वं हरति शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः' इन पदों की आसत्ति नहीं रहने पर भी यथेष्ट सम्बन्ध किया गया है। इससे आसत्ति के बिना भी अन्वयबोध होता है यह स्पष्ट सिद्ध होता है।

'स्थाल्यामोदनं पचति' इस उदाहरण में ओदनपद से व्यवधान रहने पर भी प्रकृतान्वयबोध के अनुकूल होने के कारण आसत्ति है ही इसलिए अन्वयबोध सुतरां सिद्ध हुआ है।

इति हिन्दीव्याख्यायामासत्तिनिरूपणं समाप्तम्।

---

## अथ तात्पर्यनिरूपणम्

एतद्वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा-तात्पर्यम् अत एव सति तात्पर्य्ये 'सर्वे सर्वार्थवाचकाः' इति शाब्दिकनये घटशब्दात्पट-प्रत्ययो नेत्याद्युक्तम्। नानार्थस्थले लोके तात्पर्यन्तु एतत्पदं वाक्यं वा एत-दर्थप्रत्ययाय मयोच्चार्यते इति प्रयोक्तुरिच्छारूपम्। तात्पर्यनियामकं च लोके प्रकरणादिकमेव। अतो भोजनप्रकरणे सैन्धवमानयेत्युक्ते सैन्धवपदेन लवणप्रत्ययः, युद्धावसरेऽश्वप्रत्ययः। वेदवाक्ये चैश्वरतात्पर्यादर्थबोधः।

अथासत्तिनिरूपणानन्तरं तात्पर्यं निरूपयितुमुपक्रमते—एतद्वाक्यमित्यादिना ईश्व-रेच्छेति। अत्रेश्वरपदं वक्तुरुपलक्षणम्—अन्यथा नदीवृद्ध्यादिपदेष्वीश्वरेच्छाया अभावाच्छाब्दबोधानुपपत्तेः। तत्र नदीपदमोकारौकारान्तबोधनेच्छयोच्चरितमिति, वृद्धिपमादैज्बोधनेच्छयोच्चरितमिति शास्त्रकारमात्रेच्छासत्वात्। इदन्त्वार्थिकार्थ-कथनम्। न तु तत्स्वरूपम्। तच्च एतद्वाक्यं पदं वा एतमर्थं बोधयत्विति पदविशेष्य-कम्। अस्माद्वाक्यात्पदाद्वाऽयमर्थो बोद्धव्य इत्यर्थविशेष्यकम्।

तदपि च न स्वरूपत्वे हेतुः। वक्त्रा उच्चारिते वाक्ये पदे श्रोतुस्तात्पर्यज्ञा-नाभावे तादृशार्थबोधानुदयस्य सर्वजनानुभवसिद्धत्वात्। अपि तु तज्ज्ञानमेव हेतुः। तज्ज्ञानञ्च प्रकरणाद् भवतीत्युक्तप्रायम्। श्रोतृबोधायैव शब्दप्रयोगात्।

तथाहि—घटपदं घटत्वावच्छिन्ने शक्तमिति शक्तिज्ञानवान् पुरुषः 'घटमानये'ति श्रुत्वा घटमात्रोपस्थितौ एतद्घटपदं काशीस्थघटबोधनेच्छयोच्चरितं तदितरघटबोधने-च्छया वा, तथा घटमानयेति वाक्यमेतद्देशस्थघटबोधनेच्छयोच्चरितं देशान्तरीयघट-बोधनेच्छया वेति वक्तृतात्पर्यं सन्देग्धि। तदनन्तरमेतत्पदमेतदर्थबोधनेच्छयैवोच्चरित-मिति प्रकरणान्निश्चित्यार्थबोधं प्रतिपद्यते।

तथा चेत्थं कार्यकारणभावः—

तत्पदजन्यतदर्थविषयकशाब्दबोधं प्रति तदर्थविषयकं बोधजनकत्वनिष्ठप्रकारता-निरूपिततत्पदनिष्ठविशेष्यताकं, तत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिततदर्थ-निष्ठविशेष्यताकं वा वक्तृतात्पर्यज्ञानं कारणमिति फलति।

अन्यतरस्य कारणतायां मानाभावात्। नचोभयोर्हेतुत्वे परस्परजन्यबोधे व्यभि-चार इति वाच्यम्। कार्यतावच्छेदककोटौ कारणानन्तर्यनिवेशेन तद्वारणसम्भवात्।

तथा हि—

तत्पदजन्यबोधविषयत्व-प्रकारक-तदर्थविशेष्यकतात्पर्यनिश्चयाव्यवहितोत्तरजा-यमान-तत्पदजन्यतदर्थविषयक-शाब्दबोधं प्रति तत्पदजन्यबोध-विषयत्व-प्रकारकतद-

र्थविशेष्यकतात्पर्यनिश्चयः कारणम्। एवं—तदर्थविषयकबोधजनकत्वप्रकारतत्पदविशेष्यकतात्पर्यनिश्चयाव्यवहितोत्तरजायमानतत्पदजन्यतदर्थविषयकशाब्दं प्रति वक्तृतात्पर्यनिश्चयः कारणमिति ध्येयम्।

अत एव=शाब्दबोधं प्रति वक्तृतात्पर्यनिश्चयस्य हेतुत्वादेव।

सर्वार्थवाचका इति सर्वपदधर्मिकसर्वार्थप्रकारकसामान्यशक्तिग्रहस्वरूपम्।

घटपदात्पटप्रत्ययो नेति। प्रोक्तशक्तिग्रहे सर्वपदत्वेन घटशब्दस्य सर्वार्थपदेन च घटरूपार्थस्यापि भानात्तस्यापि स्मृतौ तात्पर्यनिश्चयस्य कारणत्वाभावे तत्पदात् तादृशार्थान्वयबोधपत्तिः स्यात्। सति च तात्पर्य्ये तस्मात्तदर्थबोध इष्ट एवेति सारम्। परमयं दोषः केवलं शाब्दिकनये। तार्किकाणां नये तु—शक्तिग्रहार्थस्मरणयोः समानधर्मप्रकारताकत्वस्य समानधर्मिताकत्वस्य च नियमान्नायं दोषसम्भव इति ध्येयम्।

वस्तुतस्तु—कृत्रिमाकृत्रिमन्यायो द्वारपरकपरिभाषेन्दुशेखरस्योक्तिविरोधादुपेक्ष्यः। प्रक्षिप्तो वायं ग्रन्थः—तत्र हि उक्तविधशक्तिग्रहस्य सामान्यज्ञानत्वेन बोधानुपयोगित्वमुक्तम्।

न च सामान्यशक्तिज्ञानस्य बोधानुपयोगित्वे घटपदं घटत्वावच्छिन्नवाचकमिति घटत्वसामान्यधर्मावच्छिन्नविषयकशक्तिज्ञानादन्वयबोधानुपपत्तिरिति वांच्यम्। धर्मविशेषानवच्छिन्नप्रकारताकत्वस्यैव सामान्यत्वान्नतु यथाकथञ्चिद् व्यापकधर्मावच्छिन्नप्रकारताकत्वस्य। येन तद्घटत्वापेक्षया घटत्वस्य व्यापकत्वं स्वीकृत्य तदापत्तिः प्रभवेत्। अस्तु वा यथाकथञ्चित्सामान्यत्वोपगमः, तथापि "सामान्यज्ञानन्तु न विशेषबोधोपयोगीति परिभाषेन्दुशेखरग्रन्थस्याशयात्।

युक्ततरञ्चैतत्—तत्पदजन्यतद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तत्पदनिष्ठतद्धर्मावच्छिन्ननिरूपितशक्तिज्ञानाधीनतद्धर्मावच्छिन्नार्थोपस्थितेर्हेतुतया यद्धर्मावच्छिन्ननिरूपितं शक्तिज्ञानं तद्धर्मावच्छिन्नार्थविषयकोपस्थितिशाब्दबोधयोरेवेष्टत्वात्।

अत एव द्रव्यपदं द्रव्यत्वावच्छिन्ने शक्तमिति शक्तिज्ञानाद् घटत्वावच्छिन्नविषयकस्तद्द्रव्यत्वावच्छिन्नविषयको वा अन्वयबोधो जायते।

ननु तद्द्रव्यत्वावच्छिन्नविषयतायास्तत्त्वावच्छिन्नेऽपि द्रव्यत्वावच्छिन्नत्वं न विहन्यते इति चेन्न। कार्यकारणोभयकुक्षौ तद्धर्मावच्छिन्नोभयकुक्षौ तद्धर्मावच्छिन्नविषयतापदेन तद्धर्मपर्याप्तावच्छेदकतानिरूपितविषयताया ग्रहणात्।

नानार्थस्थल इति। तत्वञ्च नानार्थनिरूपितनानाशक्तित्वमेव। अर्थे नानात्वं च नानाधर्मावच्छिन्नत्वम्।

अत एवार्थभेदाच्छब्दभेदपक्षेऽपि घटत्वाद्येकधर्मावच्छिन्नवाचकशब्दानां न नानार्थकत्वम्। न चार्थभेदाच्छब्दभेदपक्ष एव न वर इति वाच्यम्; सकृदुच्चरितः शब्दः

सकृदर्थं गमयतीति न्यायस्य जागरूकत्वेन नानार्थस्थलीयातिप्रसङ्गवारणाय चावश्य-कत्वेनार्थभेदे शब्दभेदाङ्गीकारमन्तरेण गत्यन्तराभावात् ।

इति संस्कृतव्याख्यायां तात्पर्यनिरूपणं समाप्तम् ।

---

हिन्दी—यह वाक्य या पद उस अर्थ के बोध कराने के लिए उच्चारणीय है इस प्रकार की ईश्वरेच्छा ही को तात्पर्य कहते हैं। इसलिए तात्पर्य रहने ही पर "सर्वे सर्वार्थवाचकाः" अर्थात् सब पद सभी अर्थों का वाचक है इस वैयाकरणों के सिद्धान्त में घट शब्द से पट का बोध नहीं होता है यह कहा जा चुका है।

एक पद के नानार्थक स्थल में तात्पर्य 'इस पद को या वाक्य को इस अर्थ के बोध कराने के लिए उच्चारण करता हूँ' इस प्रकार का प्रयोग करने वाले की इच्छा रूप ही है और तात्पर्य का नियामक लोक में प्रकरण वगैरह ही है। इस लिये भोजन प्रकरण में "सैन्धवमानय" इस वाक्य में सैन्धवपद से लवण का बोध होता है, और युद्ध के अवसर में अश्व का बोध होता है। वेदवाक्य में ईश्वर के तात्पर्य से अर्थ-ज्ञान होता है।

इति हिन्दीव्याख्यायां तात्पर्यनिरूपणं समाप्तम् ।

## अथ अकाङ्क्षानिरूपणम्

ननु प्रकरणादीनां शक्तिनियामकत्वे शक्त्यैव निर्वाहे किन्तात्पर्य्येणेति चेन्न। अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायते, अर्थद्वये शक्तिसत्त्वात्। तात्पर्यं तु क्वेति न जानीम इत्यनुभवविरोधात्। अत एव च पय आनये-त्युक्तेऽप्रकरणज्ञस्य दुग्धं जलं वा आनेयमिति प्रश्नः सङ्गच्छते।

इत्याकाङ्क्षादिनिरूपणम्

---

प्रकरणादीनामिति। तच्छब्दस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तिग्रहे श्रोता तच्छब्दे श्रुते कोऽस्य बुद्धिस्थ इति श्रोतुः शक्तिसंशयोपशमः प्रकरणवशाद् भवति।

एवं नानार्थस्थलेपि प्रकरणेन शक्तिसंशयोपशमे निश्चतैकार्थोपस्थितौ निःसंशया-न्वयबोधसम्भवे किं तात्पर्य्यावधारणस्य हेतुत्वकल्पनयेति प्रश्नग्रन्थस्य तात्पर्य्यम्।

एकस्माद् ग्रन्थादर्थद्वयविशेष्यकबोधेऽर्थद्वये शक्तेः सत्त्वात् तात्पर्य्येणैवेष्टार्थस्य निर्णयो भवति। अन्यथाऽप्रकरणस्य पय आनयेत्युक्ते दुग्धं जलं वाऽऽनेयमिति प्रश्ना-वकाशस्यैव निरर्गलत्वमित्युत्तरग्रन्थस्याशय इति ध्येयम्।

इति संस्कृतव्याख्यायामाकांक्षादिनिरूपणम्।

हिन्दी—अब प्रश्न यह उठता है कि प्रकरण वगैरह यदि शक्ति का नियामक है तो शक्ति के द्वारा ही निर्वाह हो जायगा, तात्पर्य की क्या आवश्यकता ?

उत्तर यह है कि एक शब्द से जहाँ दो अर्थ का बोध होता है और दोनों अर्थों में शक्ति है तो बिना तात्पर्य के काम नहीं चल सकता। जो प्रकरण नहीं जानने वाला है उस पुरुष को 'पय आनय' इस पद से दुग्ध या जल लाने में अर्थद्वय का बाध नहीं हो सकता है क्योंकि शक्ति के द्वारा जब 'पयः' पद से दुग्ध का बोध हो जायगा तो पुनः "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति सिद्धान्त के अनुसार अभिधा शक्ति ही से जल का बोध नहीं हो सकता, तो जो प्रकरणज्ञ नहीं है उसको "पय आनय" कहने पर "दूध लाना चाहिये" या जल यह प्रश्न किस प्रकार सङ्गत हो सकता है और जब तात्पर्य मानते हैं तब—

"तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम्॥"

इस आलङ्कारिकों के सिद्धान्त के अनुसार तात्पर्य्य तराजू पर तौला हुआ नहीं है कि केवल पय पद के दूध ही में तात्पर्य है जल में नहीं, इसलिये उक्त प्रश्न संगत होने पाता है अन्यथा नहीं।

इति हिन्दीभाषायामाकाङ्क्षादिनिरूपणं समाप्तम्।

---

## अथ धात्वर्थनिरूपणम्

अथ सकलशब्दमूलभूतत्वाद्धात्वर्थो निरूप्यते। तत्र फलानुकूलो यत्नस हितो व्यापारो धात्वर्थः, फलत्वं च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभि व्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। विभागजन्यसं योगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम्[1] कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता। व्यापरत्वं च-धात्वर्थफल जनकत्वे सति धातुवाच्यत्वम्। अनुकूलत्वं संसर्गः। अनुकूलत्वं च-फल निष्ठजन्यतानिरूपितजनकत्वम्।

'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'

इति निरुक्तोक्तेर्व्यापारविशेष्यको बोधः। तत्र तिङ् वाच्यं संख्याविशि कारकम्, कालश्च व्यापारविशेषणम्।

अथ शब्दनिष्ठतात्पर्यं निरूपप्य सर्वशब्दानामुपजीव्यत्वान्मूलभूतत्वाच्च धात्व निरूपयितुमुपक्रमते—अथेत्यादिना। परमिदन्तु शब्दमात्रस्य धातुप्रत्ययनिष्पन्नत मुरीकृत्य "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति मतमनुसृत्य ज्ञेयम्।

"फलमेव धात्वर्थो भावना तु वाच्यैव न, तद्विषयकशाब्दबोधस्य सर्वत्रानु भवात्। किन्तु लिङ्चैव। परं सा "आख्यातवाच्येति" यद् भास्करानुयायिमतं त सत् 'कर्तरि कृत्" इत्यत एव कर्तृग्रहणस्य "लः कर्मणि" इत्यत्रानुवृत्त्या तिङ्कृ वैषम्यस्य दुरुपपादत्वात्।

यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थो, यत्न आख्यातार्थः। धात्वर्थे कारक न्वय इति "तत्तु समन्वयात" इति सूत्रस्थवाचस्पत्यादिग्रन्थेभ्यो लभ्यमानं गुरुमतं तदपि भूषणकारोक्तयत्नाख्यातार्थत्वावादिनैयायिकमतदूषणग्रस्तमित्यभिप्रे स्वमतं निर्दिशति नागेशः—तत्रेति। तत्र=धात्वर्थविषये, फलानुकूलो यत्नसहि व्यापार एव धात्वर्थः। अत एवाग्निसंयोगाधीनव्यापारसत्त्वे "अयं न पचति" इ प्रयोगो भवत्येव तत्र यत्नाभावात्। आमवातजडीकृतकलेवरस्य च यत्नसत्त्वेऽपि यत्न स्योत्थानानुकूलत्वाभावान्नोत्तिष्ठतीति प्रयोग इति तात्पर्यम्।

फलत्वञ्चेति। 'यद्यपि लोके रूढ्या फलपदं लोकप्रसिद्धविक्लित्त्याद्यर्थोपस्थाप

---

१. विभागस्य फलत्ववारणाय स्त्यन्तोपादानम्। संयोगे तद्वारणाय प्रकार तावत्त्वान्तम्। तेन वृक्षात् पर्णं भूमौ पततीत्यादौ विभागाश्रयस्य वृक्षादेः संयोग श्रयस्य भूम्यादेश्च न कर्मत्वमित्यादिकमूह्यम्।

तथाप्यत्र शास्त्रे फलपदस्य पारिभाषिकत्वमेव। सकर्मकत्वादिव्यवहारानुरोधात्। तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वम्।

जन्यत्वञ्च—जन्यत्वनिष्ठप्रकारतानिरूपितप्रतीतिविषयत्वम्। गम्यादिधात्वर्थ-व्यापारस्य तत्त्ववारणाय सत्यन्तेति विशेषणम्। गम्यादिधात्वर्थव्यापारजन्यविभागेऽति-प्रसङ्गवारणाय विशेष्यदलम्।

नवीनमतानुसारेण लक्षणं परिष्कुरुते नागेशः—फलत्वञ्च 'तद्धात्वर्थजन्यत्वे सति' इत्यादि। अत्र लक्षणे जन्यत्वं हि आरोपितानारोपितसाधारणं ज्ञेयमन्यथा 'ईश्वर-स्तिष्ठति' 'पत्ये शेते' इत्यादावतिप्रसङ्गः स्यादित्यवधेयम्।

उभयमिति। विभागस्य फलत्ववारणाय सत्यन्तविशेषणम्। संयोगे फलत्ववार-णाय प्रकारतावत्त्वान्तं विशेष्यदलम्। अत एव वृक्षात्पत्रं भूमौ पततीत्यादौ विभागा-श्रयस्य वृक्षादेः संयोगाश्रयस्य भूम्यादेश्च न कर्मत्वमित्यवधेयम्।

कर्तृप्रत्ययसमभिव्याहार इति। फलविशिष्टव्यापारो धातूनां शक्तिरिति पक्ष-मनुसृत्येदम्। विशेष्यता प्रकारता चात्र शाब्दबोधीया ग्राह्या नतूपस्थितीया तथा सति फलव्यापारयोः खण्डशक्तिवादे समूहालम्बनोपस्थितौ विशेष्यविशेषणभावाभावेन प्रकृतलक्षणाऽसङ्गत्यापत्तेः।

'पच्यते देवदत्तेन' इत्यादौ विक्लित्तिरूपफलविशेष्यकबोधमाश्रित्यातिव्याप्ति-दोषवारणाय कर्तृप्रत्ययसमभिव्याहार इति विशेषणम्।

एवञ्च फलस्य लक्षणमित्थमवसेयम्—

'कर्तृप्रत्ययसमभिव्याहृततद्धात्वर्थव्यापारनिष्ठशाब्दबोधीयविशेष्यतानिरूपितानुकू-लत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वे सति तद्धात्वर्थव्यापारजन्यत्वम्' इति।

अत्रेदमाकूतम्—फलावच्छिन्ने व्यापारे धातोः शक्तिरित्येकः पक्षः फलव्यापा-रयोश्च खण्डशः शक्तिरित्यपरः पक्षः। तत्र विशेष्यविशेषणभावे कामचारे तात्पर्यनिश्चि-तिरेव नियामिका इति सारम्।

'तद्धात्वर्थजन्यत्वे सति' इति। यद्धातुं प्रति फलत्वमिष्टं तद्धातुजन्योपस्थितीयमुख्य-विशेष्यतानिरूपितप्रकारताश्रयत्वं फलत्वम्।

तद्धातुजन्योपस्थितीयमुख्यविशेष्यताश्रयत्वञ्च-तद्धात्वर्थत्वम्। विशेष्यतायां मुख्य-त्वञ्च—प्रकारतासामानाधिकरण्यं प्रकारत्वानवच्छिन्नत्वं वाऽवसेयम्।

विभागजन्यसंयोगादिरूप इत्यत्रादिपदेन संयोगजन्यविभागस्य परिग्रहः। यथा—कुड्यात्पततोऽश्वात्पतत्यश्वाह इत्यादौ गमिवत्पतेरपि उत्तरदेशसंयोगानुकूल-व्यापाररूपं गमनमेवार्थः, तथापि कुड्याशब्दात्पञ्चम्या अन्यथानुपपत्त्या तत्रत्यसंयोगे विभागजन्यत्वं नूनं वाच्यम्। विभागावधेरेवापादानसंज्ञाविधानात्। एवमग्रेऽश्वावधिके-ऽश्ववाहकर्तृकेऽपि विभागेऽश्वप्रतियोगिकसंयोगजन्यत्वमपि नूनमङ्गीकार्यम्। अश्वात्पत-तीत्यस्य 'अश्वाद्विभजते' इत्यनेन तुल्ययोगक्षेमत्वात्।

तथा च—'कुड्यावधिकविभागजन्यसंयोगानुकूलव्यापारवदश्वावधिकविभाग-न्योत्तरदेशसंयोगानुकूलो वर्तमान एकाश्ववाहाभिन्नाश्रयवृत्तिर्व्यापार' इति शाब्दबोधः फलति ।

यदि तत्र 'धातुजन्यबोधीयविशेष्यतानिरूपितप्रकारत्वाश्रयत्वमात्रं फलस्य लक्षण-मुच्येत तदा पूर्वत्र विभागजन्यसंयोगे, उत्तरत्र संयोगजन्यविभागे चातिव्याप्तिः स्यात् यथाश्रुते तु नायं दोष आपतति । प्रकृतधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वा-भावात् प्रकृतधात्वर्थजन्यत्वाभावादिति तत्त्वमवसेयम् ।

फलस्य विशेष्यतेति । "चैत्रेण तण्डुलः पच्यते" इत्यत्र चैत्रवृत्तिव्यापारजन्य-एकतण्डुलाभिन्नाश्रयिका विक्लित्तिरिति स्वमते फलविशेष्यकबोधस्वीकारादिति भावः

अत्रेदं सारम्—घटादिशब्दानां घटत्वादिविशिष्टेष्विव धातूनामपि अनुकूलत्वे-फलविशिष्टे व्यापारे शक्तिस्वीकारे कर्तृकर्मप्रत्ययस्थलेऽन्वयबोधे विशेष्यविशेषणयोर्व्य-त्यासस्य कर्तुमशक्यत्वेन वैचित्र्यानुपपत्तिः स्यादिति ।

व्यापारस्य लक्षणे—धातुवाच्यत्वमात्रोपादाने फलेऽतिव्याप्तिः स्यादतः सत्यन्त-विशेषणम् । केवलं सत्यन्तविशेषणोपादानेपि कर्तृवृत्तिव्यापारविवक्षायां काष्ठतण्डुला-दिव्यापारेऽतिप्रसङ्गः स्यादतो विशेष्यदलम् ।

भावप्रधानमाख्यातमिति । भावः क्रिया प्रधानं यस्मिन् तत् भावप्रधान-आख्यातम् । भावोऽत्र क्रिया सा च करणव्युत्पत्त्या व्यापारं, कर्मव्युत्पत्त्या च फलं बोधयति । एवञ्चाख्याते फलव्यापारयोः प्राधान्यमिति फलति । सत्वं-द्रव्यं प्रधानं यत्र तानि सत्वप्रधानानि नामानि इति निरुक्तात् भूवादिसूत्रस्थक्रिया-प्राधान्य-बोधकभाष्याच्च वैयाकरणानां मते व्यापारमुख्यविशेष्यकशाब्दबोधो भवति नैयायिकानां मते तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध इति सारम् ।

तिङ्वाच्यमिति । तिङर्थाः कर्तृ-कर्म-संख्या-कालाः । तत्र संख्या कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मण्यन्वेति । तद्विशिष्टकर्तुश्च धात्वर्थव्यापारेऽन्वय इति ज्ञेयम् ।

हिन्दी—तात्पर्य निरूपण के बाद अब सम्पूर्ण शब्दों के मूलभूत धातु हैं, क्योंकि धातु द्वारा ही शब्द बनते हैं इसलिए धात्वर्थ-निरूपण किया जा रहा है ।

धात्वर्थ का लक्षण यह है कि—फल के अनुकूल यत्न सहित जो व्यापार वह धात्वर्थ है ।

फलका लक्षण यह किया है कि—धात्वर्थ जो व्यापार उससे जो जन्य अर्थात् उत्पन्न हो, और कर्तृ प्रत्ययों के जुटान में धात्वर्थ जो व्यापार उसमें रहने वाला विशेष्यत्व धर्म उस धर्म से निरूपित ( निर्दिष्ट ) जो विशेषणत्व धर्म वह धर्म जिसमें रहे वही फल है ।

'वृक्षात् पर्णं भूमौ पतति' इत्यादि स्थलों में विभाग से जन्य अर्थात् उत्पन्न संयोग रूप, तथा संयोग से जन्य विभाग रूप पतत्यादि में विभाग संयोग फल नहीं कहा जाय, इसलिए सत्यन्त विशेषण और प्रकारतावत्वान्त विशेष्य दल लक्षण में देना आवश्यक है। इसलिए विभाग का आश्रय वृक्षादि, संयोग के आश्रय भूम्यादि का कर्म नहीं होने पाता।

कर्मप्रत्ययसमभिव्याहार में तो फल ही विशेष्य होता है और व्यापार ही विशेषण हुआ करता है।

व्यापार का लक्षण यह है कि-धात्वर्थं जो फल उसका जनक हो अर्थात् उत्पन्न करने वाला हो और धात्वर्थं हो। अनुकूल एक संसर्ग है। जिस अनुकूल का लक्षण यह है—फल में रहने वाला जो जन्यत्व धर्म उस धर्म से निरूपित जनकत्व धर्म अर्थात् उत्पादकत्व धर्म जिसमें रहे वही अनुकूल धर्म है और शेष विरुद्ध धर्म है।

'क्रिया प्रधान आख्यात होता है और लिङ्ग-संख्या-कारक प्रधान नाम होता है' इस निरुक्त वचन से व्यापारमुख्यविशेष्यक शाब्दबोध वैयाकरण के मत में होता है। उनमें तिङ् का अर्थ कर्ता, कर्म, संख्या, और काल है। और काल व्यापार का विशेषण है।

परे तु फलव्यापारयोर्धातोः पृथक्शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितयोस्तथा अन्वयस्यौत्सर्गिकत्वात्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्।

तथाहि—फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम्, धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम्। तस्मात्फलावच्छिन्ने व्यापारे; व्यापारावच्छिन्ने फले च धातूनां शक्तिः कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इत्याहुः[1]॥

१. यद्यपि फलावच्छिन्नव्यापारत्वस्य व्यापारावच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वकल्पनप्रयुक्तं गौरवमेतेषां मते स्फुटं, तथापि भिन्नशक्तिवादिनां फलविशेषणकव्यापारविशेष्यकावान्तरवाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणम्, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनेऽतिगौरवम्। विशिष्टशक्तिवादिनां तु तत्तत्समभिव्याहारवशाद् अवान्तरवाक्यार्थबोधस्थानीया विशिष्टोपस्थितिरेवेति न तेषामुक्तकार्यकारणभावद्वयम्। एवं धातोः फलव्यापारसमू-

नागेशः स्वकीयं मतं प्रकमितुमुपक्रमते— परे त्वित्यादिना । अयमेतदभिप्रायः फले व्यापारे च धातोः पृथक् शक्तिस्वीकारे हि तयोः फलव्यापारयोरुद्देश्यविधे भावेनान्वयापत्तिः स्यादर्थात् तात्पर्य्यविशेषनिश्चयादिवशेन कदाचित् फलमुद्दि व्यापारस्य, व्यापारमुद्दिश्य कदाचिच्च फलस्य विधानं स्यादिति ज्ञेयम् ।

पृथगुपस्थितयोः— विभिन्नशक्तिग्रहजन्यस्योपस्थितीय विषयतावतोरित्यर्थः । नीलो घट इत्यादौ यथा नीलघटयोर्विभिन्नशक्तिग्रहजन्यविभिन्नोपस्थितिविषययोरु विधेयभावेन अन्वयस्य बोधस्तथैवात्रापि स्यादित्यवधेयम् ।

नन्वेकपदाद् विभिन्नशक्तिज्ञानजन्यस्योपस्थितपदार्थद्वयस्य उद्देश्यविधेयभावे न्वयबोधे नैव किमपि मानं न वा कोऽपि दृष्टान्तश्चेति पृथक् शक्ति स्वीकुर्वाणानां नैव कश्चिद् दोषलेश इत्यरुचेराह—किञ्चेति । एकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौ अर्थात् शाब्दबोधद्वयस्य परस्परं वैचित्र्यापादनाय विलक्षणकार्य्यकारणभावद्वयस्य क गौरवं स्यादिति तत्त्वम् ।

तदेव दर्शयितुमुपक्रमते तथाहीत्यादिना । फलविशेषणकव्यापारबोधे—फलविशे कव्यापारबोधो यस्य सः तस्मिन्निति बहुव्रीहिणा फलनिष्ठविशेषणतानिरूपितविशे शालिव्यापारबोधेइत्यर्थः ।

एवं व्यापारो विशेषणं यस्मिन्निति बहुव्रीहिणा व्यापारनिष्ठविशेषणतानिरू फलनिष्ठविशेष्यताशालिफलबोधे इत्यर्थः ।

कार्यकारणभावद्वयकल्पनमिति । फलत्वावच्छिन्ना या प्रकारता तत्प्रकारतानि पिता या व्यापारनिष्ठा विशेष्यता तच्छालिशाब्दबुद्धित्वावच्छिन्नं प्रति कर्तृप्रत्यय मिव्याहृतधातुजन्योपस्थितिः कारणम् । एवं व्यापारत्वावच्छिन्ना या प्रकारता त रतानिरूपिता या फलनिष्ठा विशेष्यता तच्छालिशाब्दबुद्धित्वावच्छिन्नं प्रति कर्म यसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्य्यकारणभावद्वयकल्पने पृथक्शक्तिमतां स्यादिति तत्त्वम् ।

धातोरर्थद्वये शक्तिद्वयकल्पने च हर्यादिशब्दवन्नानार्थकतापत्तिः, यतश्च नाना रूपिता नानाशक्तिमत एव नानार्थकत्वात् । किञ्च धातोः फलव्यापारयोर्भिन्न स्वीकारे एकार्थविषयकान्वयबोधं प्रति अपरार्थोपस्थितेः प्रतिबन्धकत्वमूलकात् न्चरितन्यायेन तयोः कस्यापि बोधो न स्यात् । अत एव हरिशब्दवत् युग अश्वसूर्य्ययोर्बोधः, न वा धातूनामनेकार्थत्वपक्षे युगपत् पचतीत्यतस्तापपाक इत्यवधेयम् ।

---

हार्थे उपस्थितिशक्तिकल्पनं विशिष्टार्थे शाब्दबोधशक्तिकल्पनं, शक्तेः बोधजनक श्च असम्बद्धे धातौ अनुपपत्त्या विशिष्टार्थनिरूपितसम्बन्धद्वयकल्पनं च विशिष्ट वित्यतिगौरवमिति दिक् ।

ननु विनिगमनाविरहाद् विशिष्टशक्तिस्वीकारे सर्वत्र बोधापत्तिः स्यादत आह— कर्तृकर्म्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधनियामक इति। अर्थात् फलावच्छिन्न व्यापारबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् एवं व्यापारावच्छिन्नफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति नैव सर्वत्र सर्वबोधप्रसङ्गस्स्यादिति तत्त्वम्।

अत्रायं विचारणीयविषयः—विशिष्टे शक्तिकल्पने शक्यतावच्छेदकत्वं फलावच्छिन्नव्यापारत्वस्य; व्यापारावच्छिन्नफलत्वस्य च कल्पितमिति गौरवम्। फलव्यापारयोः पदार्थैकदेशत्वेन तत्र कर्तृकर्मादीनामन्वयासम्भवोऽपि 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति न्यायस्य जागरूकत्वात्। प्राचामेकवृन्तावलम्बिफलद्वयवत् उभयांशे एका खण्डशः शक्तिरिति न शक्तिद्वयकल्पनम्, न वा बोधजनकत्वसम्बन्धद्वयकल्पनम्। प्रत्युत नव्यानामेव कल्पनीयं तद् भवेदिति सुधीभिः स्वयं विचारणीयम्।

हिन्दी—नागेश अपना मत 'परे तु' शब्द से वर्णन करते हैं—

धातु के फल और व्यापार दोनों अलग-अलग शक्ति मानने में उद्देश्य-विधेय भाव से दोनों में अन्वय होने लगेगा क्योंकि भिन्न भिन्न उपस्थित पदार्थ के उसी प्रकार अन्वय होना स्वाभाविक हैं। और दूसरा गौरव यह है कि एकपद में दो व्युत्पत्ति की कल्पना करनी पड़ेगी क्योंकि फलविशेषणक व्यापार विशेष्यक शाब्दबोध में कर्तृप्रत्ययवाली धातुजन्य उपस्थिति कारण हुआ करती है और व्यापार विशेषणकफलविशेष्यक शाब्दबोध में कर्मप्रत्यय वाला धातु-जन्य उपस्थिति कारण हुआ करती है। इसलिए दो कार्य कारणभाव की कल्पना करनी पड़ेगी और धातु के दो अर्थ में दो शक्ति की कल्पना करनी पड़ेगी ओर धातु के बोधजनकत्व रूप दो सम्बन्ध की कल्पना करने में अत्यन्त गौरव होने लगेगा। इसलिए फलावच्छिन्न व्यापार में और व्यापारावच्छिन्न फल में धातु की शक्ति माननी चाहिए।

तत्तद् बोध में अर्थात् फलविशेषणक व्यापारबोध में कर्तृप्रत्यय का जुटान और व्यापार विशेषणक फल बोध में कर्मप्रत्यय का जुटान ही नियामक होता है।

यत्तु मीमांसकाः फलं धात्वर्थो, व्यापारः प्रत्ययार्थ इति वदन्ति। तन्न। "लः कर्मणि" इत्यादिसूत्रविरोधापत्तेः। नहि तेन व्यापारस्य प्रत्ययार्थता लभ्यते।

किञ्च पचति पक्ष्यति पक्ववानित्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता।

किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधे पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्।

किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः। न च प्रत्ययार्थव्यापारव्य-

धिकरणफलवाचकत्वं सकर्मकत्वम्, तन्मते तत्समानाधिकरणफलवाचक मकर्मकत्वञ्च, प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्, घटं भावयतीत्यादौ णि र्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम्। अभि नानभिधानव्यवस्थोच्छेदापत्तेः। न च व्यापारेणाश्रयाक्षेपात्कर्तुरभिधा कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्य जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ "क्रियाप्रधानमाख्यात इति यास्कवचोविरोधापत्तेः।

मीमांसकमतं प्रदर्श्य खण्डयितुमुपक्रमते--यत्त्वित्यादिना। इदं हि मीमांस तम्—'अनन्यलभ्यो हि शब्दार्थ इति न्यायात् फलमात्रं धात्वर्थः। व्यापारस्य प्र नैव लाभात्, व्यापारेणाश्रयस्याक्षेपात् व्यापारमात्रं प्रत्यार्थ इति सुधियो विभावयन्

मीमांसकमतं खण्डयति--तन्नेत्यादिना। व्यापारस्य 'लः कर्मणी'ति सूत्रेण यार्थत्वालाभे सूत्रविरोध इति बोध्यम्।

तेनेति। तेन सूत्रेण कर्तरि लकारा भवन्ति। कर्ता तु व्यापाराश्रयः। एवञ्च सूत्रेणाश्रयमात्रस्य प्रत्ययार्थत्वं स्वीक्रियते व्यापारस्य धातुतोऽपि लाभेनान्यलभ्य अनन्यलभ्यस्यैव शब्दार्थत्वाच्च मीमांसकानां मते व्यापारस्य प्रत्ययार्थता, सूत्रकृतां आश्रयमात्रस्य प्रत्ययार्थतेति तयोर्मतभेद इति बोध्यम्।

ननु लः कर्मणीत्यादिसूत्रे कर्तृकर्मपदयोः कर्तृत्व-कर्मत्वधर्मपरत्वेन कर्तरि ल इत्यस्य कर्तृत्वे लकारः। कर्मणि लकार इत्यस्य कर्मत्वे लकार इत्यर्थे 'प्रकृतिजन्य प्रकारीभूतो भाव' इति सिद्धान्तस्य जागरूकत्वेन कर्तृपरस्य व्यापाराश्रयत्वात्तत्र रस्य विशेषणत्वेन तस्य प्रत्ययार्थत्वं निर्बाधमेवेत्यत आह—किञ्चेति। पचतीत फूत्कारादिबोधनाय नानाप्रत्ययानां नानाशक्तिकल्पनापेक्षया धातेरेव शक्तिकल्पन चित्यमिति भावः। इति प्रथमस्य किञ्चेत्यरुचिग्रन्थस्याशयः।

ननु व्यापारेऽनेकप्रत्ययानां शक्तिकल्पने यथा गौरवं, तथा धातूनामपीत्यत किञ्चेति। लादिप्रत्ययानां फूत्कारत्वादिधर्मपुरस्कारेणैव व्यापारे शक्तितत्वे भवतीत्यादावपि प्रोक्तधर्मपुरस्कृतव्यापारमात्रोपस्थितौ सति तात्पर्ये फूत्कारां बोधप्रसङ्ग इति तत्त्वम्। इति द्वितीयस्य किञ्चेत्यरुचिग्रन्थस्य सारांशः।

पचिसमभिव्याहारेति। तत्तद्व्यापारविशेषबोधे धातुविशेषसमभिव्याहृतप्रत्ययवि ज्ञानस्येत्यर्थः एवञ्च फूत्कारत्वावच्छिन्नबोधे पच्पदसमभिव्याहृततिबादिपदत्वरूपाद ज्ञानं कारणमित्येवं कार्यकारणभावकल्पनेऽतिगौरवमिति भावः।

ननु धातुत्वाच्छिन्नस्य व्यापारे शक्तिकल्पनायामपि विशेषव्यापारबोधं प्रति द्धातुसमभिव्याहारस्य कारणत्वे धात्वर्थो व्यापार इति मतेऽपि गौरवं समानमे आह—किञ्चेति।

व्यापारस्य धात्वर्थे स्वार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्। स्वार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वमिति लक्षणेन सकर्मकत्वाकर्मकत्वव्यवहारस्योपपद्यते प्रत्ययार्थत्वे तु सा व्यवस्था नोपपद्येतेति भावः।

ननु प्रत्ययार्थव्यापाराश्रयस्य कर्तृत्वाङ्गीकारे णिच्प्रत्ययार्थप्रेषणव्यापाराश्रयत्वस्य घटादावसम्भवेनैकत्वाभावादणि कर्तुर्णौ कर्मत्वानुपपत्त्या घटं भावयतीत्याद्यनुपपत्तिरत आह—घटं भावयतीति। मा भूदेवमुत्पत्तिरूपफलाश्रयत्वेन कर्तुरित्येव कर्मत्वसिद्धेरिति तदाशयः।

ननु पाचयति देवदत्तेन यज्ञदत्त इत्यादावपि प्रयोज्यकर्तुर्विक्लित्यनुकूलव्यापाररूपफलाश्रयत्वेन कर्मत्वापत्तिर्णिजर्थव्यापारनिष्ठविशेष्यतानिरूपितानुकूलत्वसंसर्गावच्छिन्नप्रकारताश्रयत्वरूपफलत्वस्य तत्राप्यक्षतेः। मम तु णिजर्थेनाप्यमानस्य कर्तुः कर्मत्वं चेद् गत्याद्यर्थानामेव धातूनामिति नियमेन नैव तत्र प्राप्तिरिति चेन्न। 'विवक्षातः कारकाणि भवन्ती'ति न्यायेन तस्य तादृशफलाश्रयत्वेनाविवक्षया तस्य समाधेयत्वादिति सुधियो विभावयन्तु।

अभिधानानभिधानोच्छेदापत्तिरिति। अनभिहित इति सूत्रे कटं भीष्मं कुर्वित्यत्र विशेषणेन कर्मत्वोक्तावपि द्वितीयोपपत्तये कृत्तद्धितसमासैरभिहिते क्वचिन्निपाते चेति परिगणनस्य भाष्ये दर्शनात्तैरेवाभिधाने कर्मत्वादीनां द्वितीयादीनां साधुत्वाभावे भाष्यकृत्स्वारस्यात्, फलाश्रयस्य कर्मत्वेन व्यापाराश्रयस्य कर्तृत्वेन च भवन्मते कर्तृकर्मणोस्तिङानभिधाने च 'हरिं' भजति भक्त' इत्यत्र भक्ते तृतीयायाः, 'पच्यते तण्डुल' इत्यत्र तण्डुले द्वितीयायाश्चापत्तौ भाष्योक्तपरिगणनमेवासङ्गतं स्यादिति ध्येयम्।

नच व्यापारेणेति। शक्तिग्रहजन्योपस्थितिविषयत्वं नाभिधानं, न वा लक्षणाग्रहजन्योपस्थितिविषयत्वम्, किन्तु बोधविषयत्वमेव। एवञ्चानुमितिरूपाक्षेपात्मकज्ञानविषयत्वस्यास्मन्मतेऽपि कर्मादिषु सत्त्वेनाभिधानमिति सा व्यवस्था सुतरामुपपद्यते इति ज्ञेयम्।

क्रियाप्रधानमिति। 'क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति हि यास्कसिद्धान्तोऽतस्तेषामपि मते व्यापारमुख्यविशेष्यकशाब्दबोधो ज्ञेयः। स च पूर्वोक्तरीत्या नैव सम्भवेदिति यास्कवचोविरोधस्य कारणम्।

हिन्दी—मीमांसकों ने जो धातु का अर्थ फल और प्रत्ययका अर्थ व्यापार माना है वह ठीक नहीं। क्योंकि 'लः कर्मणि च भावे चाकर्मकेभ्यः' इस सूत्र के द्वारा प्रत्यय का अर्थ व्यापार है यह सिद्ध नहीं होता, इसलिए उक्त सूत्र से विरोध होने लगेगा। और दूसरी बात यह है कि 'पचति, पक्ष्यति, पक्ववान्' इत्यादि स्थलों में फूत्कार आदि की प्रतीति होने के लिए उनमें अनेक प्रत्ययों की शक्तिकल्पना की अपेक्षा एक धातु की ही शक्ति कल्पना उचित है। तीसरी बात यह है कि फूत्कार

आदि प्रत्यय का अर्थ है तो गच्छति इत्यादि स्थलों में फूत्कारादि की प्रतीति न जाय इसलिए पचि वगैरह क्रियाओं का जुटान के कारण कल्पना करने में ग गौरव हो जायगा। चौथी बात यह है कि—सकर्मक अकर्मक के व्यवहार का उच्छेद होने लगेगा। तब किसी ने यह कहा कि—"प्रत्ययार्थव्यापारव्यधिकरणफल कत्वं सकर्मकत्वम्" अर्थात् प्रत्यय का अर्थ जो व्यापार उससे पृथक् फल का वाचक है वह सकर्मक है और 'तत्समानाधिकरणफलवाचकत्वमकर्मकत्वम्' अर्थात् प्रत्य व्यापार के साथ-साथ फल का वाचक जो है वह अकर्मक है—इस तरह के मीमां के मत में प्रत्ययार्थ व्यापार का आश्रय जो है वही कर्ता होता है तो "घटं भाव इत्यादि स्थलों में णिच् प्रत्यय का अर्थ व्यापार उस व्यापार से पृथक् फल का व घटादि भी है तो "कर्तुरीप्सिततमं कर्म" इस सूत्र से घटादि की कर्म संज्ञा निर्वा तो मीमांसक मत भी ठीक ही है। किन्तु यह कहना ठीक नहीं क्योंकि उक्तानुस व्यवस्था नहीं होने पायगी अर्थात् ऐसी समस्या में 'अभिधानञ्च तिङ्कृतद्धितसमासैः' भाष्योक्त परिगणन व्यर्थ होने लगेगा। तब किसी ने यह कहा कि कर्त्राख्यात में पार से आश्रय का आक्षेप हो जायगा तो कर्ता उक्त हो जायगा और कर्माख्या प्रधान फल से स्वाश्रय का आक्षेप हो जानेपर कर्म उक्त हो जायगा तो उक्तानुस व्यवस्था का उच्छेद कैसे ?

यह भी ठीक नहीं, क्योंकि जातिशक्तिवाद में जाति से शक्ति का आक्षेप प्रकार होता है उसी प्रकार आश्रय की प्रधानता हो जाने पर "क्रियाप्रधानमा सत्वप्रधानानि नामानि" इस यास्कवचन से विरोध होने लगेगा।

किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसम्भवेन 'लः कर्म इत्यस्य वैयर्थ्यापत्तेः। कर्मकर्तृकृतां कारकभावनोभयत्राचकत्वे गौरवाच्च।

किञ्च भावविहितघञादीनां व्यापारवाचकत्वे ग्रामो गमनवानित्याद्यापत्ति तद्वाचकत्वे तु तेनापि स्वाश्रयाक्षेपे कर्तुरभिधानापत्तिः।

किञ्च 'गुरु शिष्याभ्यां पाचयति' इत्यादौ "हेतुमति च" इति सूत्र प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः। ए सङ्ख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वयाच्छिष्याभ्यामिति द्वि नानापत्तिः पाचयतीत्येकवचनानापत्तिश्च। गुरोरनभिधानेन तत्र प्रथमाया अ त्तेश्च। शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः।

आक्षिप्तस्य कर्तुः प्राधान्याभावेऽपि दोषस्तु नितरां समान एवेत्यत आह—कि अयम्भावः—फलस्य धातुना तदाश्रयस्य च कर्मणो यदि आक्षेपेणैव लाभः स्यात्तदा 'कर्मणि' इत्यादिना कर्मणि लकारवैयर्थ्यं स्यादिति। कर्मकर्तृकृतां कारकभावनोभय कत्वे एकस्यैव प्रत्ययस्यार्थद्वये गौरवं स्पष्टमित्याहुः—गौरवाच्चेति।

गौरवापत्तिभयाद्यदि कृतामुभयवाचकत्वं नैव स्वीक्रियेत तदा दूषणान्तरापत्तिः स्यादत आह—किञ्चेति । भावविहितघञादीनामित्यत्रादिपदेन भावल्युडादीनां संग्रहः । तेषां यदि व्यापारावाचकत्वं तदा 'ग्रामो गमनवान्' इति प्रयोगोऽपि स्यात् । गम्धातोः संयोगरूपफलार्थतया तस्य ग्रामेऽपि सत्त्वाद्व्यापारार्थकत्वे तु संयोगानुकूलव्यापारस्य ग्रामेऽसम्भवान्नोक्तदूषणावकाश इत्यवधेयम् ।

तद्वाचकत्वे तु व्यापारवाचकत्वे तु, तेनापि=भावविहितघञर्थव्यापारेण स्वाश्रयाक्षेपे कर्त्राक्षेपे कर्तुरभिधानं स्यादिति भावः ।

'फलमात्रं धात्वर्थ' इत्यंशे दूषणान्युक्त्वा आख्यातार्थव्यापारे दूषणानि वक्तुमुपक्रमते—षष्टं किञ्चेत्यादिग्रन्थम् ।

एतद्ग्रन्थस्यायमाशयः—"गुरुः शिष्याभ्यां पाचयती'त्यत्र हेतुमति चेति सूत्रस्वारस्येन णिजर्थो यदि प्रयोजकव्यापारस्तदा आख्यातार्थः प्रयोज्यव्यापारो नूनं वाच्यो भवेत्, एवञ्च संख्यायाः स्ववाचकाख्यातार्थप्रयोज्यव्यापारेऽन्वयिनि एवान्वयात् शिष्याभ्यामित्यत्र द्विवचनं न स्यात् । पाचयतीत्यत्रैकवचनञ्च न स्यात् । गुरोः प्रयोजककर्तुस्तिङाऽनभिधानेन अनुक्तत्वेन च तत्र प्रथमा स्यात् किन्तु अनभिहित-कर्तृत्वेन च तृतीया च स्यात् । शिष्यशब्दाच्च प्रथमाया आपत्तिः स्यादिति अन्यत्र लघुमञ्जूषायां विस्तरः ।

चौथा दोष यह कि—धातु से फल का और फलाश्रय कर्म का यदि आक्षेप के द्वारा लाभ सम्भव है तो "लः कर्मणि' इस सूत्र से कर्म में लकार विधान व्यर्थ हो जायगा और एक ही प्रत्ययार्थ के दो अर्थ में शक्तिकल्पना करने में गौरव भी है ।

पञ्चम दोष यह भी है कि—भाव में विहित घञ् ल्युडादि प्रत्यय यदि व्यापार का वाचक नहीं हो तो "ग्रामः गमनवान्" यह भी प्रयोग होने लगेगा और यदि व्यापार का वाचक हो तो उस व्यापार से स्वाश्रय कर्ता के आक्षेप हो जाने पर कर्ता भी उक्त हो जायगा ।

छठा दोष यह भी है कि—"गुरुः शिष्याभ्यां पाचयति" इत्यादि स्थलों में 'हेतुमति च' इस सूत्र के बल से णिच् प्रत्यय का अर्थ प्रयोजकव्यापार जब कि है तो तिङर्थ प्रयोज्य-व्यापार अवश्य मानना होगा तो ऐसी समस्या में संख्या के स्ववाचक आख्यातार्थ . अन्वयी प्रयोज्य व्यापार में अन्वय होने से 'शिष्याभ्याम्' इस प्रयोग में द्वितीया नहीं होगी और "पाचयति" इस प्रयोग में एक वचन नहीं होने पायगा । तिङ् गुरु के उक्त नहीं होने के कारण प्रथमा नहीं होगी, बल्कि 'शिष्याभ्याम्' इस प्रयोग में प्रथमा होने लगेगी । ये सब बातें लघुमञ्जूषा में विस्तारपूर्वक वर्णन है ।

सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया । तदाह—

**यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।**
**आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ १ ॥**

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ २ ॥**

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात् । क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैर्युक्तः सङ्कलनात्मिकयैकत्वबुद्धया प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियत इति द्वितीयकारिकार्थः । अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम् । क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाभावात् बुद्धयत्युक्तम् । पचति-पक्ष्यतीत्यादावसिद्धम्, अपाक्षीदित्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया । आश्रितेति योगदर्शनं कृतम् अवयवानां क्रमेणोत्पत्त्या । अत एवाश्रितक्रमरूपा क्रियेति आदिमकारिकार्थः । एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। तदुक्तम्—

**एकदेशे समूहे व्यापाराणां पचादयः ।**
**स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥ इति ॥**

धात्वर्थः क्रियेति मतं निराकर्तुं प्रारभते—सर्वकारकेति । धात्वर्थत्वं क्रियात्वमिति लक्षणे तु 'धातुजन्योपस्थितिविषयत्वं धात्वर्थत्वम्' धातुत्वं च क्रियावाचकत्वमिति तद्ग्रहसापेक्षग्रहविषयत्वेनान्योन्याश्रयदोषसम्भवात् क्रियाया अपरं लक्षणं वदति सर्वकारकान्वयितावच्छेदकधर्मवती क्रियेति भावः ।

कारकान्वयित्वञ्च—कारकनिष्ठविषयतानिरूपितविषयताश्रयत्वम् । कारकाणां क्रिययैवान्वयात् । क्रियान्वयं विना कारकत्वानुपपत्तेश्च ।

एतल्लक्षणे प्रमाणं दर्शयति तदाहेति । तदाह = तल्लक्षणं भूषणे आह—यावत्सिद्धमसिद्धं वेति । यावत् सिद्धं=निष्पन्नम्, असिद्धम्=अनिष्पन्नम्, सिद्धं फूत्काराग्नितृणसंयोगादि, असिद्धं तदुत्तरभावि, सिद्धं विद्यमानध्वंसप्रतियोगि, अपाक्षीदित्यादौ। असिद्धं=भूतभिन्नं वर्तमानं, वर्तमानप्रागभावप्रतियोगि च पचति, पक्ष्यतीत्यादौ। साध्यत्वेन=क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकत्वेन, अभिधीयते=कथ्यते, सा आश्रितक्रमरूपत्वात् = आश्रितं क्रमरूपं ययेति आश्रितक्रमरूपा तस्या भावः तत्त्वं तस्मात् क्रिया इति अभिधीयते प्रोच्यते इत्यर्थः इति प्रथमकारिकार्थः ।

गुणभूतैः=तिरोहितैः तत्तद्रूपेणाप्रतिपाद्यमानैः, अवयवैः अवयवसदृशैः, क्रमजन्मनाम् =क्रमेण जन्म यासां तासां क्रियाणां, समूहः=समुदायभावमापन्नः, बुद्धया, प्रकल्पिताभेदः सन् क्रियेति व्यपदिश्यते=व्यवह्रियत इति द्वितीयकारिकार्थः ।

अत्रेदं तत्त्वम्—यथाऽवयविनि शरीरे हस्तपादादयोऽवयवाः क्रमेण जायन्ते ते चावयविना साकमभेदमुपगच्छन्तः शरीरव्यवहारमुपयान्ति । अत एवाङ्गुलिमात्रे व्रणिते

मे शरीरं व्रणितमिति व्यवहारः। एवं फूत्कारादयोऽपि क्रमेणोत्पद्यमानाः समुदायभावमासाद्य विक्लित्त्यादिफलानुकूलक्रियात्वमुपयान्तीति।

क्षणनश्वराणामिति। ज्ञानेच्छादिवत् तेषामपि तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन क्षणिकत्वस्वीकारेण अवयवाप्रसिद्ध्या समुदायाप्रसिद्धिरिति भावः।

एकैकावयवेऽपीति। एकैकावयवेऽपि समूहरूपारोपात् अधिश्रयणाद्यधःश्रयणान्तानि कर्माणि भवन्ति। अत एव तत्कालेऽपि पचतीति प्रयोगः।

उक्तार्थे प्रमाणमुपन्यस्यति—एकदेश इति। व्यापाराणाम्, एकदेशे, समूहे, वा तुल्यरूपं, समाश्रिताः पचादयः स्वभावतः प्रवर्तन्ते इत्यन्वयः।

हिन्दी—'सभी कारकों में अन्वय होने वाला धर्म जिसमें हो वही क्रिया कहाती है' यही क्रिया का लक्षण ठीक है क्योंकि 'धात्वर्थत्वं क्रियात्वम्' इस लक्षण में अन्योन्याश्रय दोष है 'धातुजन्य उपस्थितिविषय हो धात्वर्थ' है, और क्रियावाचक ही धातु कहाता है तो अन्योन्याश्रय दोष स्पष्ट ही है।

इसलिये कहा है कि—सिद्ध हो या असिद्ध हो अर्थात् कर्म समाप्त हो गया हो या जारी रहे, सभी साध्य कही जाती हैं। क्रम से कार्य्य होते हैं इसलिये क्रिया कही जाती है।

गुणभूत अवयवों से क्रम से होने वाले कार्य्यों का समूह बुद्धि से अभिन्न मानकर क्रिया का व्यवहार किया जाता है। तात्पर्य यह है कि जिस प्रकार अवयवी शरीर में हाथ पैर आदि अङ्ग क्रम से होते हैं और अवयवी के साथ अभिन्न होकर शरीर माने जाते हैं उसी प्रकार फूक-फाक कर आग जोड़ने से लगातार क्रियायें क्रमसे होती हैं और एकत्र होकर फुदफुदाकर सिद्ध होने पर पाकक्रिया का व्यवहार होता है इसी प्रकार सभी क्रियाओं में जानना चाहिये।

इस भवादि सूत्रस्थ भाष्यार्थ का प्रतिपादक हरिग्रन्थ से 'क्रम से होने वाले व्यापारों के समूह के प्रति गुणभूत अवयवों से युक्त मिल-जुल कर जब एक प्रतीत होने लगता है तो एकत्वबुद्धि के द्वारा अभिन्न रूप मानकर क्रमसमूह ही क्रिया कही जाती है यह द्वितीय कारिका का अर्थ है। यहाँ अवयवों के आश्रय से पूर्वापर का व्यवहार होता है और समुदाय के आश्रय से एकत्वव्यवहार होता है क्योंकि क्षण में नष्ट हो जाने वाले व्यापारों के वस्तुभूत समुदाय होना असम्भव है इसलिये 'बुद्ध्या' कहा गया है अर्थात् बुद्धि के द्वारा सबों का अभेद माना जाता है।

उसमें असिद्ध का उदाहरण—पचति, पक्ष्यति है, और सिद्ध का उदाहरण—अपाक्षीत् है। सिद्ध हो या असिद्ध दोनों साध्य कही जाती हैं 'आश्रितक्रमरूपत्वात्' यह यौगिक दर्शन बताया गया है अर्थात् क्रमशः होने ही से क्रिया शब्द यौगिक है। अवयवों

के क्रमशः उत्पन्न होने ही से आश्रितक्रम वाली क्रिया कही जाती है यह प्रथम कारिका का अर्थ है।

एक एक अवयव के रहने पर भी समूह रूप के आरोप से अधिश्रयण काल में अर्थात् जिस समय बर्तन चढ़ाया जाता है उसकाल में भी 'पचति' प्रयोग होता है।

इसलिये कहा है—

व्यापारों के एकदेश में या समूह में तुल्यरूप हो जाने पर पचादि व्यवहार स्वभाव से प्रकट होते हैं।

अत्र केचित्—सिद्धत्वम्—क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्। साध्यत्वं च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। हिरुगाद्यव्ययानां साध्यत्वाभावेऽपि क्रियाबाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात्। तत्र सिद्धत्वं पाक इत्यादौ घञादि-वाच्यम्। साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम्।

ननु 'हरिं नमेच्चेत्सुखं यायात्' इत्यत्र क्रियाया अपि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्तीति चेन्न। चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः।

वस्तुतः साध्यत्वम्—निष्पाद्यत्वमेव, तद्रूपेणैव बोधः। स्पष्टं चेदम् "उपपदमतिङ्" इत्यादौ भाष्ये।

ननु घटं करोतीत्यादौ द्रव्यस्यापि साध्यत्वेन प्रतीतिरिति चेन्न। करोति पदादिसमभिव्याहारात् तथा प्रत्ययेऽपि स्वतो घटादिपदाद् द्रव्यस्य सिद्धत्वेनैव प्रतीतेः।

मतान्तरमुपन्यस्यति—अत्र केचिदिति। केचित्—भूषणकाराः, सिद्धत्वस्य लक्षणम्—क्रियान्तरेति, साध्यत्वस्य लक्षणम् द्वितीयक्रियान्तरेति।

ननु हिरुगाद्यव्ययानां साध्यत्वाभावे कथं क्रियावाचकत्वव्यवहार इत्यत आह—हिरुगेति। क्रियामात्रविशेषणत्वेन तत्र क्रियावाचकत्वव्यवहार इति भावः।

'हरिं नमेच्चेत्सुखं यायात्' इत्यत्र क्रियान्तराकाङ्क्षायाः सत्त्वे कथन्न सिद्धत्वव्यवहार इत्याशङ्कां निरस्यति—नन्वित्यादिना। तत्र चेच्छब्दसमभिव्याहारेण आकांक्षाया उत्थानं नतु स्वत इति नैव तत्र सिद्धत्वव्यवहारः किन्तु साध्यत्वव्यवहार एवेति भावः।

स्वकीयं सिद्धान्तं वक्तुमुपक्रमते नागेशः—वस्तुत इति।

उत्पत्तिमत्त्वरूपनिष्पाद्यत्वे साध्यत्वं घटेऽतिव्याप्तमित्याशङ्कायामाह—नन्विति। घटं करोतीत्यादौ करोतीत्यादिसमभिव्याहारात् द्रव्यस्य साध्यत्वेन प्रतीतावपि स्वतः घटादिपदात् घटद्रव्यस्य सिद्धत्वेनैव प्रतीतेर्नैव शङ्काया अवसर इति भावः। करोतेरुत्पादनार्थत्वात् घटवृत्त्यनुकूलव्यापारानुकूल एकाश्रयका वर्तमानो व्यापार इति बोधः।

हिन्दी—इस अंश में भूषणकार ने यह कहा है कि—सिद्धा क्रिया का लक्षण यह है—अन्य क्रियाओं की आकांक्षा को उठाने वाला धर्म जिसमें हो और वह विजातीय हो तथा कारक होते हुए क्रिया में अन्वय जिसका हो और अन्य कारकों में अन्वय होने की योग्यता जिसमें नहीं हो वह सिद्ध क्रिया है, जैसे—'पाक' यह क्रिया अन्य भवति आदि क्रिया का उत्थापक है और विजातीय है और क्रिया में अन्वय वाली है तथा दूसरे कारकों में अन्वय की योग्यतावाली नहीं है इसलिए सिद्धा क्रिया है

साध्या क्रिया का लक्षण यह है कि—अन्यक्रियाओं की आकांक्षा को उठाने वाला धर्म जिसमें नहीं हो और अन्य कारकों में अन्वय होने की योग्यता वाली हो वह साध्या-क्रिया है। जैसे—पचति आदि—ये सब क्रियायें अन्य क्रियाओं के उठाने की आकांक्षा नहीं रखने वाली हैं और अन्य कारकों में अन्वय होने की योग्यता रखने वाली हैं इस लिये साध्या क्रियायें ये हैं।

तब आशंका यह होती है कि—हिरुक् आदि अन्वय साध्या क्रिया नहीं है, क्रिया वाचकत्व व्यवहार उनमें किस प्रकार होता है ?

उत्तर यह है कि—क्रियामात्र विशेषण होने से ही उनमें क्रियावाचकत्वव्यवहार होता है। उनमें पाक आदि क्रियाओं में घञ् आदि प्रत्ययों के द्वारा सिद्धत्व है। और साध्यत्व तो, सभी जगहों में ही धातु से ही प्रतिपाद्य है अर्थात् कथनीय है।

अब शङ्का यह होती है कि—'कृष्णं नमेत् चेत् सुखं यायात्' अर्थात् कृष्ण को नमस्कार करो तो सुख पावोगे। यहाँ नमन् क्रिया सुख-प्राप्ति क्रिया का उत्पादक है तो वहाँ सिद्धत्वव्यवहार क्यों नहीं ?

उत्तर यह है कि—वहाँ 'चेत्' शब्द के जुटान से आकांक्षा होती है स्वतः नहीं। यह मत भूषणाकार का है।

अब अपना मत नागेश दिखाते हैं कि यथार्थ में तो साध्या क्रिया वह है कि जो निष्पाद्य अर्थात् जो सूत्रों के द्वारा बनती हुई दशा में हमेशा पाई जाय और उसी रूपमें उसका हमेशा बोध हो। सिद्धा क्रिया वह है कि जो शब्दरूप में बनी हुई दशा में प्रतीत हो। ये सब बातें 'उपपदमतिङ्' सूत्र के भाष्य में स्पष्ट हैं।

अब पुनः आशंका यह होती है कि—'घटं करोति' इत्यादि स्थलों में घट द्रव्य भी साध्यत्वेन प्रतीति है तो घट द्रव्य भी क्रिया क्यों नहीं ?

उत्तर यह है कि—'करोति' आदि पदों के जुटान होने से साध्य घट प्रतीत होता है किन्तु खुद घट आदि पदों से सिद्ध ही प्रतीत होता है, साध्य नहीं।

अस्तिभवतिवर्ततेविद्यतीनामर्थः—सत्ता। सा चानेककालस्थायिनीति कालगतपौर्वापर्य्येण क्रमवतीति तस्याः क्रियात्वम्। सत्तेह—आत्मधारणम्।

सकर्मकत्वञ्च-फलव्यधिकरणव्यापारवाचकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। क्वचित्तु फलांशाभावादकर्मकत्वम्। यथाऽस्त्यादौ केवलसत्तादिरेवार्थः। फलांशस्य सूक्ष्मदृष्ट्याऽप्यप्रतीतेः "उत्पन्नस्य सत्वस्य स्वरूपधा णरूपां सत्तामाचष्टेऽस्त्यादिः" इति निरुक्तोक्तेश्च।

वस्तुतस्तु शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्। तेन 'अध्यासिता भूमय' इत्यादिसिद्धिः। अन्वयश्च पृथग्बुद्धेन संसर्गरूपः अन्वयपदस्य तत्रैव व्युत्पत्तेः। तेन जीवतीत्यादौ न दोषः। तत्र प्राणादिरूपकर्मणो धारणार्थधात्वर्थात् पृथगबोधादिति 'सुप आत्मनः' इति सूत्रे भाष्ये स्पष्टम्। 'अधिशीङ्स्थासाम्' इत्यनेन भूमय इत्याधारस्य कर्मत्वम्।

ननु सत्ताया आत्मधारणानुकूलव्यापारत्वेन वक्ष्यमाणतया तस्य चैकविधत्वेन क्रमिकोत्पत्त्याश्रयानेककर्मघटितसमुदायत्वाभावेन क्रियात्वं न स्यादित्याशङ्कां परिहरति-सा चेति। आत्मधारणानुकूलो व्यापारः सत्ता। सा च यद्यप्यनेककालस्थायिनी तथापि यावता कालेन आत्मधारणन्तावतः कालस्य अवयवान् परिकल्प्य तेषां पौर्वापर्यस्य प्रसिद्धतया तद्गतं क्रमिकत्वं तत्रारोप्य क्रियात्वमिति बोध्यम्।

सकर्मकाऽकर्मकभेदेन धातूनां द्वैविध्ये तदीयलक्षणकथनं विना प्रत्ययनिर्णयासम्भवात्तयोर्लक्षणं वक्तुं प्रारभते—सकर्मकत्वञ्चेति।

एतल्लक्षणानुवादोयम्—

'लज्जा-सत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम्।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः॥' इति

एतल्लक्षणस्य व्यतिरेकं दर्शयति—क्वचिदिति। ये च किल अकर्मकधातोः फले शक्तिं न स्वीकुर्वन्ति तेषां मते धात्वर्थफलाप्रसिद्धया उपर्युक्तलक्षणं न संघटेतातः 'फलानवच्छिन्नव्यापारवाचकत्वं धात्वर्थतानवच्छेदफलसमानाधिकरणव्यापारवाचकत्वं वा तल्लक्षणं तन्मते कल्पनीयं भवेदिति ज्ञेयम्।

सत्तादिरेवार्थं इति। एवञ्च सत्ताव्यापारस्यापरपर्यायः—आत्मधारणम्। अत एवात्मधारणानुकूलो व्यापारः सत्तेति तु फलावच्छिन्नव्यापारे शक्तिवादिनां मते ज्ञेयम्। आत्मा च स्वरूपम्। तेनोत्पत्त्यनुकूलव्यापारे भवतेः शक्तिः 'यागात्स्वर्गो भवती'त्याद्यनुरोधेन न कल्पनीयेति महल्लाघवम्।

स्वर्गादिरचेतनस्य स्वरूपासद्भावेन तद्धारणासम्भवात्तदेतन्निरुक्तप्रमाणेन द्रढयति—उत्पन्नस्य सत्त्वस्य=भावस्य।

ननु कालादिकर्मकधातुषु फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमित्येतल्लक्षणमव्याप्तिदोषग्रस्तमत आह—वस्तुतस्त्विति। इत्थञ्चेदं वास्तविकं लक्षणम्—

शब्दशास्त्रीयकर्मसंज्ञकार्थनिष्ठविषयतानिरूपितविषयतावदर्थबोधकत्वं सकर्मकत्वम् ।

शब्दशास्त्रीयकर्मसंज्ञकार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वे सति धातुत्वं वा सकर्मकत्वम् ।

तदनन्वय्यर्थकत्वम् अकर्मकत्वम्—

शब्दशास्त्रीयकर्मसंज्ञकार्थनिष्ठ-विषयतानिरूपित-विषयतावदर्थबोधकत्वाभाववत्त्वम्—अकर्मकत्वम् ।

तेन=उपर्युक्तलक्षणेन 'अध्यासिता भूमयः' इत्यत्र 'अधिशीङ्स्थासा कर्म' इति सूत्रेण आधारत्वेन कर्मसंज्ञाविधानात् भूमेः भूमिरूपकमसंज्ञकार्थनिष्ठविषयतानिरूपितस्य अध्यासनक्रियायाः सत्त्वेन तत्र धातोः सकर्मकतया कर्मणि क्तप्रत्ययसिद्धिः ।

अन्वयश्चेति । अन्वयश्च पृथक् बुद्धेन—पृथगुपस्थितेन संसर्गरूपः=सम्बन्धरूपः, यश्च पृथग्बुद्धः पदार्थो न तेन साकं नान्वयो भवति । अतएव जीवतीत्यादौ प्राणादिकर्मणः धारणार्थो यो धातुस्तदर्थात् पृथग्बोधाभावेन न दोषः अन्वीयन्ते वाक्यार्थबोधे भासन्ते भावा येन इति विग्रहे करणे एरज्विधानादन्वयपदस्य तत्रैव व्युत्पत्तेर्योगशक्तेः ।

हिन्दी——अस्ति-भवति-तथा विद्यति का सत्ता अर्थात् होना अर्थ होता है । और यहाँ आत्म ( स्वरूप ) धारण लिया जाता है । और अनेककालतक वह सत्ता रहने वाली होती है इसलिये काल के अवयवों की कल्पना से कालगत पूर्वापर के भेद से वह क्रमवाली है इसलिये सत्ता भी क्रिया कहलाती है ।

सकर्मक का लक्षण यह है—

फल से पृथक् व्यापार का वाचक जो हो वह सकर्मक है ।
फल के साथ साथ व्यापार का वाचक हो वह अकर्मक है ।

कहीं कहीं फल अंश के अभाव से भी 'अकर्मक होता है जैसे——अस्ति, भवति इत्यादि स्थलों में केवल सत्तादि ही अर्थ है फलांश की तो सूक्ष्मदृष्टि से प्रतीति नहीं होती । 'उत्पन्न क्रिया की स्वरूप धारण रूप सत्ता को' अस्ति आदि बतलाती है यह निरुक्त में कहा गया है[१] ।

किन्तु कालादिकर्मक धातुओं में पूर्वोक्त सकर्मक अकर्मक का लक्षण नहीं घटने पाता है, इसलिये वास्तविक लक्षण यह है—

व्याकरण के कर्मसंज्ञा-विधायक शास्त्रों से जिसकी कर्मसंज्ञा हुई हो उस कर्मसंज्ञक पदार्थों के साथ जहाँ अन्वय हो वह सकर्मक है ।

तथा जिस धातु के कर्मसंज्ञक पदार्थों के साथ अन्वय नहीं हो वह अकर्मक है ।

इसलिये 'अध्यासिता भूमयः' इस उदाहरण में 'अधिशीङ्स्थासां कर्म' इस सूत्र

से भूमि के आधार में कर्म संज्ञा का विधान हुआ है अतः कर्म में क्तप्रत्यय हो पाता है।

अलग अलग भासमान पदार्थ के सम्बन्ध होने ही को अन्वय कहा है क्योंकि 'अन्वीयन्ते वाक्यार्थबोधे भासन्ते भावा येन' अर्थात् वाक्यार्थबोध में पदार्थ अलग अलग भासित हो जिसके जरिये इस व्युत्पत्ति के अनुसार अन्वय का वही माने है। इसलिये 'जीवति' आदि क्रियाओं में दोष होने नहीं पाता। क्योंकि 'जीवति' का अर्थ 'प्राणान् धारयति' होता तो प्राणादिकर्मों के धारणार्थ धातु के अर्थ से पृथक् पदार्थ नहीं मालूम पड़ता है यह 'सुप आत्मनः क्यच्' इस सूत्र के भाष्य में स्पष्ट है।

'अधिशीङ्स्थासां कर्म' इस सूत्र से 'भूमयः' इस प्रयोग में आधार की कर्मसंज्ञा हुई है।

जानतेर्विषयतया ज्ञानं फलम्, आत्ममनःसंयोगो-व्यापारः। अतएव मनो जानातीत्युपपद्यते आत्माऽत्रान्तःकरणम्, मनोऽपि तद्वृत्तिविशेषरूपम्। आत्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्मेति "कर्मवत्" सूत्रे भाष्ये स्पष्टम्।

यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारन्तु ज्ञानमेवेति। तन्न। कर्मस्थक्रियकत्वापत्तेः। तद्व्यवस्था चेत्थमुक्ता हरिणा—

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति॥**

अस्यार्थः—यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते, तत्र क्रियाव्यवस्थितेत्युच्यते। नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेष्य दर्शनादिदमुक्तम्। किञ्च चिन्तयति-पश्यतीत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः कर्तरि क्रियाकृतविशेषाभावात्। अत आह—अन्येषामिति। मते इति शेषः। यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते, स कर्तृस्थभावकः, यथा भिनत्तीत्यादौ न हि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराजः। तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वाज्जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्यलम्।

जानातेरिति। जानातेः ज्ञाधातोः-विषयतयेत्यत्रत्यतृतीयाया निरूपकत्वमर्थस्तेन यत्किञ्चिन्निष्ठविषयतानिरूपकज्ञानानुकूलो व्यापारो ज्ञाधात्वर्थः फलितो भवति। इयञ्च विषयताऽनुभवप्रतियोगिको विषयानुयोगिकः संसर्गविशेषस्ताभ्यां भिन्न एव विषयस्वरूपत्वे तस्या विषयेण समम् आधाराधेयभावानुपपत्तिरभेदे तदस्वीकारात्

अन्यथा घटो घटवानिति प्रतीत्यापत्तिः । ज्ञानस्य रूपत्वे घटज्ञानवानात्मेतिवद् घटविषयतावानात्मेति प्रत्ययापत्तिरित्यलम् ।

अतएव = आत्ममनःसंयोगस्य व्यापारत्वादेव । मनो जानातीत्यत्र घटमिति कर्मणोऽनुषङ्गस्तेन घटनिष्ठविषयतानिरूपकज्ञानानुकूल एकमनोवृत्तिर्वर्तमानो व्यापार इति बोधः ।

अन्येषां मतं प्रदर्श्य खण्डयितुमुपक्रमते—यत्त्वित्यादिना । अयम्भावस्तदीयः—आवरणभङ्गो विषयता वा जानातेः फलं व्यापारश्च ज्ञानमेवेति । किन्तु तन्मतं न शोभनम् । कर्मस्थक्रियकत्वापत्तेः । तत्रायं सारांशः—

घटादिविषयेषु आवरणभङ्गस्य संभवेन सौकर्यातिशयद्योतनाय कर्तृव्यापारस्य अविवक्षायां कर्मण एव स्वातन्त्र्यविवक्षायां च कर्मणो घटादेरेव कर्तृसंज्ञायां कर्मवत् भावापत्तौ 'ज्ञायते घटः' इति 'अनुव्यवसीयमानोऽर्थः' इति प्रयोगापत्तिः स्यादिति ।

उक्तार्थे हरिकारिकामवतारयति— विशेषदर्शनमिति । यत्र = कर्मणि, विशेषदर्शनम् = क्रियोत्पत्तिप्रयुक्तस्य विशेषस्य दर्शनं-ज्ञानम्, तत्र–तस्मिन् कर्मणि क्रिया व्यवस्थिता अर्थात् कर्तृस्थक्रियत्वम् । अन्येषां–तार्किकाणां मते, शब्दैः विशेषद्योतकैः पदैरेव, क्रिया व्यवस्था, प्रकल्पिता भवतीत्यर्थः ।

अत्रेदं तत्त्वम्—

'यत्र कर्मणि क्रियाकृतो भेदो ज्ञायते तादृशकर्मस्थक्रियतया तुल्यक्रियस्यैव कर्तुः कर्मवत्कार्यमतिदिश्यते 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेण । अत एव पच्यते ओदनः स्वयमेव, भिद्यते काष्ठं स्वयमेवेति प्रयोग उपपद्यते । तण्डुले विक्लित्त्या, काष्ठे द्वैधीभवनेन विशेषस्य दर्शनात् । गम्यते ग्रामः स्वयमेवेति तु न, ग्रामे गमनेन विशेषस्यादर्शनात्, इति स्पष्टं वैयाकरणभूषणे ।

इदानीं कर्तृस्थभावकस्य लक्षणं सोदाहरणं निर्वक्ति—यत्रेति । यत्र कर्तरि कर्मणि च प्रकृतधात्वर्थतावच्छेदकं फलमेकधर्मपुरस्कारेणैव शब्दैः प्रतिपाद्येत स कर्तृस्थभावकः । यथा–पश्यति घटं, ग्रामं गच्छति, हसतीत्यादौ । तत्र विषयतासम्बन्धेन समवायसम्बन्धेन च ज्ञानमुभयनिष्ठम्, अर्थात् कर्तृनिष्ठं कर्मनिष्ठञ्च । तत्र घटादौ विषयतासम्बन्धेन, कर्तरि चैत्रादौ च समवायसम्बन्धेनेति बोध्यम् । संयोगोऽप्युभयनिष्ठः । संयोगत्वरूपेणैव समवायसम्बन्धेन कर्तरि चैत्रादौ ग्रामे कर्मणि चास्तीति भावः । एवं हासोऽपि उभयनिष्ठः अर्थात् समवायसम्बन्धेन कर्तरि, विषयतासम्बन्धेन कर्मणि तिष्ठति इत्यवधेयम् ।

नहि विषयताऽऽवरणभङ्गौ एवम् अर्थात् कर्तृनिष्ठौ ।

कर्मस्थभावकस्य लक्षणं सोदाहरणं वक्तुमुपक्रमते—कर्तृवृत्तीति । कर्तर्यविद्यमान

कर्मस्थं फलं यत्र स कर्मस्थभावक उच्यते। यथा भिनत्तीत्यादौ द्विधाभवनां कर्तृनिष्ठमिति हेलाराजस्य व्याख्यानम्।

हिन्दी—ज्ञा धातु का विषय के द्वारा ज्ञान फल है, और आत्मा तथा संयोग ही व्यापार है। इसलिए 'मनो जानाति' यह वाक्य उपपन्न होता है। आत्मा अन्तःकरण है, और मन भी अन्तःकरण में ही रहने वाला एक है। 'आत्मा आत्मा को जानता है' इस वाक्य में 'अन्तःकरण' ही आत्मा है शरी ही कर्म आत्मा है अर्थात् अन्तःकरण आत्मा शरीरात्मा को जानता है यह अर्थ है यह बात कर्मवत् सूत्र के भाष्य में स्पष्ट है।

किसी ने 'आवरण अर्थात् अज्ञान का भंग याने नाश होना या विषयता का फल है, और व्यापार तो ज्ञान ही है' यह कहा है। किन्तु यह कहना ठीक क्योंकि वह कर्मस्थक्रिय हो जायगा।

उसकी व्यवस्था हरि ने इस प्रकार बताई है—जिस कर्म में और कर्ता में क्रि विशेषता देखी जाय वह व्यवस्थित क्रिया है।

किन्तु यह अयुक्त सा प्रतीत होता है क्योंकि गमनादिक्रिया के कर्ता में थका वट के कारण पसीने वगैरह आ जाने से क्रियाकृत विशेषता वहाँ भी पाई जाती है वह भी कर्मस्थक्रिय हो सकता है। इसी प्रकार वह सोचता है, देखता है यहाँ में क्रियाकृत विशेषता कुछ नहीं है तो वह कर्तृस्थभावक नहीं कहलाया जायगा। लिए कारिका में 'अन्येषाम्' दिया है। अर्थात् अन्य तार्किकों के मत में—'जिस और कर्म में साधारण फल शब्दों के द्वारा कहा जाय वह कर्तृस्थभावक है वह कर्तृस्थक्रिय है। जैसे—'पश्यति घटम्' 'गच्छति ग्रामम्' 'हसति' अर्थात् देखता है, गाँव जाता है, हँसता है, इत्यादि स्थलों में विषयता और समावय से ज्ञान उभयनिष्ठ है, कर्ता में भी है और कर्म में भी है। विषयतासम्बन्ध से घटादि में है और समावय सम्बन्ध से ज्ञान चैत्रादि कर्ता में है। संयोग भी दोनों में इसी प्रकार हास भी समवाय सम्बन्ध से कर्ता में है और विषयता सम्बन्ध से रहता है।

किन्तु विषयता और आवरणभङ्ग कर्तृनिष्ठ नहीं है।

और जहां पर कर्म में रहने वाला फल कर्ता में नहीं हो वह कर्मस्थ भावक अर्थात् कर्मस्थक्रिय है। जैसे, भिनत्ति आदि में, द्विधाभवन (दो भाग में हो जाना) कर्तृनिष्ठ नहीं है किन्तु कर्मनिष्ठ है अर्थात् कर्म में रहने वाला है। इसलिए कर्मस्थ क्रिय है यह हेलाराज ने कहा है। तो इसलिए आवरण-भङ्ग तथा विषयता केवल में रहता है कर्ता में नहीं। यदि आवरण-भङ्ग और विषयता ज्ञाधातु का फल तो कर्मस्थक्रिय हो जायगा अर्थात् कर्मकर्तृ का विषय ज्ञाधातु भी होने लगे अतिप्रसङ्ग हो जायगा।

इच्छतेरिच्छानुकूलं ज्ञानमर्थः अतीतानागतयोरपि बुद्ध्युपारोहात् फल-
शालित्वम् ।

पतिर्गमिवत्सकर्मकः । नरकं पतित इत्यादिप्रयोगात् । विभागजन्यसंयोग-
मात्रपरत्वेऽकर्मक इति । कृञ उत्पत्तिर्व्यधिकरणस्तदनुकूलो व्यापारोऽर्थः । फल-
मात्रार्थकत्वेऽकर्मकत्वापत्तिर्यतिवत् । किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्तरि
यागाद्यनापत्तिः । कृतिरित्यादौ धातूनामनेकार्थत्वात् यत्नमात्रे वृत्तिः ।

यद्वा यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचितैव । अत एव स्थालीस्थे
यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इति सूत्रे भाष्ये उक्तमि-
त्यलम् ।

इच्छतेरिति । जानाति तदनन्तरमिच्छति तदनन्तरं यतते इति क्रमस्य लोके दर्शनात्
ज्ञानस्यैच्छाजनकत्वं प्रसिद्धमेवेति तत्त्वम् ।

ननु फलशालित्वं कथमिच्छतेरित्याह—अतीतानागतयोरिति । भूतभविष्यतोरपि
बुद्ध्या उपारोहात्=विषयीकरणात् फलशालित्वं बोध्यम् ।

पतिरिति । नरकं गत इति गम्धातुवत् नरकं पतित इत्यनेन नरककर्मसंयोगानुकूल
व्यापाराश्रय इति बोधसद्भावेन पतिरिति सकर्मकः । यथा गम्धातोः फलव्यधिकरण-
व्यापारवाचकत्वं सकर्मकत्वं तथा पत्धातोरपि विभागजन्योत्तरदेशानुकूलव्यापारोऽर्थः ।-
द्वितीयाश्रितेत्यादिना पतितशब्देन द्वितीयासमासविधानात् । 'वृक्षात्पर्णं पतति' इत्यादौ
वृक्षसकाशाद् विभागे सत्येव उत्तरदेशसंयोग उत्पद्यते इति भावः ।

कृञ इति । उत्पत्तेर्व्यधिकरणस्तदनुकूलो व्यापारः कृञोऽर्थः । फलमात्रार्थकत्वे =
फलस्थानीययत्नमात्रार्थकत्वे यतिवत् अकर्मकत्वं स्यादित्यवधेयम् ।

दूषणान्तरं दर्शयति—किञ्चेति । यत्नमात्रार्थकत्वे, कर्मस्थभावकत्वाभावात्=
कर्मस्थक्रियकत्वाभावात् कर्मकर्तरि यागाद्यनापत्तिः । अयम्भावः—यत्नस्य चेतनगुणत्वा-
चेतने घटादौ तदसम्भवेन क्रियते घटः स्वयमेवेति प्रयोगो न स्यात् इति ।

ननूत्पादनार्थकत्वस्वीकारे उत्पन्ने चैत्रे उत्पत्तिमांश्चैत्र इति व्यवहारो न स्यादित्या-
शङ्कायामाह—कृतिरिति । धातूनामनेकार्थत्वात् कृतिरित्यत्र यत्नमात्रे वृत्तिः वर्तनम् ।
धातूनामनेकार्थत्वे मानञ्च—कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्यत्र एवकारग्रहणमेव । अन्यथा
एवकारग्रहणस्यैव वैयर्थ्यं स्यात् ।

ननु धातूनामनेकार्थत्वात् कृतिरेवार्थो मुख्यो भवतु, उत्पत्त्यनुकूलव्यापारस्तु गौणोऽर्थः
स्वीक्रियतामित्यत आह—यद्वेति अतएव=व्यापारसामान्यवाचित्वादेव । स्थालीस्थ इति ।
परेषां मते यत्नस्य चेतनगुणत्वेन स्थाल्यां तदभावेनोक्तभाष्यविरोधः स्पष्ट एव । मन्मते तु
व्यापारस्य चेतनाचेतनसाधारणत्वेन तद्विरोधलेशोऽपि नेत्यवगन्तव्यम् ।

हिन्दी—इष् धातु का इच्छा के अनुकूल ज्ञान अर्थ होता है।

अब आशङ्का यह होती है कि—कर्म से लक्षण में फलशालित्व भी निविष्ट भविष्य पदार्थ की इच्छा में फल होने नहीं पाता तो इस धातु के योग में नहीं होगी ?

उत्तर यह है कि भूत भविष्यद् पदार्थ को भी अपनी बुद्धि के द्वारा समझ फल मालूम पड़ने लगता है तो फलशालित्व है ही।

पत् धातु गम् धातु के समान सकर्मक है क्योंकि जिस प्रकार 'नरकं प्रयोग होता है उसी प्रकार 'नरकं पतितः' यह प्रयोग भी होता है।

'वृक्षात्पर्णं पतति' में वृक्ष में जब पत्ते का विभाग होता है तब संयोग होता है संयोगमात्रपरक माना जाय तो पत् धातु अकर्मक होता है।

कृञ् धातु का उत्पत्ति से पृथक् उत्पत्ति के अनुकूल व्यापार अर्थ है। फल मानने पर यत् धातु की तरह अकर्मक होने लगेगा।

और दूसरा दोष यह है कि कर्मस्थक्रिय नहीं होने के कारण कर्मकर्ता आदि प्रत्यय नहीं होगा। क्योंकि यत्न चेतनपदार्थ का गुण है और वह अचेतन पदार्थ में असम्भव है तो 'क्रियते घटः स्वयमेव' यह प्रयोग नहीं होने पायगा।

तब सन्देह यह होता है कि कृञ् धातु का जब उत्पत्त्यनुकूलव्यापार अर्थ 'कृतिः' इस प्रयोग में यत्न अर्थ किस प्रकार होता है ? और यदि यत्न अर्थ 'उत्पत्तिमांश्चैत्रः' यह व्यवहार नहीं होना चाहिए ?

उत्तर यह है कि—धातु के अनेक अर्थ होते हैं। इसमें प्रमाण 'कुर्द खुर्द क्रीडायामेव' इस धातु में एवग्रहण ही है, क्योंकि यदि अनेक अर्थ नहीं होते तो के नियामक एवग्रहण देने की क्या आवश्यकता थी, इसलिए एवग्रहण बता धातुओं के अनेक अर्थ होते हैं अतः कृञ् धातु के दोनों अर्थ हैं उत्पत्ति, और एतावता 'कृतिः' प्रयोग में यत्न अर्थ में कोई बाधक नहीं।

अब इसमें किसी का यह कहना है कि—अनेकार्थ मानकर उत्पत्त्यनुकूल अर्थ वह गौण अर्थ है और यत्न जो अर्थ है वही मुख्य है। 'ऐसी दलील पे पक्षान्तर दिया गया है 'यद्वा' ग्रन्थ। अर्थात् यत्न शब्द और कृति शब्द के व्यापार सामान्यवाची हैं न कि एक गौण अर्थ है और एक मुख्य।

इसलिए व्यापारसामान्यवाची होने हीं के कारण 'पच' धातु के द्वारा यत्न मान लेने पर 'स्थाली पचति' यह भी प्रयोग होता है यह 'कारके' ह भाष्य में कहा गया।

यत्तु तार्किकाः—फलव्यापारौ धात्वर्थः। लकाराणां कृतावेव वात्, नतु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्। प्रथमा

ल्लाभाच्च। आख्यातार्थे धात्वर्थो विशेषणम्, प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे त्ययार्थस्यैव प्राधान्यात्। प्रथमान्तार्थे आख्यातार्थो विशेषणम्। अनुकूलत्व-श्रयत्वञ्च संसर्गः। तथा च चैत्रः पचतीत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। रथो गच्छतीत्यादौ रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातस्य लक्षणेत्याहुः।

तन्न। युष्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थाऽनापत्तेः। पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। नचेष्टापत्तिः। आश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम्। नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः।

ननु फलमुखगौरवं न दोषायेति न्यायेन शत्रादीनां कर्तरि शक्तिः, तिबादीनां कृतावेव; इति चेत्, न। स्थान्येव वाचको लाघवात्, आदेशानां बहुत्वेन तेषां वाचकत्वे गौरवादिति हि तव मतम्। एवं च तिबादीनां शत्रादीनां च स्थानिस्मारकतया लिपिस्थानीयत्वम्, बोधकस्तु लकार एव। स च शत्राद्यन्ते कर्तरि शक्तस्तिबाद्यन्ते कथं कृतिं बोधयेत्। 'अन्यायश्चानेकार्थत्वम्' इति न्यायात्।

'आख्यातस्य कृतौ शक्तिः' इति तार्किकमतं खण्डयितुमुपक्रमते—तत्त्वित्यादिना। इत्थं हि तन्मतम्—फलं व्यापारश्च द्वावपि धात्वर्थं एव। लकाराणाञ्च कृतावेव लाघवात् शक्तिर्मन्तव्या। कर्तरि शक्तिस्वीकारे कृत्याश्रयत्वमेव कर्तृत्वम्, इत्थं हि कर्तुराख्याताथत्वेऽनन्तकृतीनां वाच्यतावच्छेदकत्वकल्पने गौरवम्। मन्मते तु कृतेरनन्तत्वेऽपि कृतित्वजातौ एकस्यामेव तत्कल्पनमिति लाघवम्। प्रथमान्तपदेनैव कर्तृत्वलाभाच्च।

धात्वर्थस्त्वाख्यातार्थे विशेषणं स्यात्। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः प्राधान्यन्तु प्रत्ययार्थस्यैवेति' न्यायात्। आख्यातार्थस्तु प्रथमान्तार्थे विशेषणं स्यात्। आख्यातार्थकृतिप्रकारकान्वयबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणत्वात्।

अनुकूलत्वमाश्रयत्वञ्च संसर्गः सम्बन्धः। एवञ्च चैत्रः पचतीत्यत्र विक्लित्त्यनुकूलो यो व्यापारस्तदनुकूलकृतिमान् चैत्र इति बोधः समुपजायते। रथो गच्छतीत्यादौ तु अचेतनस्य रथस्य यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा लक्षणा मन्तव्येतिहि तार्किकमतम्।

परं तन्न शोभनम्। 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति सूत्रे समानाधिकरणपदसत्त्वात्; तत्र स्वलकारवाच्य-कारकवाचित्वरूपसामानाधिकरण्यस्य स्वीकारेण कृतिवाच्यत्वादिना तार्किकाणां मते तदसम्भवात् पुरुषव्यवस्थानापत्तेरिति भावः।

शतृ-शानजादीनामपि 'कर्तरि कृत्' इति सूत्रेण कर्तर्य्येव विधानस्य स्यो तिबादिवत् कृतिवाचकत्वापत्तौ केवलकृतिमात्रदर्शनदशायामपि 'पक्वन्तं चैत्रं पचमानं चैत्रं पश्येत्यादिप्रयोगापत्तिश्च तन्मते स्यात् ।

न चेष्टापत्तिर्मन्यताम् । कृतेराश्रयतासम्बन्धेन प्रथमान्तार्थेऽन्वयात् 'विक्लि कूलव्यापारानुकूलकृतिमच्चैत्रकर्मकदर्शनानुकूलव्यापारानुकूलकृत्याश्रयो देवदत्त' बोधेन 'पचते चैत्राय देही'त्यत्र तादृशकृत्याश्रयोद्देश्यकदानानुकूलव्यापार त्वाद्वृत्तिमत्प्रेरणाविषयेति बोधसम्भवेन दोषप्रसङ्गाभावादिति वाच्यम् । 'नामा भेदेन साक्षादन्वयोऽव्युत्पन्न' इति व्युत्पत्तिभङ्गापत्तेः । 'नामार्थयोरभेदान्वय' फलितार्थकथनम् ।

एवञ्च नामार्थनिष्ठभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण बोधं प्रति मुख्यविशेष्यतया प्रत्ययजन्योपस्थितिः कारणमिति कार्य्यकारणभावमू व्युत्पत्तिरिति बोध्यम् ।

स्थान्येव वाचक इति । तिबादिभिरादेशैस्स्मर्य्यमाणे लकारे स्थानिनि हेण अर्थोपस्थित्या लकारवृत्तिशक्तिरादेशेषु भ्रमेणार्थोपस्थित्या वा शाब्दबोधसम् आदेशानां बाहुल्येन शक्ततावच्छेदकांशे गौरवान्न तत्र शक्तिर्मन्तव्येति बोध्यम् ।

लिपिस्थानीयत्वमिति । यथा अक्षरलिपिर्नाक्षरम् अपि तु तया स्मर्य्यमाण रादिकं तथैवेहादेशो न वाचकः किन्तु तत्स्मारितः स्थानी एवेति तत्त्वम् ।

कथं कृतिं बोधयेदिति । लःकर्मणीत्यत्रापि 'कर्तरि कृत्' इत्यत एव कर्त स्यानुकर्षणात् कृल्लकारयोस्तुल्ययोगक्षमत्वादिति भावः ।

अन्यायश्चानेकार्थत्वमिति । हर्य्यादिशब्देषु सति तात्पर्येऽश्वारूढः सूर्य इत्यादे स्येष्टत्वेन तथा कल्पनेऽपि प्रकृते फलविशेषादर्शनात्तत्कल्पनस्यानौचित्यमिति भावः ।

हिन्दी— तार्किकों ने जो यह कहा है कि—फल और व्यापार दोनों ही धातु अर्थ है । क्योंकि लकारों की कृति में शक्ति मानने में लाघव है कर्ता में नहीं, कृति कर्ता में यदि शक्ति मानी जाय तो गौरव है, क्योंकि कृति का आश्रय ही क आख्यातार्थ ही कर्ता है तो अनेक कृति क [illegible] वाच्य मानने में गौरव है । और तो प्रथमान्तपद ही से लब्ध हो जाता है ।

आख्यातार्थ में धात्वर्थ फलव्यापार विशेषण हुआ करता है । क्योंकि प्र प्रत्ययार्थ ही की प्रधानता मानी जाती है ।

प्रथमान्तार्थ में आख्यातार्थ ( तिङर्थ ) विशेषण है । अनुकूलत्व और आश्र दोनों संसर्ग याने सम्बन्ध है । इसलिये 'चैत्रः पचति' इस स्थल में 'विक्लित्ति ( फुदफुदाना ) के अनुकूल जो व्यापार उस व्यापार के अनुकूल यत्न वाला चैत्र है बोध होता है ।

'रथो गच्छति' इत्यादिस्थलों में रथ अचेतन पदार्थ होने के कारण यत्न-शून्य है इसीलिये व्यापार में या व्यापाराश्रय में आख्यात (तिङ्) की लक्षणा माननी होगी।

किन्तु यह ठीक नहीं। युष्मद् अस्मद् का लकार के साथ सामानाधिकरण्य अर्थात् अन्वय सम्भव नहीं है इसलिये प्रथमपुरुष हैं या मध्यमपुरुष है या उत्तमपुरुष है इसकी व्यवस्था नहीं होने पायगी। तथा 'पचन्तं चैत्रं पश्य' 'पचते देवदत्ताय स्थालीं' में तिबादि की तरह शतृ-शानच् आदि के भी लादेश में विशेषता नहीं होने के कारण शतृ-शानच् आदि प्रत्ययों से भी यत्नमात्र का बोध होने लगेगा।

तब तार्किकों ने यह कहा कि यदि इसे इष्टापत्ति मान लें तो क्या क्षति है क्योंकि आश्रयाश्रयिभाव मानकर कर्म में तथा संप्रदान में कृति का (यत्न का) अन्वय निर्बाध है।

पर यह ठीक नहीं क्योंकि 'नामार्थ नामार्थ का अन्वय अव्युत्पन्न है' यह व्युत्पत्ति भग्न हो जायगी।

तब तार्किकों ने पुनः यह युक्ति दिखाई कि—'फल के साथ-साथ यदि गौरव हो तो दोष के लिये नहीं होता है' इस न्याय से शतृ आदि प्रत्ययों की कर्ता में शक्ति मानने और तिबादि के कृति (यत्न) ही में शक्ति मान लेने पर कोई आपत्ति नहीं!

किन्तु यह भी ठीक नहीं। 'स्थानी को ही वाचक मानने में लाघव है, आदेश तो बहुत हैं उनको वाचक मानने में गौरव है' यह आपका मत है तो तिप् आदि प्रत्यय तथा शतृ आदि प्रत्यय स्थानी का स्मारक है। इसलिये लिपिस्थानीय है अर्थात् जिस प्रकार अक्षरलिपि अक्षरवाचक नहीं किन्तु लिपि से स्मर्य्यमाण आकार आदि अक्षरवाचक है उसी प्रकार आदेशवाचक नहीं किन्तु उससे स्मारित स्थानी ही वाचक है बोधक तो लकार ही है, यह शतृ प्रत्ययान्त कर्ता में शक्त है तो तिबाद्यन्त में कृति को किस प्रकार बोध करा सकता है।

यदि यह कहें कि अनेकार्थ मान कर बोध करा सकता है तो सभी जगहों में अनेकार्थ मानना अन्याय है, भले ही हरि आदि शब्दों में तात्पर्य रहने पर 'अश्वारूढः सूर्यः' अर्थात् घोड़े पर चढ़े हुए सूर्य हैं इस अर्थ का बोधक हरि आदि शब्द हो सकते हैं किन्तु यहाँ अनेकार्थ मानना अनुचित है।

ननु 'लः कर्म्मणि' इति सूत्रे कर्तृकर्म्मपदे भावप्रधाने, तथा च कर्तृत्वं कृतिः, कर्म्मत्वं फलम्, तयोः शक्तौ सूत्रस्वरसः। कर्म्मप्रत्ययान्ते पच्यते ओदनो देवदत्तेनेत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान् ओदन इति बोधः। 'कर्तरि कृत्' इति सूत्रे तु कर्तरीति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति चेत्, न। 'कर्तरि कृत्' इति सूत्रे यत्कर्तृग्रहणं तस्यैव 'लः

कर्म्मणि' इति सूत्रे चकारानुकृष्टत्वेन भावप्रधानत्वे सूत्रस्वरसाभाव शत्रादीनां 'स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वम्' इति न्यायेन स्थान निराकाङ्क्षत्वात् 'आकाङ्क्षितविधानं ज्यायः इति न्यायात्' 'कर्त्तरि इत्यनेन शक्तिग्रहाभावात्। अन्यथा देवदत्तेन शय्यमाने आस्यमाने च यज्ञ गत इत्यादौ भावे शानजापत्तेः।

तार्किकाणां तृतीयं कुतूहलं विन्यस्य खण्डयितुमुपक्रमते—नन्वित्यादिना। प्र धानमिति। भावो विशेषणधर्मः तत्प्रधानं प्रधानतया बोधकम्। द्व्येकयोरिति द्व्येकशब्दवत्। स्त्रियामित्यत्र स्त्रीशब्दवच्चेति ज्ञेयम्।

कर्तृत्वं कृतिरिति। तार्किकाणां मते कृत्याश्रयस्यैव कर्तृपदवाच्यत्वात् 'प्र जन्यबोधे प्रकारीभूतो भावः' इति सिद्धान्तात् कर्तृपदजन्यबोधे कृतेः कर्मपदज च फलस्य प्रकारत्वादित्यवधेयम्।

धर्मिप्रधानत्वादिति। धर्मी आश्रयो द्रव्यं तत्प्रधानत्वात् तत्प्रधानकोप जनकत्वादित्यर्थः।

चकारानुकृष्टत्वेनेति। तत्रोभययोगस्थोऽपि चकारः कर्तरीत्यनुकर्षणार्थं प्रपञ्चितमन्यत्रेत्यलम्।

स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति न्यायस्यायमेवार्थः—स्थानिनामर्थाभिधा समर्थास्तेषामेवादेशा भवन्तीति। तेन 'तृज्वत्क्रोष्टुः' इति सूत्रेण आह्वानार्थकत न्तस्य क्रोष्टुशब्दस्य स्थाने रोदनार्थकक्रोष्टुशब्दोऽन्यो वा तृच् प्रत्ययान्तः पक्तृ आदे भवति, किन्तु शृगालार्थवाचकस्य क्रोष्टुशब्दस्य स्थाने शृगालार्थवाची क्रोष्टृ आदेश भवतीति। एवञ्च कृतिवाचकस्य लकारस्य स्थाने जायमानाः शत्रादयः कृतिमेव येयुरिति सारांशः।

शक्तिग्रहाभावाच्चेति। 'कर्तरि कृत्' इति सूत्रस्य लः कर्मणि इत्यनेन तुल्ययो तया प्रोक्तन्यायेन शत्रादीनां कृतामपि कृतादेव शक्तिग्राहकत्वौचित्येन कृत्याश्रयरूपे शक्तिग्रहासम्भवेन पचन् देवदत्तः, पच्यमानस्तण्डुल इत्यादौ नामार्थयोरिति प्रथमान्तार्थे कृतेराश्रयतयाऽन्वयो नैव स्यादित्यवधेयम्।

हिन्दी—पुनः तार्किकों का तृतीय कुतूहल इस युक्ति के साथ है कि 'लः कर्म इस सूत्र में कर्तृपद और कर्मपद भावप्रधान है अर्थात् भाव में जो त्व प्रत्यय हो तत्परक है; तो कर्तृत्व कृति है, कर्मत्व फल है इन्हीं दोनों की शक्ति में सूत्र का अर्थात् तात्पर्य है।

कर्म प्रत्ययान्त 'पच्यते ओदनो देवदत्तेन' यहाँ पर 'देवदत्त में रहने वाले कृति (यत्न) तज्जन्य जो व्यापार उस व्यापार से तण्डुल में जो विक्लित्ति फुदफुदाकर सिद्ध होना है उस विक्लित्ति वाला ओदन है' यह बोध होता है।

'कर्तरिकृत्' इस सूत्र में तो कर्तृपद धर्मिप्रधान है अर्थात् आश्रय द्रव्यप्रधान है इसलिए कृत्याश्रय में ही शत्रादि की शक्ति है तो क्या आपत्ति ?

किन्तु यह युक्ति ठीक नहीं—क्योंकि 'कर्तरि कृत्' इस सूत्र में जो कर्तृ ग्रहण है उसी का अनुकर्षण 'लः कर्मणि' इस सूत्र में चकार के बल से हुआ है तो भावप्रधान कर्तृत्व, कर्मत्व में 'लः कर्मणि' इस सूत्र का तात्पर्य नहीं है।

'स्थानी के अर्थ बतलाने में जो समर्थ है वही आदेश हुआ करता है' इस न्याय के बलपर शत्रादि प्रत्यय स्थानी के अर्थ बतलाकर जब निराकाङ्क्ष है तो 'आकाङ्क्षित का विधान ही होना अच्छा है' इस न्याय के बलपर 'कर्तरि कृत्' इस सूत्र से शत्रादि के शक्तिग्रह हो नहीं सकता। अन्यथा 'देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गतः' इत्यादि स्थलों में शानच् नहीं होगा।

ननु नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां[1] कर्त्तरि शक्तिरिति चेत्, न। पचतिकल्पं पचतिरूपं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्वौचित्यात्।

किञ्च कृतिवाच्यत्वे रथो गच्छतीत्यादौ आश्रये लक्षणास्वीकारे गौरवापत्तिः। अभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिश्च। न च 'अनभिहिते' इति सूत्रस्यानभिहितसङ्ख्याके इत्यर्थवर्णनमिति वाच्यम्। कृत्तद्धितसमासैः सङ्ख्याऽभिधानस्याप्रसिद्धत्वात्।

किञ्च यत्नोऽपि व्यापारसामान्यं धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इत्यधिकारसूत्र भाष्यप्रयोगादनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव नेत्यलम्।

तार्किकाणां तृतीयां युक्तिमपि खण्डयितुमुपक्रमते—नन्विति। वास्तविकं व्युत्पत्तिस्वरूपं हि—'नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न' इति। नामर्थयोरभेदान्वयोऽव्युत्पन्न' इति तु फलितार्थकथनम्।

व्युत्पत्तिरियञ्च—भेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकेति ज्ञेयम्।

दूषणान्तरं ब्रवीति—किञ्चेति। अभिहितत्वानाभिहितत्वेति। 'कर्मणि द्वितीया' 'कर्तरि तृतीया' इत्यत्र 'अनभिहिते' इत्यधिकारात् अनुक्ते कर्तरि तृतीया भवति, अनुक्ते कर्मणि च द्वितीया भवति, उक्ते च प्रथमैवेति व्यवस्था कृतौ शक्त्यङ्गीकारे उच्छिद्येतेति तात्पर्यम्।

'कारके' इति सूत्रभाष्यात् कृतावाख्यातस्य शक्तेरसम्भवं दर्शयति—किञ्चेति।

---

१. भावविहितलकारस्थानिकभिन्नानामिति शेषः। तेन न पूर्वप्रयोगसङ्गतिः।

यत्नोऽपि व्यापारसामान्यमिति। व्यापारस्यैव फलोत्पादकत्वेन प्रसिद्धया पचतीत्यत्र विक्लित्त्यनुकूलव्यापारस्यैव बोधस्यानुभवसिद्धत्वमित्याशयः।

कारक इति सूत्रस्थभाष्यस्यायमाशयः-यदा हि सौकर्यातिशयद्योतनाय कर्तृव्यापारो न विवक्ष्यते, तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते, यथा स्थाली पचतीति। अत्र सौकर्यातिशयद्योतनाय स्थाल्या अधिकरणत्वेनाविवक्षायां व्यापाराश्रयत्वेन वक्तृतात्पर्यविषयतायां 'स्वतन्त्रः कर्तेति' कर्तृत्वे तत्कर्तरिलकारे स्थाल्याः प्रथमान्तत्वमिति। कृतिरूपयत्नस्य आत्मविशेषगुणस्य लकारार्थत्वे तु स्थाल्या अचेतनत्वात् तदाश्रयत्वासम्भवेन भाष्यासङ्गतिः स्पष्टैवेति ध्येयम्।

हिन्दी—फिर तार्किकों ने यह जो युक्ति दिखाई है कि—नामार्थ नामार्थ के अभेदान्वय के अनुरोध से शतृशानच् आदि प्रत्ययों के कर्ता में यदि शक्ति मान लें तो क्या दोष है?

यह कहना भी ठीक नहीं है—क्योंकि 'देवदत्तः पचतिकल्पम्, पचतिरूपम्,' इत्यादि प्रयोगों के अनुरोध से तिङ् में भी कर्ता ही के वाच्य मानना उचित है।

दूसरा दोष यह है कि—कृति के वाच्य मान लेने पर 'रथो गच्छति' इत्यादि स्थलों में आश्रय में लक्षणा मानने में गौरव हो जायगा। तथा उक्तानुक्त की व्यवस्था भी नहीं होने पायगी, क्योंकि अनुक्त कर्ता में तृतीया होती है और अनुक्त कर्म में द्वितीया होती है उक्त में प्रथमा ही होती है यह व्यवस्था कृति में शक्ति मानने पर भग्न हो जायगी। यदि यह कहें कि 'अनभिहिते' इस सूत्र के अनभिहित संख्या के यह अर्थ है तो यह कहना ठीक नहीं क्योंकि कृत्, तद्धित और समास से संख्या का कथन भी अप्रसिद्ध है।

तीसरा दोष यह भी है कि—यत्न भी व्यापारसामान्य है, यह धातु से ही लब्ध होता है। स्थाली में यत्न पचिक्रिया से कहे जाने पर 'स्थाली पचति' यह प्रयोग होता है 'कारके' इस सूत्र के भाष्य प्रयोग से 'जो किसी अन्य से लब्ध नहीं हो वही शब्दार्थ है इसीलिए कृति में शक्ति बतलाना बिलकुल असम्भव है।

आख्यातार्थे धात्वर्थो विशेषणमित्यस्य निराकरणमवशिष्यते। तथाहि—प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्गः। पाचक औपगव इत्युदाहरणं पाकक्रियाश्रयः उपगुसम्बन्ध्यभिन्नापत्यमिति प्रत्ययार्थस्य प्राधान्यन्तयोरर्थे। तत्रापि प्रत्ययवाच्यस्यैवार्थस्य प्राधान्यम्। द्योत्यस्य त्वप्राधान्यमेव। यथा अजा इत्यत्र स्त्रीत्वविशिष्टपशुविशेष इति बोधः। यस्योत्सर्गस्य 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति यास्कवचनमपवादः। तेनाख्याते तिङन्ते क्रियाया एव प्राधान्यं शब्दबोधेन प्रत्ययार्थस्येति बोध्यम्।

यत्तु आख्यातपदेन तिङ्मात्रग्रहणाद्भावप्रधानमित्यत्र षष्ठीतत्पुरुषाश्रयणात् प्रत्ययार्थप्राधान्यमेव फलतीति। तन्न। 'आख्यातमाख्यातेन क्रियासातत्ये' इति सूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणात्। उत्सर्गेणैव निर्वाहे यास्ककृतापवादवचनवैयर्थ्यापत्तेश्च। तस्मात् 'भावप्रधानम्' इत्यत्र बहुव्रीहिः। आख्यातपदेन तिङन्तस्यैव ग्रहणमित्यलम्।

धात्वर्थ एव प्रत्ययार्थो विशेषणमिति स्वमतं द्रढयन् आख्यातार्थे धात्वर्थो विशेषणमिति तार्किकमतं खण्डयितुपक्रमते—आख्यातार्थे इति। तथाहीति–प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्गे मानञ्च 'प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति मुख्यविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभाव एव।

पाचक इत्युदाहरणे—'पाकक्रियाश्रयः' इत्यर्थे वुण् प्रत्ययार्थस्य प्राधान्यम्। औपगव इत्युदाहरणे च 'उपगुसम्बन्ध्यभिन्नापत्यम्' इत्यर्थेऽण्प्रत्ययार्थस्य प्राधान्यमितिविवेकः कार्यः। तत्रापि—प्रत्ययार्थप्राधान्येऽपि प्रत्ययवाच्यस्यैव प्रधानता द्योत्यस्य तु अर्थस्य अप्रधानतैव। अन्यथा—प्रकृत्यर्थं प्रति प्रत्ययार्थस्यैव प्राधान्ये अजा महिषीत्यत्रापि स्त्रीप्रत्ययार्थस्त्रीत्वस्यैव प्राधान्यापत्तौ 'स्त्रीत्वविशिष्टः पशुः' इति बोधो न स्यादित्यवधेयम्।

नन्वेवमपि परमते संख्याया वाच्यतया घटमानयेत्यत्र एकत्ववत् घटकर्मकमानयनम्, त्वत्कर्तृकं मद्वृत्तिप्रेरणाविषय इति बोधो न स्यात्, तथा घटादेः संख्यायां वृत्तित्वेनान्वयसम्भवेऽपि घटादेस्तिङर्थे साक्षादन्वयाभावात् तिङ्समानाधिकरणे प्रथमा इत्याद्यप्राप्तौ घटोऽस्तीत्यादिवाच्यासम्भवः, घटकर्मदर्शनादिबोधश्च न स्यादिति चेन्न। द्योत्यार्थसंख्योभयातिरिक्तत्वेनोत्सर्गे संकोचात्।

तस्योत्सर्गस्य–प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम् इत्युत्सर्गस्य, भावप्रधानमिति यास्कवचनमपवादः। अस्मिन्नपवादवचने भावप्रधानमित्यत्र भावः धात्वर्थः फलं व्यापारश्च प्रधानं विशेष्यं यस्मिन्निति बहुव्रीहिसमासः। आख्यातम्—तिङन्तम्, अतएव तिङन्तं फलव्यापारान्यतरप्रधानकं बोधं जनयति। नामानि–प्रातिपदिकानि, सत्त्वप्रधानानानि–सत्त्वं द्रव्यमाश्रयः, तत्प्रधानानि तद्विशेष्यकाणि ज्ञानान्वयबोधात्मकानि जनयन्ति।

तत्रेदं विवेचनीयम्—पचतीत्यादौ व्यापारप्रधानकोऽन्वयबोधः। पच्यत इत्यादौ तु विक्लित्त्यादिफलप्रधानकोऽन्वयबोधः। पाचक इत्यादौ आश्रयस्य देवदत्तादेः कर्तुः प्राधान्यम्। पचमानस्तण्डुल इत्यादौ विक्लित्त्यादिरूपफलाश्रयस्य तण्डुलादेः प्राधान्यमिति।

भावप्रधानमित्यत्र भावस्य प्रधानं भावप्रधानमिति षष्ठीतत्पुरुषमाश्रित्य प्रत्ययार्थस्य प्राधान्यं स्वीकुर्वतां परेषां मतं खण्डयितुमुपक्रमते—यत्त्विति। तन्मतं खण्डयति—तन्नेत्यादिना। अयम्भावः—तन्मते भावस्य आख्यातस्य प्रधानमिति षष्ठी-तत्पुरुषादाख्यातपदस्य तिङ्मात्रपरत्वात् प्रत्ययार्थस्यैव प्राधान्यं फलतीति—यत्त-ग्रन्थस्याशयः।

हिन्दी—अब धात्वर्थ ही में प्रत्ययार्थ विशेषण है न कि आख्यातार्थ अर्थात् प्रत्ययार्थ में धात्वर्थ विशेषण है इस अपने सिद्धान्त को दृढ करते हुए आख्यातार्थ में धात्वर्थ विशेषण का निराकरण करते हैं—

'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः प्राधान्यन्तु प्रत्ययार्थस्यैव' अर्थात् यद्यपि प्रकृति प्रत्यय साथ ही साथ अर्थ बताते हैं किन्तु उन में प्रत्ययार्थ की ही प्रधानता रहती है यह उत्सर्ग (व्युत्पत्ति) है—इसलिये 'पाचकः' में पाकक्रिया का आश्रय पकाने वाला यह अर्थ वुण् प्रत्यय का है और उसीकी प्रधानता है तथा 'औपगवः' में 'उपगु मुनि का लड़का' यह अर्थ अण् प्रत्यय का है और उसी की प्रधानता है। उनमें भी प्रत्ययवाच्य ही अर्थ की प्रधानता है द्योत्य अर्थ की नहीं, द्योत्य अर्थ की तो अप्रधानता ही है इसलिये अजा में स्त्रीत्वविशिष्ट पशु का बोध होता है।

यह कहना तो ठीक है किन्तु उस व्युत्पत्ति (विधि) का 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' अर्थात् तिङन्त क्रियाप्रधान है अर्थात् व्यापार प्रधान होता है और प्रातिपदिक द्रव्यप्रधान होता है याने लिङ्ग संख्या-कारक से युक्त होता है' यह जो यास्कवचन है वह अपवाद है। इसलिये शाब्दबोध में तिङन्तस्थल में क्रिया ही की प्रधानता रहती है प्रत्ययार्थ की नहीं।

जो किसी ने यह दलील पेश की है कि—आख्यात पद से तिङ्मात्र का ग्रहण है और 'भावप्रधानम्' में 'भावस्य प्रधानम् भावप्रधानम्' यह षष्ठीतत्पुरुष है तो प्रत्ययार्थ की ही प्रधानता फलितार्थतः निकलती है। तो यह चौथी दलील ठीक नहीं। क्योंकि 'आख्यातमाख्यातेन क्रियासातत्ये' इस सूत्र में आख्यातपद से तिङन्त ही का बोध होता है। अन्यथा 'पचत भृज्जत' यह उदाहरण किस प्रकार सङ्गत हो सकता है। और यदि 'प्रकृत्यर्थ-प्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इस उत्सर्ग से ही निर्वाह हो जाय तो यास्क का अपवादवचन जो है 'भावप्रधानमाख्यातम्' वह वचन ही व्यर्थ होने लगेगा। इसलिए 'भावप्रधानम्' इसमें 'भावः प्रधानं यस्मिन्' यह बहुव्रीहि समास है और आख्यात पद से तिङन्त का ही ग्रहण होता है।

प्रथमान्तार्थमुख्यविशेष्यको बोधस्तार्किकमते इति निराकर्तुमवशिष्यते। तथा हि—शाब्दिकमते पश्य मृगो धावतीत्यादौ मृगकर्तृकं धावनं दृशि-क्रियायाः कर्म, प्रधानं दृशिक्रियैव। तथा च मृगकर्तृकधावनकर्म्मकं प्रेरणा

विषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधः। तव मृगो धावतीत्यत्र विशेष्यभूतधावन-रूपार्थवाचकस्य धावतीत्यस्य प्रातिपदिकत्वाभावान्न द्वितीया। कर्मत्वन्तु संसर्ग-मर्यादया भासते। एवं पचति भवतीत्यत्र पचिक्रियाकर्तृका सत्तेति बोधः। पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति भूवादिसूत्रस्थभाष्यात्। उक्तञ्च हरिणा--

**सुबन्तं हि यथाऽनेकन्तिङन्तस्य विशेषणम्।**
**तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।**

तार्किकमते तु अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणा-विषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति बोधः। तत्र विशेष्यभूतार्थवाचक-मृगशब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्म्मत्वाच्च द्वितीयापत्तौ धावन्तं मृगं पश्येतिवत् पश्य मृगन्धावतीत्यापत्तेः। अप्रथमासमानाधिकरणे शतृशानचोर्नित्य-त्वादेवं प्रयोगविलयापत्तेश्च।

अथ तार्किकसम्मतं प्रथमान्तार्थमुख्यविशेष्यकं शाब्दबोधं निराकरिष्णुर्नागेशः सगर्व-माह— निराकर्तुमवशिष्यत इति।

अत्रेदमवगन्तव्यम्—तार्किकमते कृतेर्लकारार्थस्य प्रथमान्तार्थाश्रये विशेषणतया 'चैत्रस्तण्डुलं पचति' इत्यादौ 'तण्डुलवृत्तिविक्लित्यनुकूलव्यापारानुकूलकृत्याश्रयश्चैत्र' इति बोधः। एतश्च तन्मते वृत्तित्वस्यैव द्वितीयार्थत्वस्वीकारात्। ज्ञानेच्छार्थकधातुसम-भिव्याहारे विषयित्वं वा द्वितीयार्थः। तत्र विषयित्वं ज्ञानधर्मः। विषयत्वञ्च विषय-धर्म्मः। तथाच-घटं जानातीत्यत्र 'घटविषयकज्ञानाश्रय' इति बोधः। घटमिच्छतीत्यत्र 'घटविषयकेच्छाश्रय' इति बोधः। 'ज्ञायते घट' इत्यत्र 'इष्यते घट' इत्यादौ च 'ज्ञाने-च्छान्यतरविषयताश्रयो घट' इति बोधो भवति। विषयित्व-विषयत्वाऽन्तरस्य कर्मप्रत्य-यार्थत्वादिति।

निराकरणप्रकारमाह---तथाहीति। शाब्दिकमते=वैयाकरणमते। पश्य मृगो धाव-तीति मृगकर्तृकशीघ्रगमनदर्शनतात्पर्येण प्रयुज्यते। एवमेव—

'पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः!
शनैः शनैः पदं धत्ते प्राणिनां वधशङ्कया॥'

इति रामायणवाक्यं बककर्तृकमन्दगमनदर्शनाभिप्रायेण प्रयुक्तम्।

वैयाकरणमते 'पश्य मृगो धावति इत्यत्र मृगकर्तृकं यद्धावनं तत्तु दृशिक्रियायां कर्म्म, तत्र दृशिक्रियाया एव प्राधान्यं तथाच 'मृगकर्तृकधावनकर्मकं त्वत्कर्तृकं दर्शनं मत्प्रेरणा-विषय इति शाब्दबोधः सञ्जायते। तत्र विशेष्यभूतं यद्दर्शनं तद्रूपार्थवाचकस्य धावतीत्यस्य धातुपर्युदासबलात् प्रातिपदिकसंज्ञाया अप्राप्त्या द्वितीया न भवति।

ननु तत्र कर्मत्वं कथं भासते इत्याह—कर्मत्वन्त्विति । कर्मत्वन्तु संसर्गमर्यादया भासते । तत्रायं भाव:—शाब्दबोधस्थले—एकपदार्थेऽपरपदार्थस्य संसर्गमर्यादया भासते इति नियमेन एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसम्बन्धस्याकांक्षाभास्यत्वम्। तेन नीलो घट इत्यादावभेदादिबोध:, तत्राऽपि कर्मत्वबोधे न काप्यनुपपत्तिरित्यवधेयम् ।

एवं पचति भवतीत्यत्रापि भवतिक्रियाया: पचिक्रिया कर्त्री भूवादिसूत्रभाष्याद् भवितुमर्हति । तत्रार्थे मानमाह—सुबन्तं हीति ।

प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधं स्वीकुर्वतां तार्किकाणां मते तु—'अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति शाब्दबोध इति शाब्दबोधे विशेष्यभूतार्थवाचकस्य मृगशब्दस्य प्रातिपदिकसंज्ञायां दृशिक्रियाया: कर्मत्वात् द्वितीयायां धावन्तं मृगं पश्येतिवत् पश्य मृगं धावतीत्यापत्ति: स्यात् ।

द्वितीयं दोषमुद्भावयति—अप्रथमासमानाधिकरण इति अयम्भाव:—प्रथमान्तेतरपदप्रयोज्यविषयता-निरूपिताभेदसंसर्गावच्छिन्नविषयताप्रयोजकस्य लट: स्थाने शतृशानचोर्विधानेन धावनकर्तुर्मृगस्य दर्शनकर्मतया द्वितीयापत्तौ मृगमित्येतत्पदप्रयोज्यविषयता-निरूपिताभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वस्य धाव्धातूत्तर लटि सत्त्वेन शतृशानचोरतिप्रसङ्ग: स्यादिति ध्येयम् ।

ननु पश्येत्यत्र तमिति कर्मणोऽध्याहारेणान्वयसिद्धिरिति चेन्न । उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वेन वाक्यभेदप्रसङ्गात् । अध्याहारेऽनन्वयापत्तेश्च । एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थिति: कारणमिति नैयायिकोक्तं नादरणीयम् । किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमित्येन कार्यकारणभावो बोध्य: ।

हिन्दी—नागेश की सगर्वोक्ति यह है कि—अब तार्किक के मत में प्रथमान्तार्थ मुख्यविशेष्यक शाब्दबोध का खण्डन करना शेष रहा है। उसका खण्डन प्रकार यह है—

वैयाकरण के मत में 'मृगो धावति' यहाँ पर मृगकर्तृक जो धावन वह दृशिक्रिया में कर्म है किन्तु उसमें दृशिक्रिया ही की प्रधानता है इसलिए 'मृगकर्तृक जो धावन-कर्मक तत्कर्तृक दर्शन मेरी प्रेरणा का विषय है' अर्थात् हरिण दौड़ा हुआ जा रहा है उस दौड़ते हुए मृग को तुम देखो यही मेरी प्रेरणा का विषय है।

ऐसा क्रियामुख्यविशेष्यक बोध होता है। उसमें 'मृगो धावति' यहाँ पर विशेष्यभूत दौड़ना अर्थ को बताने वाली धावतिक्रिया का धातु होने के कारण प्रातिपदिक संज्ञा होने नहीं पाती इसलिए द्वितीया नहीं होती किन्तु कर्मत्व संबन्धमर्यादा से

भासित होता है। इसी प्रकार 'पचति भवति' यहाँ पर 'पचिक्रिया भवतिक्रिया का कर्ता है' यह बोध होता है। क्योंकि 'पच्यादि क्रियायें भवतिक्रिया के कर्ता होती है' यह भूवादि सूत्र के भाष्य है।

हरि ने भी कहा है—कि जिस प्रकार अनेक सुबन्त तिङन्त का विशेषण होता है उसी प्रकार तिङन्त भी तिङन्त का विशेषण होता है।

किन्तु तार्किक के मत में—'अन्यदेश संयोग के अनुकूल जो धावन ( दौड़ना ) है उसके अनुकूल यत्न वाला जो मृग है उस मृग को देखने में प्रयत्नशील तुम हो' यह प्रथमान्तार्थमुख्यविशेष्यक बोध होता है। वहाँ विशेष्यभूत अर्थ का वाचक जो मृगशब्द है उसकी प्रातिपदिक संज्ञा हो जानेके कारण तथा दृशिक्रिया के कर्म होने के कारण द्वितीया होने से 'धावन्तं मृगं पश्य' इसकी तरह 'पश्य मृगं धावति' यह भी होने लगेगा। और प्रथमा से भिन्न समानाधिकरण में शतृ शानच् का होना अनिवार्य है इसलिए इस तरह के प्रयोगों का विलय (प्रलय) ही होने लगेगा।

ननु विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्म्मत्वेऽपि पृथङ्मृग इत्यस्य प्रातिपदिकस्य कर्म्मत्वाभावान्न द्वितीयेति चेत्, न। 'अनभिहिते' इत्यधिकारसूत्रप्रघट्टके अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या द्वितीयाऽऽपत्तेः।

तथाहि–कटं भीष्मं कुर्वित्यादौ विशेष्यकटशब्दादुत्पन्नद्वितीयया कर्मत्वस्योक्तत्वात् विशेषणीभूतभीष्मशब्दात् द्वितीया न स्यादतः परिगणनं भाष्ये कृतम्। तत्प्रत्याख्यानञ्च सर्वकारकाणां साक्षात्स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन भावनान्वयस्वीकारात्। अत एवोक्तम्भाष्ये कटोऽपि कर्म्म भीष्मादयोऽपीति। तव कटनिष्ठकर्म्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टकर्म्मत्वानुक्तेस्तस्माद् द्वितीयेति तात्पर्यम्। उभयोः पश्चात्परम्परामन्वयस्तु विशेष्य-विशेषणभावेन। अयमेवान्वयः पार्ष्णिक इत्युच्यते। एवमेवान्वयोऽरुणाधिकरणे–'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र क्रयक्रियायां मीमांसकैस्स्वीकृतः। तस्माद्धावति मृग इत्यत्र उभयोः कर्म्मत्वे धावतीत्यस्य प्रातिपदिकत्वाभावाद् विशेषणत्वेनान्यत्र निराकाङ्क्षत्वाच्च द्वितीयोत्पत्त्यभावेऽपि 'मृगशब्दाद् द्वितीया दुर्वारैवेत्यवेहि। शाब्दिकमते तु क्रियाविशेषणत्वेनेतरार्थे निराकाङ्क्षत्वाद् मृगशब्दान्न द्वितीया। तार्किकमते तु विशेष्यार्थवाचकात् मृगशब्दात्राज्ञः पुरुषमानयेतिवद् द्वितीया दुर्वारेत्यलमतिविस्तरेण।

इति धात्वर्थनिर्णयः।

प्रथमान्तर्थमुख्यविशेष्यकशाब्दस्वीकारे तार्किकोक्तामपरामेकां युक्तिमपि खण्डयति-नन्वित्यादिना। विशिष्टार्थवाचकं यद् 'धावति मृग' इति वाक्यं तस्य कर्मवाचकत्वे समासग्रहणकृतनियमेन प्रातिपदिकसंज्ञाया अप्राप्तिः। पृथङ् मृग इत्यस्य प्रातिपदिकत्वेऽपि कर्मणि द्वितीयेत्यस्य कर्मत्वपर्याप्तार्थवाचकात्प्रातिपदिकात् द्वितीया स्यादित्यर्थेन कर्म-वाचकत्वाभावाद् द्वितीयायाः कथमपि न प्राप्तिः, इत्थं च प्रथमान्तार्थमुख्यविशेष्यक शाब्द-बोध उचित इति हि तार्किकस्याभिप्रायः।

परमिमं युक्तिरपि तत्पक्षस्य न साधिका-अभिहिते इत्यधिकारप्रकरणेऽभिधानपरिगणनतत्प्रत्याख्यानपरकभाष्यरीत्या त्वन्मते कृतः कर्तरि शक्त्यभावेन तिङाद्यन्यतमप्रयोज्याभिधानविषयत्वाभाववत्कर्मसत्त्वेन द्वितीयाया दुर्वारत्वादित्यवधेयम्।

तिङ्कृत्तद्धितसमासैरभिधानस्य परिगणनमेव दर्शयति—तथाहीत्यादिना। 'कटं भीष्मं कुरु' इत्यादौ विशेष्यभूतात्कटशब्दात् जातया द्वितीयया कर्मत्वस्योक्तत्वेन विशेषणभूताद् भीष्मशब्दाद् 'उक्तार्थानामप्रयोग' इति न्यायेन द्वितीयाया अप्राप्तो भाष्ये तत्परिगणनम्। सर्वकारकाणां साक्षात् स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन 'कारकाणां क्रिययैवान्वय' इति व्युत्पत्तेः, क्रियान्वयं विना कारकत्वानुपपत्तेश्च भावनान्वयस्वीकारात् तत्परिगणनमपि प्रत्याख्यातं भाष्ये इत्यवधेयम्।

अत एव—सर्वेषां कारकाणां साक्षात् परम्परया वा क्रियान्वयाङ्गीकारादेव द्वितीयायाः प्राप्तिप्रकारं दर्शयितुमाह—भाष्ये यदा कटोऽपीति। कटभीष्मयोरुभयोः पदार्थयोः क्रियायामन्वयेन क्रियान्वयित्वात्कारकत्वेन फलाश्रयत्वेनेच्छाविषयत्वात् कर्मत्वेन च द्वितीयायाः सिद्धिरिति बोध्यम्। उभयोः कटभीष्मपदार्थयोः। पार्ष्णिक इति पृष्णे भवः पार्ष्णिकः, कुत्रापि पुस्तके पार्ष्ठिक इति पाठस्तत्र पृष्ठे पश्चाद् भव इत्यर्थे ध्यात्मादेराकृतिगणत्वात् ठञ् प्रत्ययः।

एवमेवान्वयोऽरुणाधिकरण इति।

सोमयागे क्रयप्रकरणे—'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति पठ्यते। तत्र गोरूपस्य विशेष्यार्थस्य करणतया क्रयणक्रियायामन्वये विशेष्यादुत्पन्नया अरुणादिविशेषणवाचकात्तस्यां तृतीयानुपपत्तिमाशङ्क्य सर्वेषामरुणादिविशेषणानां साक्षात् क्रियान्वयस्वीकारेण विशेष्याभिहितेऽपि करणत्वेन तृतीया साधिता। पश्चाद् विशेष्यविशेषणभावेनान्वयः पार्ष्ठिक उक्तस्तथेहापि कटं भीष्मं कुर्वित्यादावपि विशेष्यविशेषणभावेनान्वय इति भावः।

तस्माद्—हेतोः, धावति मृग इत्यत्र उभयोः कर्मत्वे धावतीत्यस्य प्रत्ययान्तपर्युदासात् प्रातिपदिकत्वाभावात् द्वितीयोत्पत्त्यभावेऽपि मृगशब्दाद् द्वितीया दुःखेन वारणीयेति जानीहि।

शाब्दिकमते=वैयाकरणमते, क्रियाविशेषणत्वेन=धावनक्रियायाः मृगपदार्थाभिन्नाश्रयद्वारा विशेषणत्वेन, अन्यत्र=इतरक्रियायाम्, निराकांक्षत्वात्=मृगशब्दस्य कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वाभावात् कर्मसंज्ञाया अभावान्न द्वितीयेति सारम् ।

'राज्ञः पुरुषमानयेति । राज्ञः पुरुषमानयेत्यत्र यथा विशेष्यपुरुषपदार्थस्य आनयनक्रियायां साक्षादन्वयेन कर्मत्वम् । तथा विशेष्यमृगस्य नैयायिकमते साक्षात्क्रियान्वयित्वेन कर्मत्वाद् द्वितीया दुःखेन वारणीयेत्यवेहि ।

इति संस्कृतव्याख्यायां धात्वर्थनिरूपणम् ।

---

हिन्दी—अब तार्किकों की दूसरी युक्ति यह है कि—विशिष्ट अर्थ के कहने वाला जो 'धावति मृगः' यह वाक्य है उसकी कर्म संज्ञा होने पर भी समासग्रहणकृत नियम के अनुसार प्रातिपादिक संज्ञा नहीं होने पायगी तथा मृगपद के प्रातिपदिक संज्ञा होने पर भी कर्मसंज्ञा नहीं होने से द्वितीया नहीं होगी तो कोई भी क्षति नहीं होगी ।

उनकी यह भी युक्ति ठीक नहीं—क्योंकि 'अनभिहिते' इस अधिकार सूत्र के प्रकरण में—अभिधान अर्थात् उक्ततिङ् कृत्—समास से होता है । इस प्रकार परिगणन और उसका प्रत्याख्यानपरक भाष्य की रीति से द्वितीया हो ही कर रहेगी ।

भाष्य में परिगणन और प्रत्याख्यान का प्रकार यह है—

'कटं भीष्मं कुरु' इत्यादि स्थलों में विशेष्य कट शब्द से उत्पन्न जो द्वितीया उससे कर्म के उक्त हो जाने से विशेषण भीष्म शब्द से द्वितीया नहीं होगी इसलिए तो परिगणन किया ।

किन्तु सभी कारकों के साक्षात् या स्वाश्रय कर्ता आदि के द्वारा अरुणाधिकरण न्याय से कारकों के क्रिया ही के साथ अन्वय होगा फिर परिगणन की क्या आवश्यकता ? इस प्रकार परिगणन का प्रत्याख्यान भाष्य में किया ।

यदि द्वितीया नहीं होगी तो परिगणन और उसका खण्डपरक भाष्य असङ्गत हो जायगा ।

इसीलिए अर्थात् सभी कारकों के क्रिया ही के साथ अन्वय होने ही से भाष्य में कहा है कि 'कट भी कर्म है और भीष्म भी कर्म है तो कट में कर्मत्व उक्त हो जाने पर भी भीष्म आदि में कर्मत्व तो उक्त नहीं है इसलिए भीष्म से द्वितीया अवश्य होगी यह तात्पर्य है ।

लेकिन कट और भीष्म के पीछे परस्पर जो अन्वय होता है वह विशेष्य-विशेषण भाव से। इसी का नाम पार्ष्णिक या पाष्ठिक अन्वय कहा जाता है। अर्थात् पीछे जो अन्वय होता है वह पार्ष्णिक अन्वय कहाता है। इसी प्रकार अरुणाधिकरण में भी मीमांसकों ने अन्वय माना है।

तात्पर्य यह है कि—सोमयाग में क्रयणप्रकरण में—

'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति'। अर्थात् 'लालवर्ण वाली, पीली आँखवाली, एकवर्ष की गाय से सोमलता खरीदनी चाहिए।' यह पढ़ा गया है।

यहाँ गौ विशेष्य है उसका करणत्वेन अन्वय क्रमण क्रिया में है। उस विशेष्य से जब अरुण आदि विशेषण उक्त हो गए तो 'अरुणया, पिङ्गाक्ष्या, एकहायन्या' इन पदों में तृतीया नहीं होनी चाहिए। इस प्रकार की आशङ्का करके अरुण आदि विशेषणों का भी साक्षात् क्रिया में अन्वय मानकर विशेष्य गो से उक्त हो जाने पर भी तृतीया की गई है, पीछे विशेष्य-विशेषण भाव से जो अन्वय किया गया है उसको पार्ष्णिक अन्वय। पार्ष्णिक अन्वय जिस प्रकार कहा गया है उसी प्रकार 'कटं भीष्मं कुरु' यहाँ पर विशेष्य कट से भीष्मादि के उक्त हो जाने पर भी भीष्मादि विशेषण के साक्षात् क्रिया में 'कारकाणां क्रियय़ैवान्वय' इस व्युत्पत्ति के अनुसार अन्वय मानकर द्वितीया होती है। पीछे विशेष्य-विशेषण भाव मानकर परस्पर अन्वय जो होता है वह पार्ष्णिक अन्वय कहलाता है। इसलिए 'धावति मृगः' इस वाक्य में 'धावति' और 'मृग' के कर्म होने पर भी 'धावति' क्रिया के प्रत्ययान्तपर्युदास के कारण प्रातिपदिकत्व के अभाव से तथा विशेषण होने के कारण और जगहों में निराकांक्ष होने के कारण ही 'धावति' में द्वितीया नहीं हो किन्तु मृग शब्द से द्वितीया को कौन वारण कर सकता है' यह जानो।

वैयाकरणों के मत में तो क्रिया विशेषण होने के कारण तथा अन्य अंशों में निराकाङ्क्ष होने के कारण 'साकाङ्क्षं पदमर्थवत्' अर्थात् साकाङ्क्ष ही पद अर्थवत् होता है इस नियम के अनुसार मृग शब्द से द्वितीया होने नहीं पाती।

तार्किकों के मत में तो विशेष्यार्थवाचक मृगशब्द से 'राज्ञः पुरुषमानय' में जिस प्रकार पुरुष पद में द्वितीया होती है उसी प्रकार विशेष्य मृग पद में भी द्वितीया को कोई वारण नहीं कर सकता है इतना कहना पर्याप्त है।

इति हिन्दीव्याख्यायां धात्वर्थनिरूपणं समाप्तम्।

---

# अथ निपातार्थनिरूपणम्

अनुभूयते सुखम्, साक्षात् क्रियते गुरुरित्यादौ निपातानां द्योतकत्वेनानुभव-साक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्म्मकत्वम्। कर्म्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्म्मकत्वमिति निष्कृष्टमतेऽपि फलाश्रयतया कर्म्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम्। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्। केचित्तु क्रियाविशेषाक्षेपकत्वं द्योतकत्वम्। यथा प्रादेशं विलिखतीत्यादौ वर्तमानक्रियाक्षेपकः। प्रादेशं विमाय लिखतीत्यर्थावगमात्। अत एव 'अथ शब्दानुशासनम्' इत्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटाद्युक्तं सङ्गच्छते। क्वचित्तु सम्बन्धपरिच्छेदकत्वं द्योतकत्वम्। यथा कर्म्मप्रवचनीयानाम्। विशिष्टस्य न धातुत्वम्। आ पाठात्। अडाद्यव्यवस्थापत्तेश्च।

इदानीं निपातानां द्योतकत्वं वाचकत्वं वेति विचार आरभ्यते—अनुभूयत सुखमिति। अनुभूयते सुखम्, साक्षात्क्रियते गुरुरित्यत्रानुभवाद्यर्थो यदि धातोः स्वीक्रियते तदा भवतीत्यत्रापि तत्प्रत्ययापत्तिरतो धातोरनुभवाद्यर्थो न मन्तव्यः। स चार्थो यदि उपसर्गस्य मन्यते तदा 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्त्या आख्यातार्थे उपसर्गस्यान्वयो न स्यात्। यदि उपसर्गविशिष्टधातोः स चार्थो मन्येत तदा विशिष्टानुपूर्व्याः शक्तताच्छेदकत्वे गौरवं स्यादित्येतत्सर्वं मनस्यभिसन्धाय उपसर्गाणां द्योतकत्वमेव मन्यते नागेशेन।

निपातानां द्योतकत्वे सत्येव ज्ञायते घट इतिवत् देवदत्तादिसमवेतविषयताश्रयसुखस्य प्रकृतधात्वर्थफलाश्रयत्वात् कर्तुरिति कर्मसंज्ञायां साक्षात् क्रियते इत्यत्र करोतेरुत्पादनार्थे प्रसिद्धावपि साक्षात्पदसामीप्येन प्रत्यक्षात्मक-ज्ञानार्थप्रतीत्या तज्जनिरूपधात्वर्थफलाश्रयतया कर्तुरीप्सिततमसूत्रेणैव कर्मसंज्ञया च धातोः सकर्मकतया तत्र तत्र कर्मणि क्तादयो भवन्तीति बोध्यम्।

'कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्' अर्थात् कर्मसंज्ञकार्थनिष्ठविषयतानिरूपित विषयतावदर्थनिरूपितवृत्तिमत्त्वमिति निष्कृष्टलक्षणेऽपि कर्मसंज्ञकसुखाद्यर्थनिष्ठविषयतानिरूपितविषयताया अनुभवाद्यर्थे सत्त्वेन तन्निरूपितवृत्तित्वं धातोरप्यस्तीति लक्षणसमन्वयः।

द्योतकत्वस्य लक्षणं ब्रवीति—द्योतकत्वञ्चेति। स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्। स्वं द्योतकत्वेनाभिमतं निपातपदं अन्वादि तत्समभिव्याहृतधातुनिष्ठानुभवार्थनिरूपितवृत्त्युद्बोधकत्वमन्वादीनामिति लक्षणसमन्वयः।

क्वचित्त्विति। क्रियाविशेषाक्षेपकत्वं द्योतकत्वम्-तत्राक्षेपकत्वञ्च-अन्यथानुपपत्त्या ज्ञानजनकत्वम् । प्रादेशमिति । अत्र प्रादेशस्य लेखकर्मत्वासम्भवेन लिखतीतिक्रियायोगा-भावात् विना विमानक्रियाक्षेपस्तेन प्रादेशं विमाय लिखतीत्यर्थस्य बोधः ।

तत्र भाष्यं प्रमाणमुपन्यस्यति—अत एवेति । निपातानां द्योतकत्वादेव ।

ननु 'जपमनु प्रावर्षत्' इत्यादौ प्रादिनिपाते प्रोक्तं लक्षणद्वयं न संघटते इति निपातानां द्योतकत्वमिति तृतीयं लक्षणं ब्रवीति—क्वचित्त्विति । सम्बन्धपरिच्छेदे द्योतकत्वमिति लक्षणे कर्मप्रवचनीयानां द्योतकत्वसिद्धिः ।

विशिष्टस्येति । विशिष्टस्य धातुत्वे हि तत एव लङादेर्विधानेन विशिष्टे संज्ञायां 'लुङ् लङ् लृङ्क्षु' इत्यनेनाडागमे उपसर्गात्पूर्वमेव स्यात् । तथा 'लिटि धातो-र्भ्यासस्य' इति द्वित्वं निपातविशिष्टधात्ववयवस्य प्रथमैकाचः, क्वचित् द्वितीयैकाचः स्यादित्यवधेयम् ।

हिन्दी—'अनुभूयते सुखम्, साक्षात् क्रियते गुरुः' इत्यादिस्थलों में निपात द्योतक मानने ही से अनुभव तथा साक्षात्काररूप फल को धात्वर्थ मानकर फलाश्रय सकर्मक होने के कारण कर्म में लकारसिद्धि होती है। अन्यथा वाचक मानने नहीं होगा।

'कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्' अर्थात् कर्मसंज्ञकपदार्थ के साथ जि अन्वय हो वह सकर्मक धातु है इस निष्कृष्टलक्षण मानने पर भी फलाश्रय होने से संज्ञकपदार्थ के धात्वर्थफल ही में अन्वय होना उचित है। इस लिए निपातों को द्यो मानना आवश्यक है।

द्योतकत्व के लक्षण का सारांश यह है—

स्व पद से निपात लिया जाता है तत्समभिव्याहृत जो पद भवति इत्यादि रहने वाला जो अनुभवादि अर्थ तन्निरूपित जो शक्ति उस शक्ति को बोध करावे द्योतक है अर्थात् निपात के साथ रहने वाले पदों की शक्ति का बोधक द्योतक है।

कहीं कहीं क्रिया विशेष का जो आक्षेपक है वह द्योतक कहाता है। जैसे-' विलखति' यहाँ वि उपसर्ग से विमानक्रिया का आक्षेप होता है। इसलिए प्रादेश नापकर लिखता है यह अर्थ होता है। इसलिए भाष्य में 'अथ शब्दानुशासनम्' अथ शब्द प्रारम्भ क्रिया का आक्षेपक है यह कैयट का कहना संगत होता है।

कहीं कहीं पर सम्बन्ध का परिच्छेदक अर्थात् उद्बोधक भी द्योतक होता कर्मप्रवचनीय संज्ञक के कर्मप्रवचनीयसंज्ञा जिसकी होती है वह अन्वादि सम्बन्ध बोधक है।

उपसर्ग-विशिष्ट को धातुसंज्ञा नहीं होती है क्योंकि भ्वादिगण में उप

नहीं है। दूसरी बात यह है कि उपसर्ग-विशिष्ट को धातु संज्ञा होने से उपसर्ग से पहले अट् होने लगेगा।

यत्तु तार्किकाः—उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वम्, 'साक्षात्प्रत्यक्षतुल्ययोः' इति कोशात्। नमः पदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य, दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वाच्च। सकर्मकत्वञ्च-स्वस्वसमभिव्याहृतनिपातोन्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्। कर्म्मत्वञ्च स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमित्याहुः। तन्न वैषम्ये बीजाभावात्, अनुभूयते इत्यनेन साक्षात् क्रियते इत्यस्य समत्वात्। नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयाभावात् निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात्। निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्म्मत्वानुपपत्तेश्च।

निपातोपसर्गविषये तार्किकमतं प्रदर्श्य खण्डयति—यत्त्विति। उपसर्गाणां द्योतकत्वमिति। अत्र तार्किकाणामयमनुमानप्रकारः उपसर्गो द्योतकः उपसर्गत्वाद् इति।

ननु पक्षतावच्छेदकहेत्वोरैक्ये सिद्धसाधनदोष इति वाच्यम्। संज्ञारूपोपसर्गत्वं पक्षतावच्छेदकम्। द्योतकोपसर्गसजातीयत्वञ्च हेतुरिति पूर्वोक्तदोषाभावात्।

ननूपसर्गाणां द्योतकत्वसाधने शक्तिसम्बन्धेन निपातपदवत्त्वरूपमखण्डं वा निपातत्वं पक्षतावच्छेदकीकृत्य निपातत्वेनैव हेतुना वाचकत्वाभावसाधनं युक्तम्। प्रमाणानां सामान्ये पक्षपातादिति चेन्न। ततोऽपि सामान्यधर्माव्ययत्वावच्छेदेनैव तत्सिद्ध्यापत्तेः।

ननु निपातानां वाचकत्वे 'साक्षात्क्रियते गुरुः' इत्यादौ कर्मणि लकारो न सिद्ध्येत। सकर्मकधातोरेव कर्मणि लकारविधानात्। अत्र तु साक्षात्कारार्थे कृधातोः सकर्मकत्वाभावः। स्वार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति लक्षणं साक्षात्कारार्थे नैव घटतेऽत आह—सकर्मकत्वञ्चेति।

तार्किकमतं खण्डयति—तन्नेति। वैषम्ये बीजाभावादिति। चादित्वेन तेषां वाचकत्वम्, उपसर्गत्वेन द्योतकत्वमिति भेदे प्रमाणाभावादिति सारम्।

नामार्थधात्वर्थयोरिति। अनुभावादिफलस्य निपातवाच्यत्वे तस्यानुकूलत्वरूपभेदसंसर्गेणैव धात्वर्थव्यापारेऽन्वयो वाच्यः। स चासम्भवी 'नामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति व्युत्पत्तेः, अतएव राज्ञः पुरुष इत्यादौ त्वन्मते राजादेः पुरुषादौ नान्वयः। नामार्थे निपातार्थेतरत्वेन संकोचे मानाभावाच्चेत्यलम्।

धात्वर्थान्वयं विनेति। व्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयस्यैव कर्तुरित्यनेन कर्मसंज्ञाविधानात्। क्रियान्वयं विना कारकत्वस्यैवाभावाच्च प्रकृते कर्मसंज्ञा न स्यादिति तत्त्वम्।

हिन्दी—तार्किकों ने जो यह माना है कि उपसर्ग द्योतक हैं और निपात
है। क्योंकि 'साक्षात् प्रत्यक्षतुल्ययोः' यह कोश बताता है और नमः पद से
नमः' इत्यादि स्थलों में नमस्कार अर्थ होता है और दान के अवसर में 'गवे नमः'
पर पूजा अर्थ होता है।

किन्तु यह ठीक नहीं क्योंकि इस तरह के वैषम्य में कोई प्रमाण नहीं।
अनुभूयते से साक्षात् क्रियते तुल्य है। तथा नामार्थधात्वर्थ के भेदेन साक्षात्
नहीं होता है। इसलिये निपातार्थ धात्वर्थ के भी अन्वय होना ही असम्भव है,
निपातार्थ के फलाश्रय होने पर भी धात्वर्थ के साथ अन्वय के बिना कर्मसंज्ञा
नहीं हो सकती।

यदपि केचिच्छाब्दिकाः-निपातानां वाचकत्वे शोभनः समुच्चय इति
शोभनश्च इत्यापत्तिः। घटस्य समुच्चय इतिवत् घटस्य च इत्यापत्तिश्चेत्याहुः

तन्न। शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य[1] परविशेषणत्वेनैव बोध
विशेषणान्वयाप्रसङ्गात्। षष्ठ्यप्राप्तेश्च।

किञ्च घटं पटञ्च पश्येत्यादौ घटमित्यस्य क्रियायामेवान्वयः। अत एव
द्वितीया। घटं समुच्चयवन्तं पटम्पश्येति बोधः। समुच्चयस्य प्रतियोग्याकाङ्क्षा
सन्निहितत्वात् घटस्य प्रतियोगित्वम्, पटे तु समुच्चयस्य भेदेनान्वयो, न तु
समुच्चये इति क्व [2]षष्ठ्यापादनम्। नामार्थयोरभेदान्वयव्युत्पत्तिस्तु नि
[3]तातिरिक्तविषया।

---

१. प्रकारतासम्बन्धेन शाब्दबोधं प्रत्येव चादिनिपातविशेष्यजन्योपस्थितेः
णत्वम्, नतु तत्किञ्चिदर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं
कारणत्वम् अतो न शोभनादिपदार्थान्वयस्तत्र। घटो नास्तीत्यादौ नञ्जन्योप
विशेष्यतासम्बन्धेन घटप्रकारकशाब्दबोधं प्रत्यपि कारणत्वाङ्गीकारात्—निपातवि
उपात्तम्। सामान्यत एव विशेष्यतासम्बन्धेन किञ्चिदर्थनिष्ठप्रकारताकशाब्दबो
चादिनिपातविशेषजन्योपस्थितेः कारणत्वानङ्गीकारात् प्रतियोगित्वादिसम्बन्धेन
दिपदार्थस्य समुच्चयादावन्वयसम्भवेन षष्ठ्यापत्तिरपि इत्थमेव वारिता। चकार
त्यसमुच्चयस्यासत्त्वभूतत्वात् षष्ठ्यप्राप्तेश्चेति क्वाचित्कोऽपपाठः। मातुः स्मरणं
असत्त्वभूतक्रियान्वये गृहस्योपरीत्यादौ तादृशाव्ययान्वयेऽपि षष्ठ्या दृष्टत्वात् तेन
तद्वारणासम्भवादिति बोध्यम्।

२. अत्र (घटमित्यस्य क्रियायामेवान्वयः) इत्यादेः (क्व षष्ठ्यापादनम्)
इत्यन्तस्य स्थाने (घटपदस्य घटप्रतियोगिकसमुच्चयवति अप्रसिद्धा शक्तिरेव
इत्यादिपाठोऽस्ति, स न युक्तः सन्दर्भविरुद्धत्वात् लघुमञ्जूषाऽसम्मतत्वाच्चेति बोध्यम्

३. अतः समुच्चयस्य अनुयोगित्वसम्बन्धेन पटेऽन्वयो नानुपपन्न इति

प्राचीनवैयाकरणमतं प्रदर्श्य खण्डयितुमुपक्रमते—यदपीति। शब्दशक्तिस्वभावेनेति। यथा एकैव पचिक्रिया पाक इत्यनेन सत्त्वभूताऽभिधीयते, पचतीत्यनेन चासत्त्वभूता। एवं शक्तिस्वभावान्निपातानामपि नित्यपरतन्त्रत्वमेवेति न षष्ठी नापि विशेषणयोग इति भावः। परविशेषणत्वेनेति। परपदार्थे विशेषणत्वेनेत्यर्थः। अतः प्रकृतेऽपि विशेषणत्वेनैव भानस्योचितत्वात्। विशेष्यतया भानप्रदर्शनं सर्वथा विरुद्धमेव। तथाहि—यत्किञ्चित्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति नञादिभिन्ननिपातपदजन्योपस्थितेः प्रतिबन्धकत्वमिति प्रतिबध्यप्रतिबन्धकभावोऽवसेयः।

भेदेनान्वय इति। विषयत्वसम्बन्धेनेत्यर्थः। तथाच-घटनिष्ठप्रतियोगितानिरूपकसमुच्चेयविषयताश्रयपटकर्मकं दर्शनं त्वत्समवेतं मत्प्रेरणाविषय इति शाब्दबोधः।

क्व षष्ठ्यापादनमिति। निपातार्थे विशेषणान्वयासम्भवात् सम्बन्धे एव षष्ठीविधानाच्च न घटादौ षष्ठ्याः प्राप्तिरित्याशयः।

हिन्दी— किसी प्राचीन वैयाकरणों ने जो यह कहा है कि—निपात को वाचक मानने पर 'शोभनः समुच्चयः' की तरह 'शोभनश्च' होने लगेगा। तथा 'घटस्य समुच्चयः' की तरह 'घटस्य च' ऐसा होने लगेगा।

किन्तु यह कहना ठीक नहीं क्योंकि शब्दों के शक्तिस्वभाववश निपातों से स्वार्थ के परपदार्थ का विशेषणरूप ही में बोध होता है। इसलिये विशेषण में अन्वय नहीं होगा। और षष्ठी भी नहीं होने पायेगी।

और दूसरा दोष यह है कि—'घटं पटञ्च पश्य' इत्यादि स्थलों में 'घटम्' कर्म का क्रिया ही में अन्वय होता है इसलिये द्वितीया होती है अतः 'घटं समुच्चयवन्तं पटं पश्य' यह शाब्दबोध होता है। समुच्चय के प्रतियोगी कौन हैं ( यस्याभावः स प्रतियोगी ) इस आकांक्षा में सन्निहित ( समीप ) में घट है इसलिये घट ही प्रतियोगी है। पट में तो समुच्चय का भेदेन अन्वय होता है। पट के समुच्चय में नहीं तो घटादि में किस प्रकार होगा कारण यह है कि निपातार्थ में विशेषण का अन्वय असम्भव है और सम्बन्ध ही में षष्ठी होने का नियम है तो षष्ठी किसमें होगी ?

यदि यह कहा जाय कि 'नामार्थ नामार्थ का अभेदान्वय तो व्युत्पत्ति के अनुसार निश्चित ही है तो षष्ठी होने में क्या क्षति' ?

पर यह कहना भी ठीक नहीं क्योंकि यह व्युत्पत्ति निपात से अतिरिक्त विषय के लिये है और समुच्चय के अनुयोगित्व-सम्बन्ध से पट में अन्वय होता है तो कोई भी अनुपपत्ति नहीं होगी।

---

लिङ्गसङ्ख्यान्वय्यर्थप्रतिपादकत्वमेव नामत्वम्, तच्च निपातेषु नेत्यतोऽपि न तद्व्युत्पत्तिविरोधः। यद्वा समुच्चयवांश्चार्थः। नेन अभेदान्वयः समञ्जस एवेत्यादि लघुमञ्जूषायां स्पष्टम्।

[1]निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणा-न्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वात्। नञ्समासे उत्तरपदार्थग्रा द्योत्यार्थापेक्षयैव। प्रतिष्ठते इत्यत्र तिष्ठतिरेव गतिवाची, धातूनामनेकार्थत्वा प्रशब्दस्तु [2]तदर्थगत्यादित्वस्य द्योतकः।

अत एव धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति सिद्धान्तितम्। सा कारकम् तत्प्रयुक्तकार्येण, उपसर्गेण उपसर्गसंज्ञकशब्देन। तत्र हि भाष्ये- धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति। नैतत्सारं पूर्वं धातुस्सा युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां [3]निर्वर्तयति तामुपसर्गो वि ष्टीति [4]सत्यमेवमेतत्। [5]यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्य कृत्वा धातुस्साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयं यो ह्येवं मन्यते धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य 'आस्यते गुरुणा इत्यक उपास्यते गुरुरिति केन सकर्मकः स्यात्' इति।

प्राचीनवैयाकरणानां वाचकत्वपक्षे दूषणं निराकृत्य साम्प्रतं द्योतकत्व दोषाभावो नैयायिकान् प्रत्युच्यते—निपातानामपीति। द्योत्यार्थमादायैवेति। एक

---

१. प्राचीनानां वाचकत्वपक्षे शोमनश्चेत्यादिदूषणस्याभिधानमसङ्गतमिति प्रति तम्। इदानीं द्योतकत्वपक्षेऽपि न किञ्चिद् दूषणमिति नैयायिकान् प्रत्युच्यतेनिपात मिति।

२. तदर्थगतेः—स्थाधात्वर्थगतेः आदित्वस्य द्योतक इत्यर्थः। तेन प्रतिष्ठते इ गन्तुं प्रवर्तते इत्यर्थो बोध्यः।

३. निर्वर्तयति साध्यत्ववैशिष्ट्येन बोधयतीत्यर्थः।

४. विशिनष्टि स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः। साध्यत्वेन विना क्रियायोगे विहितोपसर्गसंज्ञकशब्दैर्योगाज्ज्ञानादिति 'पूर्वं धातुः साध्येन पश्चादुपसर्गेण' इत्यस्य तात्पर्यम्।

५. धातूपसर्गकार्यस्य सुडादेरन्तरङ्गत्वोपपादनायाह-यस्त्वसाविति। यः सर्गसम्बन्धकृतत्वेनाभिमतोऽर्थः तं धातुः उपसर्गसंज्ञकशब्दयोगं विनाऽपि कृत्वाऽर्थत्वेनाङ्गीकृत्य साधनेन युज्यते इत्यर्थः। एवं च पूर्वमुपसर्गयोगो नाम सम्बन्धः। ततः उपसर्गशब्दयोगात् पूर्वं साधनकार्ययोगः, ततः 'उपसर्गशब्दयोग 'पूर्वं धातुः साधनेन युज्यते, पूर्वं धातुरुपसर्गेण युज्यते' इति परिभाषाद्वय तात्पर्यम्। एवं च सुटः पूर्वोपस्थितभूषणाद्यर्थनिमित्तकत्वेनान्तरङ्गत्वमुपपन्नम्। उपसर्गकार्यं नार्थनिमित्तकं तत्तु पूर्वागतसाधननिमित्तककार्याद् बहिरङ्गमेव। प्रत्ययः अध्ययनम् इत्यादौ यणादिकमेवान्तरङ्गत्वात् भवति। अत एव 'णेर इत्यादिनिर्देशसङ्गतिरित्यादिकमन्यतो बोध्यम्।

र्थवदितिसूत्रेण वृत्तिमतो ग्रहणात् प्रातिपदिकत्वसिद्धिरिति बोध्यम् बोधकत्वस्यैवेति। अर्थविषयकबोधजनकत्वप्रकारकवक्तृतात्पर्यविषयतापर्याप्त्यधिकरणस्यैवेत्यर्थः।

नञ्समास इति। न ब्राह्मणोऽब्राह्मण इत्यस्यारोपितब्राह्मण इत्यर्थः। आरोपितत्वं नञ् द्योत्यम्। अतएव असर्वस्मै इत्यादौ सर्वनामसंज्ञायां स्मायादेशसिद्धिः।

उत्तरपदार्थप्राधान्यमिति। यद्यपि पूर्वप्रधानोऽव्ययीभावउत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिकथनं प्राचां प्रवाद इत्युक्तं दीक्षितैस्तथापि नञ्तत्पुरुषातिरिक्तं तत् इत्यवसेयम्। 'नञ् समासे चापरस्य प्राधान्यात्सर्वनामता' इत्यभियुक्तोक्तेः। अन्यथा नञ् र्थस्य विशेष्यत्वेऽस इत्यादौ तदादेरुपसर्जनत्वेन सर्वनामसंज्ञा न स्यादिति बोध्यम्।

तदर्थगत्यादित्वस्य = तदर्थगतेः—स्थाधात्वर्थगतेः आदित्वस्य द्योतकः। तेन प्रतिष्ठते इत्यस्य गन्तुं प्रवर्तत इत्यर्थः।

द्योतक इति। अत्र भूवादिसूत्रस्थं भाष्यमेव मानम्। तथाहि— तत्र हि क्रियावचने धातावुपसर्गप्रत्ययोः प्रतिषेधः' इति वार्तिकखण्डनावसरे 'प्रकृतिः प्रकृत्यर्थे वर्तते प्रत्ययः प्रत्ययार्थे' इति प्रतिपाद्य 'क्रियाविशेषक उपसर्गः' पचतीत्यत्र क्रिया गम्यते तां प्रो विशिनष्टि' इत्युक्त्वा, तत्रधातोरुपसर्गव्यभिचारवत् अध्येतीत्यादौ उपसर्गस्य धातुव्यभिचारेण निर्वाहं कृत्वा 'इह तर्हि व्यक्तमर्थान्तरं गम्यते, तिष्ठति प्रतिष्ठते' इति। आद्ये व्रजिक्रियानिवृत्तिरन्त्ये व्रजिक्रिया, अतो 'मन्यामहे उपसर्गकृतमेतत् येनात्र व्रजिक्रिया गम्यते इति प्रोऽयं दृष्टापचारः आदिकर्मणि वर्तते। न चेदं नास्ति बह्वर्था अपि धातवो भवन्ति' इति। क्यादौ यथेदं तथाऽपि 'तिष्ठतिरेव व्रजिक्रियां तन्निवृत्तिं चाह' इत्युक्तम्। प्रोयमिति, अन्यत्रापि प्रयोगात्। ततश्चान्यत्रास्य योऽर्थो द्योत्यः, स एवेहापीत्यनुमीयते। अनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतिवाचीति निर्णय इति कैयटः।

पूर्वं धातुरुपसर्गेणेति। विशिष्टा हि क्रिया 'उपास्यते गुरुः' इत्यादिस्थले कार्यार्थं सम्बध्यते। एवञ्चान्तरङ्गत्वात् सुटि सञ्चस्करतुरित्यत्र गुणः सिद्धो भवतीति भावः।

ननु 'विष्वग्देवयोश्च' इत्यत्राप्रत्ययग्रहणेन तदादिविधेर्ज्ञापितत्वात्कथं धातूपसर्गयोरन्तरङ्गत्वमित्याशयेनाह—नैतत्सारमिति। साधनसम्भवादेव धात्वर्थस्य साध्यत्वं प्रतीयते, क्रियायामेव चोपसर्गा विशेषं द्योतयन्ति इति तत्त्वम्।

पश्चादुपसर्गेणेति। अत एव 'प्रत्ययः' इति निर्देशः सङ्गच्छते। निवर्तयति = जनयति। तां = क्रियाम्। विशिनष्टि = विशेषणरूपेण बोधयति।

सत्यमेवमेतदिति। पूर्वं धातुः साधनेन युज्यते उपसर्गयोगात् इति सत्यम्, परन्तु धातूसर्गसम्बन्धकृतो योऽर्थस्तमभ्यन्तरं कृत्वा स्वबोध्यं कृत्वा साधनयोगे क्रियात्वावगतौ उपसर्गयोगः। नहि केवलं धातुना सोऽर्थः प्रतीयते इत्यवधेयम्।

यस्त्वसाविति। धातोरनेकार्थत्वात् उपसर्गद्योत्यार्थविशिष्टनिरूपितशक्तिग्रहाधीनता-

दृशविशिष्टार्थोपस्थितौ केवलार्थनिरूपितशक्तिग्रहाधीनकेवलार्थोपस्थितौ च तात्पर्यसं तत्तदुपसर्गसमभिव्याहारज्ञानरूपप्रकरणबलात् विशिष्टार्थविषयकतात्पर्यनिश्चयद्वारा धा सकर्मकता। उपसर्गासमभिव्याहारे केवलार्थस्य तात्पर्यनिश्चयादकर्मकता ज्ञेया।

हिन्दी—निपातों का वाचकत्व पक्ष मानने वाले नैयायिकों के प्रति द्योतकत्व दृढ़ करने के लिए कहते हैं कि—

निपातों का अर्थवत्त्व भी द्योत्य अर्थ लेकर ही हो सकता है। क्योंकि शक्ति लक्षणा, द्योतकता इन तीनों में से किसी एक सम्बन्ध से जो बोधक होता है उसी अर्थवत्त्व है।

तथा नञ् समास में भी जो उत्तर पदार्थ की प्रधानता रहती है वह द्योत्य अर्थ अपेक्षा ही से। 'प्रतिष्ठते' में स्थाधातु ही गतिवाचक है क्योंकि धातुके अनेक अर्थ हैं। प्रशब्द तो स्थाधातु के अर्थ जो गत्यादि है उसका द्योतक है।

इसीलिए भूवादि सूत्र से भाष्य में 'पहले धातु साधन के साथ युक्त होता है त उपसर्ग के साथ' यह सिद्धान्त अन्त में किया है।

साधन माने कारक, तत्प्रयुक्त कार्य्य से उपसर्ग से उपसर्गसंज्ञक शब्द से।

उस भाष्य में यह कहा है—पहले धातु उपसर्ग के साथ युक्त होता है तब पीछे साधन के साथ यह कहकर फिर कहा कि—यह ठीक नहीं—पहले धातु साधन के साथ युक्त होता है बाद में उपसर्ग के साथ क्योंकि साधन ही क्रिया का सम्पादक है उसको उपसर्ग विशिष्ट अर्थ को झलका देता है।

और यह बात भी ठीक है—क्योंकि जो वह धातु उपसर्ग का सम्बन्ध है उसको लेकर धातु साधन के साथ युक्त होता है। और यह अवश्य जानना चाहिए कि—जो यह मानता है कि—पहले धातु साधन के साथ युक्त होता है बाद में उपसर्ग से उनके मत में—'आस्यते गुरुणा' यहाँ पर अकर्मकत्व व्यवहार और उपास्यते गुरुः इसमें सकर्मकत्वव्यवहार किस प्रकार होगा।

हरिणाऽप्युक्तम्—

**धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा।**
**धातुत्वं कर्मभावश्च तथाऽन्यदपि दृश्यताम्॥**
**बुद्धिस्थादधिसम्बन्धात्तथा धातूपसर्गयोः।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते॥ इति।**

अस्यार्थः—यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातु ज्ञोच्यते, यथा च सन्प्रत्यये चिकीर्षिते भावीषिकर्म्मत्वमाश्रित्योपक्रमे एवं

षिकर्म्मत्वमुक्तम्, तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम्। धातूपसर्गयोस्सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते। श्रोतुरिति शेषः। उपसर्गयोगात्प्रागेव धातुनैवोपसर्गार्थविशिष्टः स्वार्थ उच्यत इति तात्पर्यम्। पूर्वं धातुरूपसर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहारः।

चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा 'नञिवयुक्तमन्यसदृशाधिकरणे'इति न्यायात्। इवपदं तात्पर्यग्राहकम्। तात्पर्यग्राहकत्वञ्च--स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्वमित्यागतम् इवनिपातस्य द्योतकत्वम्।

उक्तांशे हरिकारिकामुपन्यस्यति—धातोरिति। भाविनः, साधनयोगस्य प्रक्रमात्, यथा धातोः, धातुत्वं, कर्मभावाश्च तथा अन्यदपि, दृश्यताम् इत्यन्वयः।

तथा बुद्धिस्थात् अभिसम्बन्धात्, धातूपसर्गयोः, अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते इत्यन्वयः।

अयम्भावः—धातुसंज्ञायां क्रियावाचकत्वस्य क्रियावाचकत्वे च धातोरपेक्षायां साधनसम्बन्धात् प्राक् क्रियानिर्वृत्तेरसम्भवात् तथा भाविसाधनसम्बन्धाश्रयणेनोपक्रम एव धातुसंज्ञा, यथा वा 'धातोः कर्मणः' इत्यत्र भाविषिकर्मत्वम् तथा भावसम्बधादुपक्रम एव क्रियाविशिष्टवाचकत्वम्।

श्रोतुरिति। तथा हि—

प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशेषणैः।
प्राक् तु साधनसम्बन्धात् क्रिया नैवोपजायते।। इति।।

अयम्भावः भूवादयो धातव इत्यनेन क्रियावाचिनां भ्वादीनां धातुसंज्ञा विधीयते। क्रिया च धात्वर्थः। तद्वाचित्वं तद्बोधजनकत्वम् बोधश्च प्रयुज्यमानात् परिनिष्ठितादेव जायते। 'अपदं न प्रयुञ्जीत' इति भाष्यात्। तत्र हि पदपदेन परिनिष्ठितं गृह्यते। इत्थञ्च धातुसंज्ञादशायां क्रियावाचित्वाभावेऽपि प्रायोगिकक्रियावाचकत्वं प्रक्रियादशायां शब्दस्वरूपे प्रकल्प्य यथा धातुसंज्ञा भवति तथैहापि उपसर्गसमवाये भविष्यद्विशिष्टार्थबोधजनकत्वमादाय सकर्मकाकर्मकव्यवहारः समुपपद्यते। पश्चात् श्रोतुर्विशेषरूपेण अर्थबोधाय तत्तद्विशेषार्थद्योतकनिपातसम्बन्धो भवतीति बोध्यम्।

तदर्थस्य=उपसर्गार्थस्येत्यर्थः नञिवयुक्तमिति। 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति हि न्यायस्वरूपम्। तदर्थश्च-नञ् समभिव्याहृतम्, इवसमभिव्याहृतञ्च पदं स्वबोध्यार्थान्यस्य स्वबोध्यार्थसदृशस्य च बोधकमिति। नञ् पदम् इवपदञ्च तात्पर्यग्राहकम् तथाह्यर्थगतिः। सादृश्यञ्च-तत्तत्स्थलेषु तत्तद्धर्मेण ग्राह्यम्। स च धर्मः

साहश्यप्रतियोगितावच्छेदकोऽपेक्ष्यते चन्द्र इव मुखमित्यादौ आह्लादकत्वधर्मस्य साहः प्रतियोगितावच्छेदकचन्द्रत्वव्यापकत्वात् तेनैव धर्मेण साहश्यं बोध्यम् ।

हिन्दी--हरि ने भी कहा है कि--जिस प्रकार भावी साधन सम्बन्ध के आश्रय क्रियावाचित्व मानकर धातुसंज्ञा होती है, तथा 'धातोः कर्मणः' इस सूत्र से सन् करने में भावी इषिकर्मत्व को मानकर पहले ही इषिकर्मत्व कहा गया है उसी प्र भावी उपसर्ग के सम्बन्ध से पहले ही विशिष्टक्रियावाचकत्व समझें । और पुनः उपसर्ग के सम्बन्ध को बुद्धि में लाकर उपसर्ग के अर्थ से जो विशेपता होती है वह से ही झलक कर प्रयोग के समय उपसर्ग के जुट जाने पर सुनने वालों को प्रका होने लगता है अर्थात् उपसर्ग के सम्बन्ध से पहले ही धातु से ही उपसर्गविशिष्ट का बोध होता है यह तात्पर्य है ।

पहले धातु उपसर्ग से युक्त होता है यह जो कहा गया है सो उपसर्ग के अर्थ धातुके अर्थ में अन्तर्भाव होने से ही ।

'चन्द्र इव मुखम्' इत्यादि स्थलों में चन्द्रपद के चन्द्रसहश में अप्रसिद्धा शक्ति लक्षणा होती है । क्योंकि 'नञिवयुक्तमन्यसहशाधिकरणे तथाह्यर्थगतिः' अर्थात् 'नञ् इवयुक्त पद स्वबोध्य अर्थ से अन्य का तथा स्वबोध्य अर्थ के सहश का बोधक हो है क्योंकि उसीसे अर्थ का ज्ञान होता है' यह न्याय है इसलिए चन्द्र पद से चन्द्रसह में लक्षणा होती है उक्तस्थल में इव पद तात्पर्य का ग्राहक है क्योंकि तात्पर्यग्राह उसे कहते हैं जो स्वयुक्तपद के अन्य अर्थ में शक्ति के प्रकाशक हो तो निपात का द्यो कत्व स्पष्ट तौर से आ जाता है ।

यत्तु इवार्थस्सादृश्यं तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्वयोपपत्तेः किं लक्षणया । तथा च चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति बोध इत्याहुः तन्न । चन्द्र इव मुखं पश्यामीत्यादौ चन्द्रपदस्य मुखरूपकर्म्मसामानाधिकरण्या भावादुक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः षष्ठ्यापत्तेश्च ।

परे त्विवशब्दस्योपमानताद्योकत्वम् । उपमानत्वञ्च--उपमानोपमेयोभयनिष्ठ साधारणधर्म्मवत्त्वेनेषदितरपरिच्छेदकत्वम् । तद्धर्म्मवत्तया परिच्छेद्यत्वञ्चोपमेय त्वम् । साधारणधर्मसम्बन्धश्च क्वचिद् विशेष्यतयाऽन्वेति क्वचिद् विशेषणतया एवञ्च चन्द्र इव आह्लादकं मुखमित्यादौ आह्लादकोपमानभूतचन्द्राभिन्नमाह्ला दकं मुखमिति बोधः । चन्द्र इव मुखमाह्लादयतीत्यादौ चोपमानभूतचन्द्रकर्तृका ह्लादाभिन्नो मुखकर्तृकाह्लाद इति बोधः । इदम् 'उपमानानि सामान्यवचनैः' इत्यत्र भाष्ये[1] स्पष्टमित्याहुः ।

---

१. तत्र हि भाष्ये किमिहोदाहरणम् । शस्त्री श्यामा । क्व पुनरयं श्यामाशब्दो वर्त्तते । शस्त्र्यामित्याह । केन तर्हीदानीं देवदत्तोऽभिधीयते । समासेन । ( यदि

मतान्तरं पुन: खण्डयति—यत्त्विति-अयमेतदाशय:—इवार्थ: सादृश्यम् 'चन्द्रमिव मुखमित्यत्र चन्द्रस्य प्रतियोगितया मुखस्यानुयोगितया च सादृश्येऽन्वयात् चन्द्रप्रतियोगिकमुखानुयोगिकसादृश्यमिति बोधस्य सौलभ्ये लक्षणाया: कावश्यकता ?

---

श्यामाशब्देन शस्त्री अभिधीयते उपमेयं समासेन अभिधीयते तर्हि पुंस्त्वविशिष्टदेवदत्तादेरपि उपमेयत्वे श्यामशब्दस्य तदनभिधायकत्वात् स्त्रीत्वविशिष्टशस्त्र्यभिधायकत्वाच्च टापि (शस्त्री श्यामो देवदत्त इति पुंल्लिङ्गप्रयोगो) न सिध्यति। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वं भविष्यति। यद्येवं कुम्भकपाललोहिनी इत्यत्र 'वर्णादनुदात्तात्' इति अनुपसर्जनलक्षण ईकारो न प्राप्नोति, एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो देवदत्तायां श्यामाशब्द:। एवमपि समानाधिकरणेनेति वर्तते, व्यधिकरणत्वात्समासो न प्राप्नोति। किं हि वचनान्न भवति। यद्यपि तावद्वचनात्समास: स्यात्। इह खलु मृगीव चपला मृगचपलेत्यत्र समानाधिकरणलक्षण: पुंवद्भावो न प्राप्नोति। एवं तर्हि तस्यामेवोभयं वर्तते। युक्तं चैतत् ? इतरथा हि बह्वपेक्ष्यं स्यात्। यदि तावत् एवं विग्रह: करिष्यते शस्त्रीव श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदुपेक्ष्यं स्यात्। यदि तावत् एवं विग्रह: करिष्यते, यथा शस्त्री श्यामा तद्वदियं देवदत्तेति, एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्' इत्युक्तम्। तत्र तस्यामेवेत्यस्य उपमेयायामेवेत्यर्थ:। उपमानशब्दोऽपि सादृश्यमूलकाभेदाध्यवसायात् उपमेये एव वर्तते इति भाष्याशय:। सादृश्यनिर्वाहाय च तत्प्रयोजकस्य साधारणधर्मस्य श्यामत्वादे: घनश्यामो देवदत्त इत्यादौ तन्त्रादिना उपमा उपमेये चोभयत्रान्वय: तथाच उपमानश्यामघनाभिन्न: श्यामो देवदत्त इति बोध:। अत एव सूत्रे 'सामान्यवचनै:' इति वचनपदमुपात्तम्। तेन च साधारणधर्मत्वेन बोधकता लभ्यते। साधारणधर्मत्वं च अनेकवृत्तिधर्मत्वम्। उभयत्र श्यामत्वादेरन्वयाभावे च अनेकवृत्तिधर्मत्वेन श्यामादिपदानां तद्बोधकत्वाभावात् समासो न स्यात्। तस्मात् सौत्रवचनपदस्वारस्येन उभयगतगुणवाचकत्वादिति 'उपमानानि' इतिसूत्रस्यभाष्याच्च उभयत्र साधारणधर्मान्वय: शाब्द:। तत्प्रयोज्य: सादृश्यान्वयस्तु आर्थ:। नतु पूर्वपदस्य घनशब्दादे: लक्षणया तत्सदृशान्वयबोध: शाब्द:। तथा सति उपमानत्वेन बोधकानि सामान्यधर्मविशिष्टोपमेयवचनै: समानाधिकरणै: समस्यन्ते इत्यर्थकेन उपमानानि सामान्यवचनै:" इत्यनेनसमासानापत्ते: पूर्वपदस्य लक्षणया उपमेयपरत्वेन उपमानवाचकत्वाभावात्। वृत्तिविग्रहयो: समानार्थत्वाय तद्विग्रहवाक्येऽपि घन इव श्याम इत्यादौ लक्षणया तत्सदृशपरत्वस्यावश्यकत्वेन विग्रहवाक्यीयमुपमानवाचकत्वमपि नाश्रयितुं शक्यते। घनेन तुल्य इत्यादिकं तु न तद्विग्रहवाक्यम्। अन्यथा मृग्या तुल्या चपलेत्यं तद्विग्रहवाक्यके मृगचपलेत्यत्र पुंवद्भावानापत्ति:। सामानाधिकरण्याभावात्। षष्ठीतत्पुरुषादावतिव्याप्तिवारणाय वृत्तौ विग्रहे च सामानाधिकरण्यस्य पुंवद्भावेऽपेक्षितत्वात्। वृत्तिविग्रहयो: समानार्थकत्वनियमभङ्गापत्तिश्च।

परमेतन्मतन्न सत् । 'चन्द्र इव मुखं दृश्यते' चन्द्रमिव मुखं पश्यामि" इत्यादौ चन्द्रपदस्य मुखेन कर्मणा सह सामानाधिकरण्याभावात् उक्तानुक्तत्वप्रयुक्ताया विभक्तिस्तस्या अप्राप्तेः । षष्ठ्याः प्राप्तेश्च । अस्माकं मते तु चन्द्रसदृशो लक्षणया चन्द्रसदृशरूपचन्द्रपदार्थस्य स्वाभिन्नमुखद्वारा फलाश्रयत्वात् कर्मत्वेन द्वितीयाया एव प्राप्तेः ।

अत्र मानञ्च—

> या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
> प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥

इत्यभियुक्तोक्तमेव । 'निपातानां वाचकत्वमि'ति तव मते तु च पदार्थस्येवार्थ-सादृश्ये प्रतियोगितयाऽन्वयो न स्यात् । नामर्थयोर्मिथो अभेदान्वयस्याव्युत्पन्नत्वात् ।

नागेशः स्वकीयं मतं प्रदर्शयति—परे त्विति । इवशब्दो ह्युपमानताद्योतक इति हि तन्मतम् ।

उपमानस्य लक्षणं ब्रवीति—उपमानत्वञ्चेति । उपमेयस्य लक्षणमाह—तद्धर्मवत्त-येति । साधारणधर्मसम्बन्धस्यान्वयप्रकारमाह—साधारणेति नानास्थले शाब्दबोधं प्रदर्शयति—एवञ्चेत्यादिना ।

भाष्ये स्पष्टमिति । तत्र हि "किं सर्वथा भेदे उपमानोपमेयभाव उत्त-अभेदे इति प्रश्ने उभयत्रापि साधारणधर्मासम्भवाद् गौरिव गौः, गौरिवाश्व इत्यादौ उपमा-वाचकेवादेर्नैरर्थक्यापत्तिमुक्त्वा "यत्र विशेषरूपेण भेदावगतिः साधारणधर्मरूपेणा-भेदावगतिस्तत्र सः" इत्युक्त्वा "कथमेतज्जातम्" इति शङ्कायां हीनं मानमुपमानं यन्नात्यन्ताय मिमीते इत्यर्थकोपमानव्यवहारादेवेतन्निर्णीतम् । इत्युक्तम् । तस्यायं भावः—प्रस्थादि हि साकल्येन मानमिति तत् अत्यन्तभेदेनैव परिच्छेदकम् इति । प्रस्थः परिमाणस्येति प्रस्थो व्रीहिरिति वा इदन्तु हीनमिति भेदाभेदाभ्यामेव परिच्छेदक-मिति । अन्तन्तायेत्यव्ययमत्यन्तमित्यर्थे इति ।

हिन्दी—जो किसीने इन का अर्थ सादृश्य है उसमें चन्द्र और मुख का प्रतियोगी अनुयोगीभाव से अर्थात् यस्याभावः स प्रतियोगी, यत्सादृश्यमनुयोगी इस लक्षण के अनुसार प्रतियोगीभाव से चन्द्र का और अनुयोगिभाव से मुख का अन्वय सिद्ध है

---

तस्मात् "तस्यामेवोभयं वर्तते" इति भाष्यस्य पूर्वपदस्य उपमानवाचकत्वेऽपि सादृश्यमूलकाभेदाध्यवसायात् उपमेयपरत्वमित्येव पूर्वोक्तं तात्पर्यं समीचीनम् । ततश्च वि-ग्रहे वृत्तौ च पूर्वपदस्य उपमानत्वविशिष्टार्थपरत्वात् उत्तरपदार्थसाधारणधर्मस्य च उ-भयत्रान्वयात् समासः, वृत्तिविग्रहयोः समानार्थकत्वं, साधारणधर्मान्वयप्रयोज्याभेदा-न्वयबोधश्च सिध्यन्ति ! ततश्च मूले प्रदर्शितो बोधः उक्तसूत्रस्थभाष्यसम्मत इति सङ्क्षेप इति लघुमञ्जूषायां विस्तरः ।

लक्षण मानने की क्या आवश्यकता ? मेरे मत में 'चन्द्र इव मुखम्' इसका "चन्द्र प्रतियोगिक मुखानुयोगिकसादृश्यम्" ऐसा शाब्दबोध होता है।

पर यह कहना ठीक नहीं, क्योंकि "चन्द्र इव मुखं दृश्यते" "चन्द्रमिव मुखं पश्यामि' इत्यादि स्थलों में चन्द्र पद के मुख कर्म के साथ सामानाधिकरण्य नहीं रहने से उक्त अनुक्त के द्वारा विभक्ति की व्यवस्था ठीक नहीं होने पायगी और षष्ठी विभक्ति की आपत्ति होने लगेगी।

इस अंश में नागेश का मत यह है कि--इवशब्द उपमानता का व्यञ्जक है क्योंकि उपमान उसी को कहते हैं जो उपमान और उपमेय दोनों में रहनेवाला जो साधारण धर्म उससे कुछ दूसरे पदार्थों का भेद बतावे, और उसी धर्म से जो परिच्छेद्य हो अर्थात् ज्ञेय हो वह उपमान कहलाता है। तथा वह साधारण धर्म कहीं विशेषण भाव से रहता है कहीं विशेष्यभाव से ऐसी समस्या में 'चन्द्र इव मुखम् 'इसका आनन्द करने वाला उपमान चन्द्र से अभिन्न आनन्द देने वाला मुख है' यह बोध होता है।

'चन्द्र इव आह्लादयति मुखम्' इससे यह बोध होता है 'उपमान चन्द्र से जो आनन्द होता है उससे अभिन्न ही मुख आनन्द देता है। यह 'उपमानानि सामान्यवचनैः' इस सूत्र के भाष्य में स्पष्ट है यह ग्रन्थकार ने कहा है।

नञ् द्विविधः--पर्युदासः प्रसज्यप्रतिषेधश्च। तत्रारोपविषयत्वं नञ्पर्य्युदासद्योत्यम्। आरोपविषयत्वद्योतकत्वञ्च नञः समभिव्याहृतघटादिपदानामारोपितवृत्तिनिमित्तबोधकत्वं तात्पर्यग्राहकत्वम्। प्रवृत्तिनिमित्तं घटत्वब्राह्मणत्वादी। तस्मात् अब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः। अत एवोत्तरपदार्थप्राधान्यं नञ्तत्पुरुषस्येति प्रवादस्सङ्गच्छते। अत एव च 'अतस्मै ब्राह्मणाय' 'असः शिव' इत्यादौ सर्वनामकार्यम्। अन्यथा गौणत्वान्न स्यात्। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति 'पर्युदासः सदृशग्राही' इति प्रवादः। "पर्युदासे निषेधस्त्वार्थः। अन्यस्मिन्नन्यधर्मारोपस्तु आहार्य्यज्ञानरूपः। बाधकालिकमिच्छाजन्यं ज्ञानमेवाहार्य्यमिति वृद्धाः। सादृश्यादयस्तु प्रयोगोपाधयः, पर्य्युदासे त्वार्थिकार्थाः। तदुक्तं हरिणा—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥ इति।

तत्सादृश्यं गर्दभेऽनश्वोऽयमित्यादौ। अभावस्तु प्रसज्यप्रतिषेधे वक्ष्यते। तदन्यत्वम् अमनुष्यं प्राणिनमानयेत्यादौ, तदल्पत्वम् अनुदरा कन्या इत्यत्र, अर्थात्स्थूलत्वनिषेधेनोदरस्याल्पत्वं गम्यते। अप्राशस्त्यं ब्राह्मणे अब्राह्मणोऽयमिति प्रयोगे। विरोधः असुरः अधर्म इति प्रयोगे।

नञो भेदकत्वमिति वदतां तार्किकाणां मतं खण्डयितुमुपक्रमते नञ् द्विविध इति। तार्किका हि पर्युदासस्य लक्षणं केनाप्युक्तम्—नञर्थो द्विविधः। भेदः संसर्गाभावश्च। तत्र समासघटको नञ् भेदबोधकः। तदितरस्तु संसर्गाभावबोधकः। अतएव अघटं पश्यतीत्यस्य घटभिन्नं पश्यतीति बोधः, घटो नास्तीत्यस्य घटत्वावच्छिन्न-प्रतियोगिताभावः सत्ताकावानिति च बोधः समुपपद्येते'त्याहुः।

स्वमतं प्रकटयति-नञ् द्विविध इति। एतन्मते नञ् द्विविधः—पर्युदासः, प्रसज्यप्रतिषेधश्च।

अत एवोक्तम्—

द्वौ नञौ हि समाख्यातौ पर्युदासप्रसज्यकौ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥ इति।

तत्र पर्युदासो नञ् आरोपविषयकः। अतएव—

'आरोपितत्वं नञ्द्योत्वं नह्यसोऽप्यतिसर्ववत्', इत्युक्तिः संगच्छते।

आरोपिविषयत्वस्य लक्षणं वदति—

आरोपविषयत्वञ्चेति। नञा समभिव्याहृतानि यानि पदानि तेषामारोपितं यत् प्रवृत्तिनिमित्तं तद्बोधकत्वे तात्पर्यग्राहकत्वम्। तथाच—स्वसमभिव्याहृतपदार्थतावच्छेदको धर्मस्तद्धर्मिकारोपविषयत्व-प्रकारकज्ञान-सहकारित्वं पर्युदासत्वमिति लक्षणं बोध्यम्।

यथा 'सिंहो माणवक' इत्यादौ माणवकादिपदानि सिंहादिपदस्यारोपित-सिंहत्ववद्बोधकत्वे तात्पर्यग्राहकाणि तथा 'अनुदरा कन्या' इत्यादौ अत्यल्पत्वेन उदराभावमारोप्य नञ्समभिव्याहारे आरोपितोदरबुद्ध्या तन्मूलाल्पत्वादौ तात्पर्यग्राहकमनुदरेति पदम्। अद्विज इत्यादौ च तद्भेदमूलकमारोपितप्रवृत्तिनिमित्तकत्वमिति भेदे विश्रान्त्या तात्पर्यग्राहकम्, अद्विज इति पदम्।

प्रवृत्तिनिमित्तमिति। प्रवृत्तिनिमित्तलक्षणन्तु—पक्षधरमिश्रेण स्वकीयप्रकाशग्रन्थे इत्थमभिहितम्—

'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीय-प्रकारताश्रयत्वम् इति। एतल्लक्षणे वाच्यत्वनिवेशात् आकाशपदाप्रवृत्तिनिमित्ते आकाशपदजन्योपस्थितीयप्रकारतावति शब्दाश्रयत्वे नातिव्याप्तिः। गवादिपदवाच्यावयवसंयोग-विशेषरूपाकृतावतिव्याप्तिवारणाय लक्षणे वाच्यवृत्तित्वनिवेशः। आधाराधेयभाव-सम्बन्धेन हर्यादिपदवाच्याश्ववृत्ति हर्यादिपदवाच्येन्द्रादावतिव्याप्तिवारणाय लक्षणे वाच्योपस्थितीयप्रकारताश्रयत्वनिवेशः। परमेतल्लक्षणे पुंस्त्वत्वादौ वाच्यत्वादित्रयस्य सत्त्वादतिव्याप्तिरतः प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम्।

वैशिष्ट्यञ्च—स्ववाच्यत्व-स्ववाच्यवृत्तित्व-स्वजन्य शाब्दबोधीयमुख्यविशेष्यता

समानाधिकरणोपस्थितीय-विशेष्यता-निरूपित-प्रकारताश्रयत्वैतत्-त्रितय-सम्बन्धेन बोध्यम्। एवञ्च पुंस्त्वादिलिङ्ग-निष्ठविशेष्यतायाः प्रातिपदिकजन्यबोधीयमुख्यविशेष्यतासमानाधिकरणत्वाभावान्नातिव्याप्तिः।

परमेतल्लक्षणेऽपि लोमवल्लाङ्गूलावच्छिन्न-वाचकपशुपदप्रवृत्तिनिमित्तलोमत्वादौ, एव पदार्थप्रवृत्तिनिमित्तभेदत्वादौ चाव्याप्तिरतो निष्कृष्टं लक्षणमेतत्—

'स्वनिष्ठशक्तिज्ञानाधीनोपस्थिति - प्रयोज्य - शाब्दबोधीयप्रकारताश्रयत्व - स्वप्रयोज्यधर्मिता-निरूपिता-पदार्थसम्बन्धावच्छिन्ना पदार्थान्तनिष्ठ-प्रकारता-निरूपित-विशेष्यत्वाभाववती च या प्रकारता तदभाववत्त्वमेतदुभयसम्बन्धेन प्रातिपदिक-विशिष्टत्वं प्रवृत्तिनिमित्तत्वम्' इति।

अब्राह्मण इति। अब्राह्मण इत्यत्र नञर्थं आरोपविषयत्वम्। तस्य च उत्तरपदार्थे ब्राह्मणेऽन्वयः। आरोपश्च-प्रत्यासत्त्या प्रवृत्तिनिमित्त-प्रकारक एव गृह्यते। तथाच— आरोपविषयत्ववान् ब्राह्मण इति बोधः पर्यवस्यति।

अत एव = नञ् आरोपितार्थद्योतकत्वादेव। अन्यथा गौणत्वान्न स्यादिति। नञर्थस्य भिन्नार्थवाचकत्वे तस्य च विशेष्यत्वात् इतरपदार्थनिष्ठ-विशेष्यता-निरूपित-प्रकारतावच्छेदकताप्रयोजकत्वरूपगौणत्वं तच्छब्दादीनां स्यात्। तेन सर्वनामकार्यं न भवेदिति भावः।

बाधकालिकमिति। यथा घटे पटत्वं नास्तीति निश्चयदशायामपि इच्छयाऽयं पट इति यज्ज्ञानं तदाहार्यम्। तार्किकाणां मते अयमेव भ्रम उच्यते। तेषां मते तद्धर्माभाववन्निष्ठ-विशेष्यता-निरूपिततद्धर्म-निष्ठप्रकारता-निरूपकज्ञानस्यैव भ्रमत्वात्।

नञर्थानां षड्विधत्वं ह्युक्तं निर्दिशति—तत्सादृश्यमिति। तत्सादृश्यस्योदाहरणम्—अनश्वोऽयं गदर्भ इति। अनश्व इत्यस्यारोपिताश्वत्ववान् इत्यर्थः। अत्र सादृश्यमूलकोऽश्वत्वारोपः। अभावस्योदाहरणं घटो नास्तीत्यादि। तदन्यत्वस्योदाहरणम्—अमनुष्यं प्राणिनमिति। मनुष्यभिन्नमित्यर्थः। तदल्पत्वस्योदाहरणम्—अनुदरा कन्येति। अन अल्पमुदरं यस्याः सेति विग्रहः। अत्राल्पत्वमुदरान्वयि। तथा च अल्पत्वविशिष्टोदरवती कन्येति बोधः

अप्राशस्त्यस्योदाहरणम्—अब्राह्मणोऽयमिति। अप्रशस्तो ब्राह्मणः, निषिद्धो वा ब्राह्मण इति बोधः।

विरोधस्योदाहरणम्—असुर इति सुरविरुद्ध इति। विरोधश्चात्र क्रूरक्रियात्वेन। अधर्मः = धर्मविरुद्ध इति।

एषु षड्विधेषूदाहरणेषु पर्युदासविषयता ज्ञेयेति शम्!

हिन्दी—नञ् दो प्रकार के होते हैं। एक पर्युदास, दूसरा प्रसज्यप्रतिषेध। उनमें पर्युदास नञ् सदृशका बोधक है और प्रसज्य प्रतिषेध—नञ् निषेध का बोधक है।

पर्युदास नञ् आरोपविषय का द्योतक है। आरोप विषय वह है कि जो नञ् समभिव्याहृत घटादिपदों के आरोपित अर्थके बोध कराने में तात्पर्य ग्रहण कराने वाला है।

घट में घटत्व, ब्राह्मण में ब्राह्मणत्व आदि प्रवृत्ति निमित्त है। अब्राह्मण इत्यादि स्थलों में आरोपित ब्राह्मणत्ववाला क्षत्रियादि का बोध होता है।

इसीलिए नञ् तत्पुरुष में उत्तर पदार्थ की प्रधानता रहती है कहावत सङ्गत होती है।

इसीलिए 'अतस्मै ब्राह्मणाय' इसम तथा 'असः शिवः' इसमें सर्वनामकार्य होता है नहीं तो गौण होने के कारण नहीं होगा।

प्रवृत्ति निमित्त का आरोप तो सदृश ही में होता है इसलिए 'पर्युदासः सदृग् ग्राही' यह प्रवाद है। पर्युदास में निषेध की झलक तो आर्थ है अर्थात् अर्थ के द्वारा मालूम पड़ती है।

दूसरे में दूसरे धर्मों का आरोप तो आहार्यज्ञान अर्थात् भ्रमरूप है। बहुत लोगों ने तो बाधकाल में इच्छा से उत्पन्न ज्ञान ही को आहार्यज्ञान कहा है। सादृश्य आदि तो प्रयोग की उपाधि है। पर्युदास में तो आर्थिक अर्थात् अर्थलभ्य अर्थ हैं।

जैसा कि हरि ने—नञर्थ छः प्रकार का कहा है—तत्सादृश्य, तदभाव, तदन्यत्व, तदल्पत्व, अप्राशस्त्य, विरोध। तत्सादृश्य का—उदाहरण—अनश्वोऽयं गर्दभः है अर्थात् अश्व के समान गदहा है।

तदभाव का उदाहरण—प्रसज्य प्रतिषेध नञ् के वर्णन में कहा जायगा।

तदन्यत्व का उदाहरण—'अमनुष्यं प्राणिनम् आनय' है अर्थात् मनुष्य भिन्न प्राणी को लाओ यह बोध होता है।

तदल्पत्व का उदाहरण—'अनुदरा कन्या' है इसलिए 'कृशोदरी का कन्या है' यह बोध होता है। यहाँ मूलत्व के निषेध से उदर के अल्पत्व का बोध होता है।

अप्राशस्त्य का उदाहरण—ब्राह्मण में अब्राह्मणोऽयम् है इसलिए 'यह अप्रशस्त ब्राह्मण है' यह अर्थ होता है।

विरोध का उदाहरण—असुरः, अधर्मः, है। इसलिए सुरविरुद्ध, धर्मविरुद्ध यह अर्थ होता है।

'पर्य्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात्समस्त एव (प्रायः[1])। क्वचित्तु "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ घटः अपटो भवतीत्यर्थके घटो न पट इत्यादौ च समासविकल्पादसमासेऽपि। अत्रान्योन्याभावः फलितो भवति। प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः तत्र

---

१. एतन्मध्यस्थः पाठो बहुषु नास्ति।

विशेष्यतया क्रियान्वयनियमात् सुबन्तेनासामर्थ्येऽपि 'असूर्यललाटयोः' इत्यादि-ज्ञापकात् समासः। तदुक्तम्—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्। इति।

अत्र क्रियापदं गुणस्याप्युपलक्षणमिति बहवः। अत एव नञ्सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुत" इत्युक्तम्। उदाहरणम्—नास्माकमेकं प्रियमिति। एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः। एवं 'न सन्देहः, नोपलब्धिः' इत्याद्युदाहरणं गुणस्य। सन्देहादीनां गुणत्वात्। क्रियोदाहरणम्—'अनचि च' 'गेहे घटो नास्ति' इत्यादि। तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः। असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च। तादात्म्येतरसम्बन्धाभावोऽत्यन्ताभावः। तादात्म्यसम्बन्धाभावोऽन्योन्याभावो भेद इत्यर्थः। 'असूर्यम्पश्या राजदाराः, गेहे घटो नास्ति, घटो न पटः' इत्युदाहरणानि। प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ।

तत्रात्यन्ताभावो विशेष्यता तिङन्तार्थक्रियान्वय्येव। [1]नञर्थात्यन्ताभावविशेष्यकबोधे तिङसमभिव्याहृतधातुजन्योपस्थितेः कारणत्वात्। तथा च घटो नास्तीत्यादौ घटकर्तृकसत्ताप्रतियोगिकोऽभाव इति बोधः। अत एवाहं नास्मि त्वं नासीत्यादौ घटौ न स्तो घटा न सन्तीत्यादौ च पुरुषवचनव्यवस्थोपपद्यते। अन्यथा युष्मदादेस्तिङ्सामानाधिकरण्याभावात् मदभावोऽस्तीत्यादाविव सा न स्यात्। असंदेह इत्यादौ तु आरोपितार्थकनञैव समासः। अत्यन्ताभावस्तु फलित एव। वायौ रूपं नास्तीत्यत्र तु [2]तात्पर्यानुपपत्त्या-रूपप्रतियोगिकात्यन्ताभावे लक्षणा। तेन वाय्वधिकरणिका रूपाभावकर्तृका सत्तेति बोधः।

---

१. प्रकारतासम्बन्धेनेति शेषः। कारणतावच्छेदकश्च विशेष्यतासम्बन्धो बोध्यः एतादृशकार्यकारणभावाङ्गीकारणैव घटो न जायते इत्यादौ घटोत्पत्त्यभावादिः प्रतीयते, न तु तदभावोत्पत्त्यादिः। एवं च अनुगतरूपेण कार्यकारणभावकल्पने लाघवात् सर्वत्रैव तथा बोधोऽङ्गीकार्यः।

न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे॥

इत्यत्र तु प्रत्येकं भवतीत्यस्य, भवन्तीत्यत्र च एतेनेत्यस्याध्याहारेण अन्वय उपपादनीयः। एवमन्यत्रापि बोध्यम्।

२. रूपाभावस्यैव बोधविषयत्वेन तात्पर्यविषयत्वादिति भावः।

पर्युदास-प्रसज्यप्रतिषेधयोर्विषयभेदं प्रदर्शयितुमुपक्रमते—पर्युदासस्त्विति। यत्र विधेः प्राधान्यं, प्रतिषेधस्य चाप्राधान्यमुत्तरपदेन साकं नञः स्थितिस्तत्र पर्युदासः। एवञ्च समस्त एव पर्युदासस्य विषय इति फलितो भवति।

तदुक्तम्—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥ इति।

प्रसज्यप्रतिषेधस्त्विति। प्रतिषेधशब्दस्तु कर्मघञन्तो बाहुलकात्। प्रसज्य आपा[द्य] प्रतिषेधः प्रतियोगी यस्य तादृशोऽभावोऽर्थो यस्येति व्युत्पत्त्याऽभावार्थकः।

एवञ्च यत्र किल विधेरप्राधान्यं प्रतिषेधस्य च प्रधान्यं क्रियया सह नञः स्थितिस्त[त्र] प्रसज्यप्रतिषेधः।

तथा च समस्तेऽसमस्ते चास्य विषय इति फलितो भवति।

तदुक्तम्—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥" इति।

क्रियान्वय्यभावप्रतिपादकोऽयमिति भावः। नञ्सूत्रस्थस्य "प्रसज्यायं क्रियागु[णौ] ततः पश्चान्निवृत्तिं कुरुते" इतिभाष्यस्याप्ययमभिप्रायः—

"क्रियाभिगुणैश्च कार्यं प्रापय्य निषेधवाक्येन तत्कार्याभावो बोध्यते" इति।

यथा "सुडनपुंसकस्य" इति सूत्रेऽनपुंसकस्येति वाक्यं लिङ्गत्रयेऽपि सुडिति[ले] प्राप्तां संज्ञां नपुंसके निषेधयति। यथा च "अनचि" इतिवाक्यं चेतिवाक्येन प्राप्[तं] अचः परस्य यरो द्वित्वमचि परे निषेधयति तथा वायं नञ् क्रियाभिगुणैश्च प्राप्[त] कार्य्यस्य निषेधक इति तात्पर्यम्।

समस्तनञोऽत्यन्ताभावस्योदाहरणम्—असूर्यंपश्या राजदारा इति। सूर्यकर्मकदर्श[न] प्रतियोगिकाभाववन्तो राजदारा इत्यर्थः।

असमस्तनञोऽत्यन्ताभावस्योदाहरणम्—गेहे घटो नास्तीति। अत एव घटकर्तृ[क] सत्ताभावो गृहवृत्तिरिति बोधः।

असमस्तनञोऽन्योन्याभावस्योदाहरणम्—घटो न पटः इति। अत एव घटप्रतियो[गि] गिकभेदवान् पट इति बोधः।

प्रागभाव-प्रध्वंसाभावयोर्नञ्द्योत्याभावं दर्शयति—प्रागभावेति। तत्रात्यन्ताभाव[स्य] विशेष्यतया तिङन्तार्थक्रियान्वयित्वेनैव घटो नास्तीत्यत्र घटकर्तृकसत्ताप्रतियोगिका[भा] भाव इति बोधः समुपपद्यते।

अत एव=अत्यन्ताभावस्य विशेष्यतया तिङन्तार्थक्रियान्वयित्वादेव। घटो नास्[ती] त्यत्र घटाभिन्नैकाश्रयवृत्ति-सत्तात्वावच्छिन्न-प्रकारतानिरूपिता-भावत्वावच्छिन्न-विशे[ष्य]

ताशालिबोधे तिङर्थकर्तुरभेदेनान्वयात् तिङर्थाश्रय-वृत्त्येकत्वस्य गम्यत्वात् प्रथमैकवचनं प्रथमपुरुषः ।

तथाऽहं नास्मीत्यत्र मदभिन्नैकाश्रयवृत्तिसत्ताभाव इति बोधे तिङर्थकर्तुरस्मदर्थेऽन्वयादुत्तमपुरुषः ।

एवं त्वं नासीत्यत्र त्वदभिन्नैकाश्रयवृत्तिसत्ताभाव इतिबोधे तिङर्थकर्तुर्युष्मदर्थेऽन्वयात् तिङ्वाच्यकारकवाचित्वस्य युष्मच्छब्दे सत्त्वेन मध्यमपुरुषश्च समुपपद्यते इत्यवधेयम् ।

अन्यथा = अत्यन्ताभावस्य विशेष्यतया तिङन्तार्थ-क्रियान्वयित्वाभावस्वीकारे तु सा = पुरुषव्यवस्था न स्यादिति बोध्यम् ।

नन्वेवं वैयाकरणाभिप्रेतस्य भावनामुख्यविशेष्यकशाब्दबोधस्य का गतिरिति चेन्न भावप्रधानमाख्यातमिति यास्कवचनस्य नञ्समभिव्याहृतेतराख्यातविषयत्वस्य फलबलेन स्वीकारात् । अन्यथा त्वन्मते घटो नास्तीत्यतः घटत्वावच्छिन्नप्रतियोगिताकाभावकर्तृका सत्तेतिबोधाङ्गीकारात् सर्वत्र प्रथमान्तार्थ-प्राधान्यं कथन्न प्रलयं प्राप्नुयात् ।

एवञ्च—'यश्चोभयोः समो दोषः परिहारस्तयोः समः' इति न्यायेन न कापि क्षतिरिति बोध्यम् ।

हिन्दी—अब पर्युदास और प्रसज्य प्रतिषेध का विषय विभाग दिखाते हैं कि—पर्युदास नञ् स्वघटितपदों के साथ सामर्थ्यवश्य समस्त ही में प्रायः रहता है ।

प्रसज्यप्रतिषेधतो—समस्त असमस्त दोनों में रहता है । उनमें विशेष्यतया क्रिया ही में अन्वय होने के नियम से असामर्थ्य में भी 'असूर्यललाटयोः' इत्यादिज्ञापक से समास होता है ।

वैसा कहा भी है—

'क्रिया के साथ जहाँ नञ् रहता है वहाँ प्रसज्यप्रतिषेध होता है ।'

यहाँ क्रियापद गुण का भी बोधक है 'ऐसा बहुत लोग कहते हैं ।

इसीलिए नञ् सूत्र के भाष्य में कहा है कि—

'प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुते' अर्थात् पहले क्रिया और गुणों के साथ प्रसक्त होकर बाद निवृत्ति करता है ।'

इसका उदाहरण—'नास्माकमेन्द्रं प्रियम्' यह है । यहाँ एक प्रिय के प्रतिषेध में बहुप्रिय की प्रतीति होती है । इसी प्रकार 'न सन्देहः' नोपलब्धिः' ये तीनों उदाहरण गुण का है' क्योंकि सन्देहादि गुणपदार्थ हैं ।

क्रिया का उदाहरण—'अनचिन्त्वं' 'गेहे घटो नास्ति' इत्यादि है ।

उस समस्त नञ् का अत्यन्ताभाव अर्थ होता है । असमस्त नञ् के दो अर्थ होते हैं । एक अत्यन्ताभाव दूसरा अन्योन्याभाव ।

तादात्म्य (अभेद) सम्बन्ध से इतर सम्बन्ध का अभाव ही अत्यन्ताभाव कहाता है। तादात्म्य सम्बन्ध जिसमें नहीं हो वह अन्योन्याभाव कहलाता है अर्थात् भेद हुआ होता है।

उनमें समस्त नञ् विषयक प्रसज्यप्रतिषेध का उदाहरण—'असूर्यं पश्या राजदारा' यह है अर्थात् राजदारा महल में रहती हैं जो सूर्य को भी देखने नहीं पाती हैं।

असमस्त अत्यन्ताभाव का उदाहरण—'गेहे घटो नास्ति' यह है अर्थात् घर में घड़े का बिलकुल अभाव है।

असमस्त अन्योन्याभाव का उदाहरण—'घटो न पटः' यह है अर्थात् जब घट नहीं है तो पट भी नहीं है।

प्रागभाव और प्रध्वंसाभाव नञ् द्योत्य नहीं है क्योंकि 'नञर्थ अत्यन्ताभाव विशेष्यक शाब्दबोध में तिङ्युक्त धातुजन्य उपस्थिति ही कारण है' इसलिए अत्यन्ताभाव का उसमें विशेष्यतया तिङन्तार्थं क्रिया ही के साथ अन्वय होता है अतः 'घटो नास्ति' इत्यादि स्थलों में घट कर्तृकसत्ता का प्रतियोगी अभाव है अर्थात् 'घड़ा है ही नहीं' यह बोध होता है।

इसीलिए 'अहं नास्ति' मैं नहीं हूँ, 'त्वं नासि' तुम नहीं हो इत्यादि स्थलों में तथा 'घटौ न स्तः' दो घड़े नहीं हैं, 'घटा न सन्ति', घड़े नहीं हैं, इत्यादि स्थलों में पुरुष और वचन की व्यवस्था होने पाती है अन्यथा युष्मद् अस्मद् के तिङ् के साथ सामानाधिकरण्य (ऐक्य) नहीं रहने से 'मदभावोऽस्ति' इसकी तरह पुरुष वचन व्यवस्था नहीं हो पायगी।

'असन्देहः' इत्यादि स्थलों में तो आरोपितार्थक नञ् ही के साथ समास होता है इसलिए अत्यन्ताभाव स्वतः फलित ही है।

'वायौ रूपं नास्ति' अर्थात् वायु में रूप नहीं होता है यहाँ तो तात्पर्य नहीं लगने से रूपप्रतियोगिक अत्यन्ताभाव में लक्षणा की जाती है इसलिए 'वायु में रूप का अभाव' यह बोध होता है।

वस्तुतस्तु समनियतताभावैक्यमाश्रित्य [1]फलितार्थं एवायम्। [2]रूपमस्तीत्यर्थकं वा तत्। एतेनात्यन्ताभावप्रकारकक्रियाविशेष्यको बोध इति तार्किकोक्तमपास्तम्।

---

१. रूपसत्ताऽभावविषयके शाब्दबोधे जाते तत्समनियतो रूपाभावोऽर्थादेव प्रतीयते इति भावः।

२. अब्राह्मण इत्यादाविव आरोपितरूपस्ववान् यो वायुवृत्तिस्तत्कर्तृका सत्तेति शाब्दबोधः। तदभावबोधश्चात्रापि आर्थं एवेति बोध्यम्।

नन्वेवं घटसत्तारूपोऽर्थः प्रथमं बुद्धौ नञा निवर्तयितुमशक्तः, सतो निषेधायोगात्, असतस्त्वसत्त्वादेव निवृत्तिसिद्ध्या निषेधो व्यर्थः। तदुक्तम्—

**सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।**
**जगत्यनेन न्यायेन नञर्थः प्रलयं गतः॥**

इति चेत्, न। बौद्धो हि शब्दो वाचकः बौद्ध एवार्थो वाच्य इत्युक्तत्वात्, बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधात्। बुद्धौ सन्नपि घटो बहिर्नास्तीत्यर्थात्। न च घटास्तिपदाभ्यां या घटविषयाऽस्तिबुद्धिर्जाता सा नञा निवर्त्यते किं बौद्धार्थस्वीकारेणेति वाच्यम्। बुद्धेश्शब्दावाच्यत्वेन नञा तन्निषेधायोगात्। एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पनां कुर्वन्तस्तार्किकाः परास्ताः।

यथार्थ्यं वर्णयति—वस्तुतास्त्वति। समनियतेति।

समनियतत्वस्य लक्षणञ्च—स्वाधिकरणवृत्त्यन्ताभावा-प्रतियोगित्वे सति स्वाभाववदवृत्तित्वं समनियतत्वम् एवञ्च रूपसत्ताभावविषयके शाब्दबोधे जाते तत्समनियतो रूपाभावोऽर्थादेव प्रतीयत इति तत्त्वम्।

पुनः शङ्क्यते तार्किकैः—नन्वेवमिति। नासतोविद्यतेऽभावो नाभावो विद्यते सतः' इत्यनुसारि सत्कार्यवादिमतमनुसृत्य तार्किकाणां शङ्काया अवसरः।

बुद्धौ सन्नपीति। विषयतासम्बन्धेन तत्र विद्यमानोऽपीत्यर्थः।

बुद्धेः शब्दावाच्यत्वेनेति। बुद्धिरेव यद्यपि प्रतिबध्या प्रतिबन्धिका च तथाप्यभावस्य प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगित्वनियमेन बुद्धेर्निषेधेऽपि अभावकाले तत्सत्ताप्रसङ्गोऽपि स्यात्। नहि तदभावकाले तत्कार्यं कर्तुमर्हति कश्चित्।

तथा ज्ञानस्यापि विषयस्वरूपतयैवाभिलाषो भवितुमर्हति इति तस्यापि शब्दार्थद्वारैव गम्यत्वेन विषयनिषेधेनैव तस्यापि निषेधः पर्यवस्यतीति सारम्।

परास्ता इति। कथमन्यथा शशश्रृङ्गादिपदानां प्रातिपदिकसंज्ञा स्यात्। बाह्यपदार्थाभावेनार्थवत्त्वाभावात् इति तैरेवावधेयम्।

हिन्दी—यथार्थ में तो समनियताभाव का ऐक्य मानकर अर्थात् रूपसत्ता का जब अभाव विषयक शाब्दबोध हो जायगा तो उसके समनियत रूपाभाव भी स्वतः प्रतीत होगा इसलिए फलितार्थ ही निकल आता है लक्षणा मानने की कोई आवश्यकता नहीं।

समनियत उसी को कहते हैं कि—अपने में जब अत्यन्ताभाव हो तो तब अपने से इतर अधिकरण में भी जो नहीं रहे या वायु में रूप नहीं है इत्यर्थपरक 'वायौ रूपं नास्ति' यह वाक्य है।

इससे 'अत्यन्ताभाव प्रकारक क्रिया विशेष्यक शाब्दबोध होता है' यह तार्किकों का कथन निर्मूल प्रतीत होता है।

तब किसी ने यह सन्देह किया कि—घट का रहना अर्थ जब बुद्धि में निश्चित हो गया तो उसे नञ् किस प्रकार हटा सकता है। क्योंकि 'नासतो विद्यते भाव:, नाभावो विद्यते सत:' इस मत के अनुसार विद्यमान पदार्थ का निषेध तथा अविद्यमान पदार्थ होना सर्वथा नियम विरुद्ध है तो निषेध ही व्यर्थ है।

'सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।
जगत्यनेन न्यायेन नञर्थ: प्रलयं गत: ॥'

अर्थात् विद्यमान का निषेध नहीं होता, और अविद्यमान में निषेध ही कैसा! इस न्याय से संसार में नञर्थका प्रलय हो गया।

लेकिन यह शङ्का ठीक नहीं क्योंकि बौद्ध ही शब्दवाचक होते हैं और बौद्ध ही अर्थवाच्य होता है यह पहले कहा जा चुका है। क्योंकि बुद्धि में वर्तमान पदार्थ का भी नञ् से बाह्यसत्ता का निषेध होता है। बुद्धि में वर्तमान घट का भी बाहर नहीं है यह बोध होता है।

तब किसी ने यह कहा कि—घट, और अस्ति पद से जब घटविषयक ज्ञान हो गया तो नञ् से हटाया जा सकता है तो बौद्धार्थ मानने की क्या जरूरत है!

तो यह भी कहना ठीक नहीं क्योंकि जब बुद्धि अर्थात् ज्ञान शब्दों के द्वारा वाच्य नहीं है तो उसका निषेध नञ् द्वारा किस प्रकार हो सकता है!

इसलिए बौद्धार्थ नहीं मानने वाले तथा नञर्थ बोध के लिए क्लिष्ट कल्पना करने वाले तार्किक परास्त हो गये।

घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिकभेदाश्रये अप्रसिद्धा शक्तिरेव लक्षणा, नञ्पदं तात्पर्य्यग्राहकम्। तात्पर्य्यग्राहकत्वं द्योकत्वमेवेत्युक्तम्। अत एवान्योन्याभावबोधे प्रतियोग्यनुयोगिपदयो: समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते।

यत्तु घटपदं पटप्रतियोगिके लाक्षणिकं नञ्पदं तु भेदवति, अतो घटप्रतियोगिकभेदवान् पट इति बोध इति तार्किकैरुक्तम्। तन्न। भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः। 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायात्। पदद्वये लक्षणास्वीकारे गौरवाच्च। भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावादिति संक्षेपः।

घटो न पट इत्यत्रेति। अन्यथा तार्किकमते नञो भेदवाचकतया घटस्य प्रतियोगितया भेदे, तस्य चाश्रयतया पटेऽन्वये घटपदस्य तिङ्सामानाधिकरण्याभावात् प्रथमानापत्तिरित्यवधेयम्।

अतएव=अप्रसिद्धायाः शक्तिरूपाया एव लक्षणायाः स्वीकारादेव।

समानविभक्तिकत्वमिति। समानविभक्तिकत्वमेकविभक्तिकत्वम्। समानविभक्तिकत्वञ्च—स्वाव्यवहितोत्तरत्वसम्बन्धेनाधिगम्यमान-विभक्तिवृत्ति-विभक्तिविभाजकधर्मवद्विभक्तव्यवहितपूर्वत्वेनाधिगम्यम्।

विभक्तिविभाजकत्वञ्च स्वव्याप्यत्व-स्वव्याप्याव्याप्यत्व-स्वभिन्नत्वैतत्-त्रितयसम्बन्धेन विभक्तिविशिष्टत्वम्।

विभक्तिविभाजकत्वधर्मो हि प्रथमात्वादिरेव। नतु सुप्त्वम्, औत्वादिकं वा। तस्य विभक्तित्वव्याप्यप्रथमात्वव्याप्यत्वात्। विभक्तित्वमपि न तथा। स्वभिन्नत्वाभावात् इति लक्षणसमन्वयः।

तार्किकाणामपरामपि युक्तिं खण्डयितुमुपक्रमते—यत्त्वित्यादिना। घटप्रतियोगिकस्य घटपदार्थस्य नञर्थैकदेशे भेदेऽभेदेनान्वय इति हि तार्किकाणां तात्पर्यम्।

तन्मतं खण्डयति—तन्नेति। अयम्भावः—पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायेन नञर्थो भेदवान् तत्र भेदस्यैकदेशत्वात् घटपदार्थस्यान्वयो न स्यात्। 'पदाप्रयोज्य-सांसर्गिक-विषयताभिन्न-विषयता-सम्बन्धेन शाब्दबोधे मुख्यविशेष्यतया उपस्थितिः कारणम्' इति कार्यकारणभावस्यैवोक्तन्यायमूलकत्वात्।

ननु प्रोक्तन्यायस्वीकारे 'देवदत्तस्य गुरुकुलम्' इत्यत्र नित्य-साकाङ्क्षस्थले देवदत्तनिरूपितगुरुत्ववत्कुलमिति बोधो न स्यादित्यरुचेराह—पदद्वये इति। निपातानां वाचकत्वस्येति।

निपातार्थविषयकमत्र पक्षत्रयं विद्यते—

प्रजयतीत्यत्र प्रकर्षादीनां निपातार्थानां केवलधातुतोऽप्रतीत्या उपसर्गसम्बन्धात्तद्बोध इति उपसर्गाणां द्योतकत्वमेवेति प्रथमः पक्षः। अत एव प्रजयतीत्यत्र प्रशब्दस्य प्रकृष्टजयद्योतकत्वम्। अत्र पक्षे मानञ्च—

'क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः।
उपसर्गेण सम्बन्धे व्यज्यते प्रपरादिना॥' इति

हरिकारिकैव।

'प्रतिष्ठते' इत्यादौ स्थाधातोर्गतिनिवृत्ति-वाचकत्वेन उपसर्गाणां वाचकत्वमपीति द्वितीयः पक्षः। अत एवात्र गतिवाचकत्वं प्रशब्दस्य सिद्ध्यति। अत्रापि मानञ्च—

'सवाचको विशेषाणां सम्भवाद्द्योतकोऽपि वा' इति हरिकारिकैव।

सम्भूय धातूपसर्गौ अर्थं वदतः, उपसर्गस्तु शक्तिमात्रं विदधाति इत्यर्थाभिधाने उपसर्गाणां सहकारित्वमिति तृतीयः पक्षः। अत्रापि मानम्—

'शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते'

इति वाक्यपदीयवचनमेव।

परं पक्षत्रयेऽपि उपसर्गाणां द्योतकत्वमेवेति पक्ष एव ज्यायान्। धातूनामनेकार्थत्वेन 'प्रतिष्ठते' इत्यत्र स्थाधातोरेव गत्यर्थबोधकत्वात्।

अत एवोक्तम्–

'स्यादिभिः केवलैर्यत्र गमनादिर्न गम्यते ।
तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते ॥' इति

तथा चादिनिपातेष्वपि पक्षत्रयम्–

तदुक्तं हरिणा–

'निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥' इति

एतत्पक्षत्रयेऽपि द्योतकत्वपक्ष एव न्याय्यः । केवलानां चादीनामप्रयोगात् ।

तदुक्तं वाक्यपदीये–

'चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ॥' इति

एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति निश्चप्रचम् ।

हिन्दी—'घटो न पटः' यहाँ पर घटपदार्थ के घटप्रतियोगिक भेदाश्रय में अप्रसिद्ध शक्तिरूप ही लक्षणा है । वहाँ नञ्पद केवल तात्पर्य को ग्रहण करने वाला है । तात्पर्य ग्राहक अर्थात् द्योतक ही है । यह कहा जा चुका है ।

इसलिए 'अन्योन्याभाव बोध में प्रतियोगी तथा अनुयोगी पद के समानविभक्तित्व अर्थात् एकविभक्तित्व नियामक है' यह वृद्धों का कथन सङ्गत होता है ।

पुनः तार्किकों ने जो यह कहा है कि—घटपद घटप्रतियोगिक में लाक्षणिक है, और नञ् पद भेदवान् में लाक्षणिक है इसलिए 'घटप्रतियोगिक भेद वाला घट है' यह बोध होता है ।

किन्तु यह कहना ठीक नहीं । क्योंकि 'पदार्थ पदार्थ के साथ अन्वित होता है पदार्थ के एक देश के साथ नहीं' इस व्युत्पत्ति के अनुसार नञर्थ भेदाश्रय के एक देश भेद के भेद में घटपदार्थ का अन्वय नहीं होने पायगा । तथा दोनों पदों में लक्षणा माननेमें गौरव हो जायगा । भाष्यकार ने लक्षणा और निपातों का वाचकत्व दोनों को स्वीकार नहीं किया है यह संक्षिप्त सारांश है ।

एवशब्दस्यार्थोऽवधारणमसम्भवश्च । 'एवे चानियोगे' इतिवार्तिके नियोगोऽवधारणं तदभावोऽसम्भव इति कैयटोक्तेः । अनयोरर्थयोरेवशब्दो द्योतकः । अतएव तं विनापि तदर्थप्रतीतिः, 'सर्वं वाक्यं सावधारणम्' इति वृद्धोक्तं सङ्गच्छते । लवणमेवासौ भुङ्क्ते इत्यादौ प्राचुर्यार्थकस्य, घट एव प्रसिद्ध इत्यादावप्यर्थकस्य, क्वेव भोक्ष्यसे इत्यादावसम्भवार्थकस्य च तस्य सत्त्वमित्यालङ्कारिकाः ।

एवशब्दार्थं विविनक्ति–एवशब्दस्येति। अनयोरर्थयोः=निश्चयासम्भवयोरित्यर्थः। अतएव=निपातानामपि द्योतकत्वादेव। वाचकत्वे तु अन्यत्रैव वाचकैवशब्दप्रयोगं विना तदर्थबोधो नैव स्यादिति तत्त्वम्। लवणमेवासौ भुंक्ते इत्यस्य प्रचुरं लवणमस्तीत्यर्थे पर्यवसानात् प्राचुर्यार्थकत्वम्। 'घट एव प्रसिद्धः' इत्यस्य घटोऽपि प्रसिद्ध इत्यर्थबोधात् अप्यर्थकत्वम्।

क्वेव मोक्ष्यसे इत्यादावसम्भवार्थकत्वे मानञ्च—

'अनवक्लृप्तौ यदा नष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्॥

इति प्रकृतवार्तिकसमुदायभाष्यमेव। तत्र वार्तिके नियोगशब्दो न व्यापारवचनः। 'तवैव ममैव' इत्यादावपि पररूपापत्तेः। एतत्सर्वं प्रौढमनोरमायां प्रपञ्चितम्।

हिन्दी—एव शब्द का अवधारण ( निश्चय ) और असम्भव है। 'एवेचानियोगे' इस वार्तिक के ऊपर "नियोग अवधारण है और उसका अभाव असम्भव है" यह कैयट ने कहा है। अर्थात् इन दोनों अर्थों के एव शब्द द्योतक है।

द्योतक है इसलिए 'एवशब्द के विना भी एवार्थ की प्रतीति होती है, क्योंकि सभी वाक्य साधारण हैं अर्थात् निश्चयात्मक हैं' ऐसा वृद्धों का कहा हुआ सङ्गत होता है। 'लवणमेवासौ भुङ्क्ते' यहाँ पर 'लवण ही ज्यादा खाता है' प्राचुर्यार्थ का द्योतक एव शब्द है।

'घट एव प्रसिद्धः', अर्थात् 'घट भी प्रसिद्ध है' यहाँ अप्यर्थ का द्योतक एव शब्द है।

'क्वेव मोक्ष्यसे' अर्थात् स्थलकी सङ्कीर्णता है 'कहाँ खाओगे' यहाँ पर असम्भव अर्थ का द्योतक एवशब्द है। ऐसा आलङ्कारिक लोगों का कहना है।

तच्चावधारणं त्रिविधम्। विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूपं, विशेषणसङ्गतैवकारेऽयोगव्यवच्छेदरूपं, क्रियासङ्गतैवकारेऽत्यन्तायोगव्यवच्छेदरूपम्।

विशेष्ये—पार्थ एव धनुर्धरः। पार्थेतरवृत्तियद्धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोधः इत्यन्यतरस्मिन् धनुर्धरत्वसम्बन्धव्यवच्छेदः।

विशेषणे—शङ्खः पाण्डुर एव। अयोगः सम्बन्धाभावः तस्य व्यवच्छेदो निवृत्तिः, द्वाभ्यां निषेधाभ्यां प्रकृतार्थदार्ढ्यं बोधनेनाव्यभिचरितपाण्डुरत्वगुणवान् शङ्खः इति बोध इत्ययोगव्यवच्छेदः। न तु नील इति हि फलति।

क्रियायां—नीलं सरोजं भवत्येव। अत्यन्तोऽतिशयितोऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदोऽभावः। तथा च कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं तत्कर्तृका सत्तेति बोधः कदाचिदन्यादृशगुणसंयुक्तमित्यपि गम्यते इत्यन्तायोगव्यवच्छेदः। क्वचिदेवशब्दं विनापि नियमप्रतीतिः।

तदुक्तं भाष्ये—अभक्ष्यो ग्राम्य कुक्कुट इत्युक्ते गम्यते एतत् आरण्यो भक्ष्य इति। 'सर्वं वाक्यं सावधारणम्' इति न्यायात्।

अवधारणस्य भेदान् प्रदर्शयति--तत्राधारणमिति। प्रथमं हि--विशेष्यसंगतैवकारे विशेष्यान्वय्यर्थद्योतकैवकारे अन्ययोगव्यवच्छेदरूपम्। अन्यस्मिन् योगस्य सम्बन्धस्य व्यवच्छेदः निवृत्तिस्तद्रूपम्।

द्वितीयं हि--विशेषणसंगतैवकारे विशेषणान्वय्यर्थद्योतकैवकारे अयोगव्यवच्छेद-रूपम्=अयोगः सम्बन्धाभावः तस्य व्यवच्छेदो निवृत्तिस्तद्रूपम्।

तृतीयं हि--क्रियासंगतैवकारे-क्रियान्वय्यर्थद्योतकैवकारे अत्यन्तायोगव्यवच्छेद-रूपम्=अत्यन्तोऽतिशयितोऽयोगः सम्बन्धाभावः तस्य व्यच्छेदः अभावस्तद्रूपम्।

प्रथमस्योदाहरणम्—"पार्थ एव धनुर्धरः' इति। पार्थत्वावच्छिन्नप्रतियोगिता-निरूपकभेदाश्रयवृत्तित्वाभाववद्धनुर्धरत्ववान् पार्थ इति शाब्दबोधः।

द्वितीयस्योदाहरणम्—'शङ्खः पाण्डुर एव' इति। पाण्डुरत्वाभाववद्वृत्तित्वाभा-ववच्छङ्खत्ववान् शङ्ख इति बोधः।

तृतीयस्योदाहरणम्—नीलं सरोजं भवत्येव इति। सामानाधिकरण्येन तदभा-वानधिकरणं यत्सरोजं नीलभवन-समभिव्याहृतं तत्प्रकारकेत्यर्थः। नीलाभिन्नसरो-जाभिन्नकर्तृकमवधारणविशेष्यं भवनमिति बोधः समुपपद्यते। तदुक्तं भाष्ये इति पस्पशाह्निके भाष्ये इत्यर्थः। गम्यत इति ग्राम्य एव कुक्कुटो भक्ष्यभिन्नतया प्रती-यते। तथाहि—भक्षणं नाम क्षुन्निवर्तको व्यापारविशेषः। क्षुन्निवृत्तिश्च रागतो ग्राम्यतदितरभक्षणेन च भवितुमर्हतीति प्रकृत-वाक्यं व्यर्थीभूय नियमयति--ग्राम्य एवाभक्ष्यः नारण्य इति। एवं 'पञ्च पञ्चनखा भक्ष्या' इत्यनेनापि उक्तदिशा भक्ष्यनियमेन अभक्ष्यप्रतिषेधसिद्ध्या शशकादिपञ्चकेतरपञ्चनखभक्षणाभावः फलतीति सारांशः।

हिन्दी—वह अवधारण तीन प्रकार के होते हैं--उनमें प्रथम भेद वह है जो विशेष्य के साथ एव रहकर दूसरों में सम्बन्ध की निवृत्ति कराता है। जैसे—'पार्थ एव धनुर्धर' अर्थात् 'अर्जुन ही धनुर्धारी है' इसलिए पार्थ अर्थात् अर्जुन से इतर में नहीं रहने वाला जो धनुर्द्धरत्व गुण है तद्गुण वाला अर्जुन है' यह बोध होता है।

दूसरा भेद वह है—जो विशेषण के साथ एव रहकर सम्बन्धाभाव की निवृत्ति कराता है। जैसे--'शङ्खः पाण्डुर एव' शङ्ख पाण्डुर गुण वाला ही है, यहाँ दो निषेध के द्वारा प्रस्तुत अर्थ की दृढ़ता का बोध होता है इसलिए 'दूसरों में नहीं रहने वाला जो पाण्डुरत्व गुण है उस गुण वाला ही शङ्ख है नील नहीं है यह बोध होता है।

तीसरा भेद वह है--जो क्रिया के साथ एवं रहकर अत्यन्त सम्बन्धाभाव का अभाव बोध कराता है। जैसे--'नीलं सरोजं भवत्येव' अर्थात् 'कमल नील होता ही

हैं' तो कभी नीलगुणवाला कमल होता है, कभी दूसरा गुण वाला भी कमल होता है यह भी प्रतीत होता है इसलिए यह अत्यन्त अयोग अर्थात् सम्बन्धाभाव का व्यवच्छेद अर्थात् अभाव है।

कहीं कहीं एव शब्द के विना भी नियम की प्रतीति होती है।

इसलिये पस्पशाह्निकभाष्य में कहा है कि—'अभक्ष्य ग्राम्यकुक्कुट:' ऐसा कहने पर यह पता चलता है कि ग्रामीण मुरगा अभक्ष्य है जंगली तो भक्ष्य ही है। क्योंकि सभी वाक्य निश्चयात्मक ही होते हैं यह न्याय है।

आलङ्कारिका अपि परिसङ्ख्याऽलङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात् स्वतुल्यान्यव्यवच्छेदं गमयतीति। भागवतेऽपि—

**लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना।**
**व्यवस्थितिस्तेषु विवाहयज्ञ-सुराग्रहैरासु निवृत्तिरिष्टा॥ इति।**

व्यवायो मैथुनम्, आमिषं मत्स्यादि, मद्यम्—एतेषां सेवा जन्तोः प्राणिमात्रस्य नित्या रागतः प्राप्ताः। अतस्तत्र चोदना विधिर्नास्ति। नन्वेवम् 'ऋतौ भार्यामुपेयात्' 'हुतशेषम्भक्षयेत्' सौत्रामण्यां सुराग्रहान् गृह्णाति' इत्येतेषां वैयर्थ्यम्। भार्यां विवाहिताम्। तत्राह व्यवस्थितिरिति। तेषु पुनः प्रापणमित्यर्थः। नियमस्यान्यनिवृत्तिफलकत्वादाह—आसु निवृत्तिरिष्टेति। अन्येष्विति शेषः। तदुक्तम्—

**विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।**
**तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते॥ इति।**

स्वर्गकामोऽश्वमेधेन यजेतेति विधिः। क्षुत्प्रतिघातो. यद्यपि शशकादिमांसैः श्वादिमांसैश्च भवति, तथापि शशकादिमांसैरेव कर्त्तव्य इति परिसङ्ख्यायते 'पञ्च पञ्चनखा भक्ष्या' इत्यनेन नखविदलनावहननाभ्यां व्रीहेर्निस्तुषीकरणं प्राप्तम्, तत्रावहनेन निस्तुषीकरणं पुण्यजनकमिति 'व्रीहीनवहन्ति' इत्यनेन नियम्यते। यद्यपि परिसङ्ख्यायां नियमे च स्वार्थहानिः प्राप्तबाधः परार्थकल्पना चेति दोषत्रयम्, तथाप्यनन्यगत्या स्वीक्रियते इति वृद्धाः। 'पञ्च पञ्चनखा' इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वात् अन्यनिवृत्तिरूपफलेनैक्याच्च। नियमपदेन परिसङ्ख्याऽपि व्याकरणे गृह्यत इति संक्षेपः।

इति निपातार्थनिरूपणम्

आलङ्कारिकाणां मम्मटादीनामिदानीं मतं प्रदर्शयितुमुपक्रमते—आलङ्कारिका अपीति ।

लोके व्यवायेति । लोके=संसारे, जन्तोः=प्राणिमात्रस्य, व्यवायामिषमद्यसेवा=व्यवायः सुन्दर्या साकं मैथुनम्, आमिषम् मत्स्यादि, मद्यम्=मदिरा, व्यवायश्च आमिषश्च मद्यञ्च तानि तेषां सेवा सेवनम्, नित्या, रागतः स्वभावतः प्राप्ता । तत्र हि नहि चोदना=विधिः प्रेरणमिति यावत् ।

तेषु पूर्वोक्तेषु विवाहयज्ञसुराग्रहैः व्यवस्थितिः व्यवस्था, अर्थात् विवाहेनैव ऋतौ भार्यायां गमनव्यवस्था भार्येतरस्त्रीगमनं न कार्यमिति भावः । एवं यज्ञ एवामिषभक्षणं कार्यं नान्यदेति भावः । एवं सौत्रामण्यां सुराग्रहान् गृह्णाति इति विधिना सौत्रामणियाग कार्य एव मद्यसेवनं कार्यं नान्यदेति व्यवस्था । आसु=व्यवायामिषमद्यसेवासु निवृत्तिरेव इष्टा सम्मता समेषामित्यर्थः ।

मद्यसेवेति । तैत्तिरीयब्राह्मणे—ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं यदि ब्राह्मणं न विन्देत वल्मीकवपायामवनमयेत् सा तत्र प्रायश्चित्तिः । ब्राह्मणो हि आहुत्या उच्छेषणस्य पाता । अकरणे प्रत्यवायाभावात्कथं नित्यत्वमित्याह-रागत इति । स्वभावत इत्यर्थः । नहि कश्चित् प्राणी क्षुत्प्रतिघातमन्तरेण प्राणधारणे समर्थो भवति । अतो येन केनाप्युपायेन प्राणधारणे तस्य प्रवृत्तिः स्वभावसिद्धेति भावः ।

ऋतौ भार्यामुपेयादित्यत्र त्रिविधो नियमः—ऋतावेव, भार्य्यामेव, उपेयादेवेति । तत्र आद्ये—अन्यकाले गमननिषेधोपदेशः, द्वितीये—भार्येतरस्त्रीगमननिवृत्त्युपदेशः, अन्त्ये—उपगमनाभावे दोषो भवतीत्युपदेशः । तेनोपदेशत्रयापालने प्रायश्चित्तं भवतीति ज्ञेयम् ।

विधिरत्यन्तमप्राप्ताविति । यस्य यदर्थत्वं प्रमाणान्तरेण अप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः ।

यथा—'स्वर्गकामो यजेत' 'अहरहः सन्ध्यामुपासीत' इत्यादौ यागस्य सन्ध्योपासनस्य च प्रमाणान्तरेण प्राप्तस्य विधानादनयोर्विधित्वम् ।

नियमः पाक्षिके सतीति । यश्च विधिः पक्षे प्राप्तमप्यर्थं नियमयति स नियमविधिः । यथा—'व्रीहीनवहन्ति' इत्यत्र तुषविमोकस्यावघातेन नखविदलनेन च सम्भवाद्यदा नखविदलनेनैव तुषविमोकेच्छा तदावघातस्याप्राप्तत्वात् पाक्षिकस्य तस्य विधानात् नियमत्वम् ।

एवं 'समे यजति' इत्यत्र यदा विषमदश एव सौकर्यादिना यागकरणेच्छा तदाऽप्राप्तत्वात् पाक्षिकस्य समदेशाधिकरणत्वाच्च विधानादस्यापि नियमत्वम् ।

अवघातेनैव तण्डुलनिष्पत्तावपूर्वोत्पत्तिर्नतु नखविदलनेन, समदेशाधिकरणकयागेनैवापूर्वोत्पत्तिर्नतु विषमदेशाधिकरणकयागेनेति नियम्यते ।

तत्र चान्यत्र च प्राप्ताविति। उभयस्य युगपत्प्राप्तौ इतरनिवृत्तिफलको विधिः परिसंख्याविधिः। यथा—'पञ्च पञ्चनखा भक्ष्या' इति। अत्र क्षुन्निवृत्त्यर्थं रागात् शास्त्रव्यापारमन्तरेणैव भक्षणं प्राप्तम्; तच्च भक्षणं पञ्चसु पञ्चनखेषु, अन्यत्र च श्वामांसादिषु युगपत्प्राप्तम्, तत्र पञ्चनखभक्षणेनैव क्षुन्निवृत्तिः कार्या इत्यनेन परिसङ्ख्यायते। पञ्चनखेतरभक्षणेन क्षुन्निवृत्तिर्नैव कार्येति भावः।

इति संस्कृतव्याख्यायां निपातार्थनिरूपणम्।

— :०: —

हिन्दी—आलङ्कारिक मम्मट आदि ने भी परिसंख्यालङ्कार के प्रकरण में यह कहा है कि—'अन्य प्रमाणों से प्राप्त जो वस्तु है उसको पुनः शब्दों से प्रतिपादन करना अन्य प्रयोजन के अभाव से अपने से तुल्य अन्यवस्तु को निवृत्त करता है।

श्री मद्भागवत में भी कहा है कि—

स्त्रीगमन, मांसभक्षण, मदिरापान प्राणिमात्र को नित्य है उसमें प्रेरणा किसी को नहीं की जाती है। किन्तु विवाह कर अपनी भार्या के पास गमन करे दूसरी औरत के पास गमन नहीं करे। इसी प्रकार यज्ञ में ही मांस भक्षण करे हमेशा नहीं एवं सौत्रामणि याग में ही मदिरापान करे अन्य समय में नहीं, यह शास्त्रीय व्यवस्था है। किन्तु इनमें निवृत्ति ही अच्छी है प्रवृत्ति से तो हानि ही की सम्भावना है।

वैसा कहा है भी कि—

अत्यन्त अप्राप्ति में विधि होती है। जैसे—'स्वर्गकामो यजेत्, अर्थात् 'स्वर्ग चाहने वाला यज्ञ करे' 'अहरहः सन्ध्यामुपासीत' अर्थात् 'प्रतिदिन सन्ध्योपासन करे' यहाँ यज्ञ करने का या सन्ध्या करने का विधान किसी अन्य प्रमाणों से प्राप्त नहीं है इसलिये यह अपूर्वविधि है।

जो विधि पक्ष में प्राप्त अर्थ को नियम करता है वह नियम विधि है। जैसे—'व्रीहीनवहन्ति' अर्थात् धान्य को कूटकर चावल निकाले 'समे यजति' बराबर जमीन में यज्ञ करे विषम स्थल में नहीं, यहाँ धान से भूसी का निकालना नख से भी प्राप्त है ऊखल में कूटकर भी प्राप्त है किन्तु कूटकर ही चावल निकालने में पुण्य है नख से नहीं यह नियम करता है इसलिये यह नियम विधि है।

इसी प्रकार यज्ञ करना बराबर जमीन में भी हो सकता है विषम स्थल में भी हो सकता है किन्तु समदेश में यज्ञ करने से पुण्य होता है विषमदेश में करने से नहीं यह नियम करता है इसलिये यह नियम विधि है।

जो विधि एक से अन्यत्र भी प्राप्त हो वह परिसंख्याविधि है। जैसे—'पञ्च पञ्चनखा भक्ष्याः' यहाँ भूख की निवृत्ति शशकमांस से भी हो सकती है कुत्ते के मांस से भी किन्तु पाँच पाँच नहवाले जन्तु भक्ष्य हैं अर्थात् शशकादि मांसों से ही भूख हटानो चाहिये कुत्ते के मांस से नहीं' यह परिसंख्याविधि है।

यद्यपि परिसंख्या में और नियम में—स्वार्थ की हानि होती है, और प्राप्त का बाध होता है, और परार्थ की कल्पना होती है इस प्रकार तीन दोष हैं तो भी वृद्ध लोगों ने अगत्या इसे माना है। भाष्य में भी 'पञ्च पञ्चनखा भक्ष्या' इसको नियम माना है। और दूसरों की निवृत्ति यह भी करता है अतः नियम पद से परिसंख्या का भी ग्रहण किया है। यह संक्षिप्त सारांश है।

इति हिन्दीव्याख्यायां निपातार्थनिरूपणम्।

———

## अथदशलकारादेशार्थनिरूपणम्

यद्यपि लकाराणामेवार्थनिरूणं तार्किकैः कृतम्, तथापि 'उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चारित' इति भाष्याल्लोके तथैवानुभवाच्च तदादेशलिङ्गमर्थो निरूप्यते। 'वर्त्तमाने लट्, इत्यादिविधायक 'लः कर्मणि' इतिशक्तिग्राहकसूत्राणामादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः। तत्र सङ्ख्याविशेष–कालविशेष–कारकविशेष-भावा लादेशमात्रस्यार्थाः। तथाहि–लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणि, उभयसमभिव्याहारे एकत्वादिसङ्ख्या चार्थः। तदाह–

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम्॥**

फलव्यापारौ तु धात्वर्थावित्युक्तमेव। तत्र तिङ्समभिव्याहारे तदर्थसङ्ख्या तदर्थकारके विशेषणम्। कालस्तु व्यापारे। तदाह–

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥**

लकाराणामेव कर्त्राद्यर्थेषु शक्तिः, लत्वस्यावच्छेदकत्वे लाघवात्। नतु तिबादीनाम्। 'शक्ततावच्छेदगौरवात्' इति तार्किकमतं प्रदर्श्य खण्डयितुमुपक्रमते—यद्यपीत्यादिना।

अयम्भावः—'उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चरित' इतिभाष्यात् लोके ह्यादेशानामेव प्रयोगदर्शनात् तत एवार्थबोधदर्शनात्तेषामर्थविचारस्यैव ज्यायस्त्वमिति तात्पर्यम्। तत्र किल यत्किञ्चिदर्थविषयकशाब्दबोधं प्रति उच्चारितशब्दनिष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमिति कार्यकारणभावो बोध्यः। अत एव 'रामान्' 'रमाः' इत्यादौ नकारविसर्गयोरेव कर्मत्वबोधनं न तु शसादेरित्यवधेयम्।'

तथैवानुभवादिति। अन्वयव्यतिरेकाभ्यामेव जन्यजनकभावस्य निर्णयात् तयोश्चादेशेनैव सुवचत्वादित्याशयः।

निरूप्यत इति। अत्रार्थत्वावान्तरधर्मप्रकारकज्ञानानुकूलो व्यापारो निरूपयतेरर्थोऽवसेयः।

११ प०

ननु 'लः कर्मणीत्यादिना लकाराणामेवार्थनिरूपणात् आदेशतिङामर्थाप्रसिद्धया तन्निरूपणन्तु काकदन्तपरीक्षायमाणमित्यत आह—वर्तमाने लडित्यादीति। अयम्भावः—यथा एकार्थोपस्थापकत्वरूप एकार्थीभावो राजपुरुषादिसमस्तपदेष्वेव, समुदायशक्त्या तत एवार्थस्मरणात्। इति समस्तपदगतमेकार्थीभावं तदर्थकालौकिकविग्रहवाक्ये समासात्प्रागारोप्य समास उत्पाद्यते। तथा प्रकृतेऽपि तिवाद्यादेशगतां कर्त्रादिशक्तिं तत्स्थानित्वेन कल्पितेषु लकारेषु आरोप्य 'लः कर्मणि' इत्यादिसूत्रप्रवृत्तिरपि समुपपादनीयेति सारांशः।

शबादीति। अत्रादिपदेन शतृ-शानच्-कानच्-शप्-श्नम्-श-श्नादीनां संग्रहः।

तथा च धातुजन्याश्रयनिष्ठप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति धातूत्तर-शबादिग्रहः कारणमिति, आश्रयनिष्ठप्रकारतानिरूपितफलनिष्ठविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति धातूत्तर-तङ्-यक्चिणाद्यन्यतमग्रहः कारणमिति च कार्यकारणभावोऽत्रावसेयः।

यक्-चिण्-समभिव्याहार इति। समभिव्याहृतत्वञ्च स्वनियतोत्तरत्व-स्वनियतपूर्वत्वैतदुभयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वम्।

फलव्यापारयोस्तत्रेति। तत्र तयोरर्थयोर्मध्ये, तङ्-यक्-चिणादयः प्रत्ययाः, फले आश्रयस्य ईप्सिततमस्य अन्वयं द्योतयन्ति, तादृशान्वयबोधे तात्पर्यं ग्राहयन्ति। शप्-श्नम्प्रभृतयो विकरणप्रत्ययाः, व्यापारे आश्रयस्य प्रथमान्तार्थस्यान्वयं द्योतयन्तीत्यर्थः।

तदर्थसंख्येति। तिङर्थः—तिङर्थकारके कर्तरि कर्मणि चान्वेतीति भावः। कालस्तु व्यापार इति। यद्यपि 'समानाभिधानश्रुतेः' कामोऽपि कारक एवान्वेतुमर्हति, तथापि अतीते पाके कर्तरि च वर्तमाने पचतीत्यस्य पाके वर्तमाने कर्तरि चातीतेऽपाक्षीदित्यादिप्रयोगपत्तिभिया कालस्य व्यापार एवान्वयः स्वीकर्तव्य इति तात्पर्यम्।

फलव्यापारयोरिति। धातुः फलव्यापारयोः स्मृतः, तिङस्तु आश्रये फलाश्रये व्यापाराश्रये च स्मृतः। तत्र = फलव्यापारयोर्मध्ये फलं विशेषणम्। व्यापारः प्रधानम्, तिङर्थोऽपि व्यापारे विशेषणमिति कारिकार्थः।

हिन्दी—तार्किकों ने यद्यपि लकारों का ही अर्थ निरूपण किया है तथापि 'उच्चारित शब्द ही अर्थ का बोधक होता है अनुच्चरित नहीं' इस भाष्य के अनुसार; तथा लोक में आदेश ही को प्रयोग करते देखा गया है इसलिये लादेशतिङ् का अर्थ निरूपण किया जाता है।

तब सन्देह यह होता है कि—'लः कर्मणि' इत्यादि सूत्रों से तो लकार ही का निरूपण प्राप्त है और आदेश तिङ् का अर्थ तो अप्रसिद्ध है तो तिङर्थ निरूपण तो अयुक्त सा प्रतीत होता है, इस पर कहते हैं कि—

'वर्तमाने लट्' इत्यादि विधायक 'लः कर्मणि' इत्यादि शक्तिग्राहक सूत्रों की प्रवृत्ति आदेशार्थ को स्थानी में आरोपकर होती है।

उनमें संख्या, काल, कारक लादेशमात्र का अर्थ है। लडादेश का वर्तमान काल है, शप् आदि प्रत्यय के योग में कर्ता, यक् चिण् प्रत्यय के योग में भावकर्म में; दोनों के योग में एकत्व द्वित्व आदि संख्या अर्थ है।

ऐसा कहा भी है कि फल और व्यापार के बीच में तङ् यक् चिण् आदि प्रत्यय फल में आश्रय का अन्वय बताते हैं और शप् श्नम् आदि प्रत्यय व्यापार में आश्रय का अन्वय बताते हैं।

फल और व्यापार दोनों धातु का ही अर्थ है ऐसा पहले कहा जा चुका है। उसमें तिङ् समभिव्याहार में तिङर्थ संख्या तिङर्थ कारक में विशेषण होकर रहती है। और काल व्यापार में विशेषण होकर रहता है।

वैसा कहा भी है कि धातु की फल और व्यापार में शक्ति है, और तिङ् की फलाश्रय कर्म और व्यापाराश्रय कर्ता दोनों में शक्ति है। फल और व्यापार दोनों में व्यापार प्रधान है, और फल विशेषण अर्थात् अप्रधान है, तथा तिङर्थ भी व्यापार में विशेषण है।

तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणम्। 'क्रियाप्रधानमाख्यातम्' इति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरमिति बोध्यम्। तथा च ग्रामं गच्छति चैत्र इत्यत्रैकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यस्संयोगः तदनुकूलो व्यापारः ग्रामो गम्यते मैत्रेणेत्यत्र तु मैत्रकर्तृकवर्तमानकालिकव्यापारजन्यो ग्रामाभिन्नकर्म्मनिष्ठः संयोग इति च बोधः। वर्तमानकालत्वं च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्।

तिङर्थः कर्ता व्यापारे विशेषणम्, फले च कर्म विशेषणम्।

क्रियाप्रधानमिति। 'भूवादयो धातव' इति सूत्रस्थ-क्रियाप्राधान्यबोधक-भाष्यात्, 'क्रियाप्रधानमाख्यातम्' इति निरुक्ताच्च कर्माख्याते आख्याते क्रियाख्याते आख्याते च सर्वत्र व्यापारमुख्यविशेष्यक एव शाब्दबोधः।

एकत्वावच्छिन्नेति। अत्रावच्छिन्नत्वम्-आश्रयत्वम्-तत्र समवायसंसर्गेण बोध्यम्।

वर्तमानकालत्वञ्च-स्वाधिकरणत्व-स्वघटकधातुबोध्यत्वेन तात्पर्यविषयीभूतक्रियाकलापान्तर्गताद्यक्रियाप्रागभावानधिकरणत्व-स्वघटकधातुबोध्यत्वेन तात्पर्यविषयीभूतक्रियाकलापान्तर्गतान्त्य-क्रियाध्वंसानधिकरणत्वैतत्त्रितयसम्बन्धेन प्रयोगविशिष्टत्वम्?

भविष्यकाले वर्तमानलक्षणस्यातिव्याप्तिवारणाय द्वितीयसम्बन्धनिवेशः। भूतकाले वर्तमानलक्षणस्यातिव्याप्तिवारणाय तृतीयसम्बन्धनिवेशः।

प्रारब्धापरिसमाप्तीति। प्रारब्धा च आपरिसमाप्ता च या क्रिया तादृशक्रियोपलक्षितकालत्वमित्यर्थः। क्रियोपलक्षितत्वम् क्रियाश्रयत्वमित्यर्थः।

हिन्दी—तिङर्थ जो कर्ता है वह व्यापार में विशेषण है, और कर्म फल में विशेषण है। 'क्रिया प्रधानमाख्यातम्' इस यास्कवचन में क्रियापद 'क्रियते यया सा' इस करण व्युत्पत्ति के द्वारा व्यापारपरक है। और कर्मव्युत्पत्ति 'क्रियते या सा' के द्वारा फलपरक है।

इस लिये 'ग्रामं गच्छति चैत्र' इसका व्यापारमुख्यकशाब्दबोध होता है।

वर्तमान का लक्षण यह है—'प्रारब्धापरिसमाप्तिक्रियोपलक्षितत्वम्' अर्थात् प्रारब्ध क्रिया की समाप्ति जिसमें नहीं हो अर्थात् काम जारी रहे जिसमें वह वर्तमानकाल है।

लिट्तिङस्तु [१] तानद्यतकालः परोक्षत्वं चाधिकोऽर्थः। शेषं लड्वत्[१]। परोक्षत्वं च [२]कारके विशेषणं न तु क्रियायाम्, तस्या [३]अतीन्द्रियत्वेन लिट्सूत्रे भाष्ये प्रतिपादनात् व्यभिचाराभावात्। कृभ्वाद्यनुप्रयोगस्थले कृभ्वसां क्रियासामान्यमर्थः। आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः सामान्यविशेषयोरभेदान्वयः। अकर्मकप्रकृतिकामन्तानुप्रयुक्तकृभ्वसामकर्मिकैव क्रिया।

वस्तुतस्तु अनुप्रयुक्तानां कृभ्वसां फलशून्यक्रियासामान्यवाचकत्वमेव। सकर्मकाकर्मकत्वव्यवहारस्तु आम्प्रकृतिभूतधातोरेवेति निष्कर्षः। एवञ्च एधाञ्चक्रे चैत्र इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः परोक्षत्वं च [४]साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्। भूतानद्यतनत्वं [५]अद्यतनाद्यप्रहरीव्यतिरिक्तत्वे सति भूतत्वम्।

---

१. शेषं लड्वदिति। शेष संख्याकारक लड्वदित्यर्थः। एवमुत्तरत्र सर्वत्र बोध्यम्।

२. कारके क्रियाविष्टे इति शेषः। तेन गमनादिक्रियानाविष्टस्य देवदत्तस्य दर्शनेऽपि "न देवदत्तो जगाम" इत्यादिप्रयोगानुपपत्तिरिति बोध्यम्।

३. अतीन्द्रियत्वेनेति। न च तस्या अतीन्द्रियत्वे 'पश्य मृगो धावति' इत्यत्र धावनस्य दर्शनविषयत्वानुपपत्तिरिति वाच्यम्। तत्र दृशेर्ज्ञानसामान्यार्थकत्वाङ्गीकारात्। शीघ्रं शीघ्रं देशान्तरसंयोगदर्शनेन च धावनमनुमीयते इति तस्यानुमितिविषयत्वमेव पश्य मृगो धावतीत्यत्र बुध्यते इति भावः।

४. साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वमिति। अनेन "सुप्तोऽहं किल विललाप" इत्यादौ स्वकृतविलापस्य स्वप्रत्यक्षत्वेऽपि परोक्षत्वमुपपन्नम्। तत्काले साक्षात्करोमि इत्येवं साक्षिभास्यत्वेऽपि निद्रादिदोषात् तदंशे [illegible]त्कारानुदयेन साक्षात्कृतत्वावच्छिन्नविषयताशालिज्ञानाविषयत्वस्य सुवचत्वा[illegible] अत एव साक्षात्करोमि इति त्यक्त्वा साक्षात्कृतमित्युपात्तमिति भावः।

५. अद्यतनाद्यप्रहरीव्यतिरिक्तत्वे सतीति। अद्यतनानद्यतनविभागस्च त्रेधा। अतीतया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्य[illegible]

लिट्तिङोऽर्थं विविनक्ति—लिट्तिङस्त्विति । शेषम् = संख्याकर्तृकर्मरूपा अर्थाः लङ्वत् लिटोऽपीत्यर्थः । लिट् सूत्रे भाष्ये इति । तत्र हि 'क्रियानामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इत्युक्तम् । अनेन भाष्येण क्रियाया अतीन्द्रियत्वं सुस्पष्टमेव लभ्यते । नच तर्हि परोक्षे इति व्यर्थमिति वाच्यम् । पिण्डीभूतायाः क्रिया निदर्शयितुमशक्यत्वेऽपि अवयवशः साक्षात्करोमिति प्रतीति-विषयत्वसम्भवात् । अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यात् इति तत्त्वम् ।

व्यभिचाराभावादिति । अतीन्द्रियस्य पदार्थस्य परमाणोरिव बहिरिन्द्रियजन्यप्रत्यक्ष-स्यायोग्यत्वात् सर्वत्र परोक्षताया एव क्रियायाः सत्त्वात् । 'सम्भवव्यभिचाराभ्यां स्याद्वि-शेषणमर्थवत्' इति न्यायात् व्यभिचाराभावेन नैव क्रियायां विशेषणमिति भावः ।

कृभ्वाद्यनुप्रयोगस्थल इति । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इति सूत्रे कृञ्ग्रहणेन 'कृञ्चानुप्रयुज्यते लिटि' इति सूत्रे प्रत्याहाराश्रयणात् 'कृ-भू-अस्' इत्यनुप्रयोगस्य लाभ इति तात्पर्यम् ।

एधाञ्चक्रे इति । नन्वत्र एधामित्यस्य विभक्तीतरचक्रे इत्येतत्समभिव्याहारापेक्षयैव लोकेऽर्थबोधजनकत्वादर्थवत्त्वमेव दुर्लभमिति चेन्न । विभक्तीतर-पदेतरेतिनिवेशेन दोषा-भावात् । चक्रे इत्यस्य पदेतरत्वाभावात् । एवञ्च प्रकृते पदान्तस्य मस्यानुस्वारे 'वा पदान्तस्ये'ति वैकल्पिकपरसवर्ण रूपद्वयस्य सिद्धिरिति ध्येयम् ।

साक्षात्कृतमिति । 'सुप्तोऽहं किल विललाप' इत्यादौ निजकृतविलापस्य स्वप्रत्य-क्षत्वेऽपि परोक्षत्वम् । तत्काले 'साक्षात्करोमि' इत्येवं साक्षिभास्यत्वेऽपि निद्रादिदोषात् तदंशे संस्कारानुदयेन साक्षात्कृतत्वावच्छिन्न-विषयता-शालिज्ञानाविषयत्वस्य सुवचत्वात् । अत एव साक्षात्करोमि इति त्यक्त्वा साक्षात्कृतमित्युपात्तमित्यवगन्तव्यम् ।

हिन्दी—लिट् लिङ् का भूत अनद्यतन काल अर्थ है और परोक्षत्व अधिक अर्थ है । शेष संख्या कर्ता-कर्म आदि लट् लकार की तरह जानना चाहिए ।

परोक्षत्व कारक में विशेषण है, क्रिया में नहीं, क्योंकि क्रिया अतीन्द्रिय है ऐसा लिट् सूत्र के भाष्य में कहा है और कोई व्यभिचार भी नहीं है, सम्भव और व्यभिचार ही विशेषण हुआ करता है ।

कृ० भू० आदि अनुप्रयोग स्थल में कृभू अस् का क्रिया सामान्य अर्थ होता है ।

---

तन इत्येकः प्रकारः । अतीताया रात्रेः अन्त्यतृतीभागेन आगामिन्या आद्यतृतीय-भागद्वयेन च सहितो दिवसोऽद्यतनः, तद्भिन्नोऽनद्यतन इति द्वितीयः । उदयादुदयं यावदद्यतनः तद्भिन्नोऽनद्यतन इति तृतीयः । अत्र च देशाचाराद् व्यवस्था ज्ञेया ।

आम् प्रकृति एधादि के विशेषवाचित्व अर्थ होता है इसलिए 'सामान्यविशेषयोरभेदान्वयः' इस नियम के अनुसार अभेदान्वय होता है। अकर्मक प्रकृति वाले आमान्तानुप्रयुक्त कृ-भू-अस् के अकर्मिका ही क्रिया होती है।

यथार्थ में तो अनुप्रयुक्त कृ-भू-अस् के फलरहित क्रियावाचकत्व ही अर्थ होता है। और सकर्मक अकर्मक का व्यवहार तो आम् प्रकृतिभूत जो धातु है उसी का होता है, 'यह निचोड़ बात है'।

ऐसी समस्या में 'एधाञ्चक्रे चैत्रः' यहाँ पर 'एकत्वाश्रयक परोक्ष कालाश्रयक चैत्रकर्तृक भूत अनद्यतनकालिक वृद्धि से अभिन्न क्रिया' यह क्रियामुख्यविशेष्यक शाब्दबोध होता है।

परोक्ष उसी काल को कहते हैं कि--'साक्षात् स्वयं किया' ऐसा जो ज्ञान उसका विषय नहीं हो। भूत अनद्यतन उसी को कहते हैं कि-जो काम आठ पहर के पहले हो गया हो।

लुडादेशस्य तु भविष्यदनद्यतनार्थोऽधिकः शेषं लडवत्। भविष्यत्वं च वर्त्तमानप्रागभावप्रतियोगिक्रियोपलक्षिततत्वम्।

हिन्दी—लुडादेशतिङ् का भविष्यत् अनद्यतन अर्थ होता है अर्थात् जो काम आठ पहर के पहले भोर में होने वाला हो उसको कहते हैं शेष संख्या कर्ता, कर्म आदि इसमें भी लट् ही के समान होता है।

भविष्यकाल उसी को कहते हैं—जो वर्तमान काल के पहले नहीं हो जैसे—कल श्री रामचन्द्रजी को राज्यतिलक होगा।

लृट्तिङस्तु भविष्यत्सामान्यमर्थः।

लृट तिङ् का सामान्य भविष्य अर्थ होता है जिसमें भविष्यत् क्रिया की विशेषता सुबह शाम इत्यादि नहीं कही जाय। जैसे कल वह जायगा।

लेंट्लिङस्तु विध्यादिरर्थः। 'छन्दसि लिडर्थे लेट' इति सूत्रात्। लट्प्रक्रियातो लेटोऽडाटाविति विशेषः भवति भवतीतिप्रयोगदर्शनात्।

हिन्दी—लेट् तिङ् का विध्यादि अर्थ होता है क्योंकि 'लिङर्थे लेट्' इस सूत्र से लिङ् के अर्थ में लेट् होता है लिङ् विध्यादि अर्थ में होता है इसलिए विधि लिङ् का जो अर्थ होता है वही लेट् का भी होता है। जैसे 'वह जाय' 'उसे जाना चाहिए।'

लोटतिङस्तु विध्यादिरर्थः। तत्राधीष्टं[1] सत्कारपूर्वको व्यापारः, आम-

---

१. अधीष्टमिति। बहुषु पुस्तकेषु अधीष्ट इति पुंल्लिङ्गपाठो दृश्यते। तत्र भावक्तान्तादर्शआद्यज् बोध्यः। तत्र भावक्तान्तस्य सत्कारोऽर्थः, तत्पूर्वको व्यापारः अच्प्रत्ययान्तार्थः।

च्छतु भवान् जलं गृह्णातु इत्यादौ। सम्प्रश्नोऽनुमतिः, गच्छति चेत् भवान् गच्छत्वित्यादौ।

हिन्दी—लोट् तिङ् का भी विध्यादि ही अर्थ होता है। उसमें अधीष्ट सत्कारपूर्वक व्यापार को कहते हैं। जैसे—आवें आप कृपया जल पीवें। प्रश्न अनुमति को कहते हैं। जैसे–यदि वह जाय तो आप जाँय।

लङादेशस्य तु भूतानद्यतनत्वमधिकोऽर्थः। शेषं लड्वत्।

हिन्दी—लङादेशतिङ् का भूत अनद्यतन अधिक अर्थ होता है। शेष संख्या-कर्ता-कर्म आदि लट्लकार ही के समान होता है। उदाहरण जैसे—'सः पाटलिपुत्रमगच्छत्' वह कल पटना गया।

लिङादेशस्य तु विध्यादिरर्थः तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्त्तनात्वेन चतुर्णां वाच्यता लाघवात्। तदुक्तं हरिणा—

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥ इति॥

प्रवर्त्तनात्वं च—प्रवृत्तिजनकविषयावच्छेदकत्वम्, तच्चेष्टसाधनत्वस्यैवेतितदेव लिङर्थः। न तु कृतिसाध्यत्वं, तस्य यागादौ लोकत एव लाभादित्यन्यलभ्यत्वात्। न च बलवदनिष्टाननुबन्धित्वं, द्वेषाभावेनान्यथासिद्धत्वात्, इत्यन्यत्र विस्तरः।

तत्र विध्यादिचतुष्टयेति विध्यादीनां तत्तद्रूपेण वाच्यतास्वीकारे नानार्थापत्तेः। अतोऽत्र प्रवर्तनात्वेनैव लाघवात् वाच्यता स्वीकर्तव्या। विद्यते चात्र चतुर्ष्वपि अनुगतत्वेन प्रवर्तनेति तत्त्वम्,

अत्रांशे हरिकारिकामवतारयति—अस्ति प्रवर्तनेति। चतुर्षु विधिनिमन्त्रणामन्त्रणाधीष्टेषु, अपि प्रवर्तनारूपम्=प्रवर्तनाया रूपम्, अनुस्यूतम्=सूच्याऽनुविद्धम्, तत्रैव=प्रवर्तनायामेव, लिङ्, विधातव्यः=कर्तव्यः, भेदस्य = विध्यादिभेदस्य, विवक्षया किम् न=किमपि फलमिति यावत्। अतएव कौमुद्यां 'प्रवर्तनायां लिङ्' इत्येव सुवचमित्युक्तम्।

न च 'विधिनिमन्त्रणामन्त्रणाधीष्ट' इति सूत्रे विध्यादिग्रहणस्य वैयर्थ्यमिति वाच्यम्। प्रवर्तनाया भेदबोधकत्वेन तेषां सार्थक्यात्।

अतएव—

न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥'

इति हर्युक्तिः संगच्छते।

प्रवर्तनाया लक्षणमाह—प्रवर्तनात्वञ्चेति। प्रवृत्तेर्जनकं यज्ज्ञानं तद्विषयताया अवच्छेदकत्वम् वोधकत्वमित्यर्थः। तच्च=निरुक्तावच्छेदकत्वञ्च। इष्टसाधनत्वस्यैवेति। अत्रेष्टत्वञ्च–समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्। 'स्वर्गकामोयजेत' इत्यत्र स्वर्गकामपदोपस्थापितकामनाविषयत्वस्य स्वर्ग सत्त्वादिष्टत्वं तस्याक्षतम्। तेनैव च स्वर्गादीनामनुगम इत्यवसेयम्।

नन्विष्टसाधनत्वे 'यजेत' इत्यादिवाक्यात् 'यागो वलवदनिष्टाननुवन्धित्वविशिष्टेष्टसाधनतावान्' इति वाक्यार्थबोधाय 'बलवदनिष्टाननुवन्धित्वविशेषणं देयम्' इति नैयायिकाक्षेपं निरस्यति—नचेति। द्वेषाभावेनेति। प्रवृत्तिं प्रति द्वेषस्य प्रतिवन्धकत्वेन यत्कार्यं प्रति यस्य प्रतिबन्धकत्वं, तदभावस्य तत्कार्यं प्रति कारणत्वमिति तस्यान्यथासिद्धत्वात् इति सारांशः। इति अन्यत्र=लघुमञ्जूषायां, विस्तरः विस्तृतरूपेण वर्णित इत्यर्थः।

हिन्दी—लिङ् के स्थान में तिङ् आदेश का विधि, निमन्त्रण-आमन्त्रण, अधीष्ट अर्थ होता है। उनमें विध्यादि चार के निचोड़ प्रवर्तना ही अर्थ मानने में लाघव है।

जैसा हरि ने कहा भी है—कि विध्यादि चारों में प्रवर्तना का रूप अनुस्यूत है अर्थात् जिस प्रकार सूई के द्वारा एक में वस्तु सोई हुई रहती है उसी प्रकार स्यूत है अर्थात् निविष्ट है। उसी में लिङ् करना चाहिये, भेदविवक्षा से क्या प्रयोजन। प्रवर्तना उसको कहते हैं कि—जो प्रवृत्ति करनेवाला ज्ञान का विषय हो, वह जिससे इष्ट साधन होता है उसी का होता है इसलिये वही लिङ् का अर्थ है। यत्नसाध्य नहीं। वह तो यज्ञ वगैरह में लोक ही से लब्ध है तो अन्यलब्ध शब्द का अर्थ नहीं माना जाता है।

नैयायिकों ने जो 'बलवत्' अनिष्ट नहीं करनेवाला हो इष्टसाधन है यह कहा है वह ठीक नहीं क्योंकि जब किसी के साथ द्वेषभाव नहीं रहेगा तो अनिष्ट होगा ही किस प्रकार इसलिये वह अन्यथासिद्ध है यों ही सिद्ध है, यह लघुमञ्जूषा में विस्तारपूर्वक वर्णित है।

लुङादेशस्य तु भूतसामान्यमर्थः भूतत्वं च वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम्।

हिन्दी—लुङ् लकार के स्थान में आदेश तिङ् का सामान्यभूत अर्थ होता है। जैसे—'सोऽगमत्' वह गया यहाँ भूतकालिक क्रिया में कोई विशेषता नहीं है कि कल गया या आज गया। भूतकाल उसे कहते हैं कि जो वर्तमानकाल के जो ध्वंस अर्थात् विनाश उसकी जो प्रतियोगी क्रिया उससे उपलक्षित हो। याने वर्तमान और भविष्य से जो भिन्न हो वह भूत है।

लृङादेशस्य तु क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वञ्चार्थः। आपादना तु गम्यमाना। भूते, एधश्चेदलप्स्यत ओदनमपक्ष्यत्। भविष्यति, सुवृष्टिश्चेद्भविष्यत्सुभिक्षमभविष्यदिति सङ्क्षेपः।

क्रियातिपत्ताविति। क्रियाया अतिपत्तिः, असिद्धिः क्रियासिद्ध्यभाव इति यावत्। स च भूतकालिको भविष्यत्कालिकश्च ग्राह्यः। विनिगमकाभावात्। अत एवाह भूतत्वं भविष्यत्त्वञ्चार्थं इति।

हिन्दी—लृङ् लकार के स्थान में तिङ् आदेश का अर्थ क्रिया की असिद्धि विवक्षित रहने पर और हेतुहेतुमद् भाव रहने पर भूत और भविष्य दोनों होते हैं।

जैसे—भूत का उदाहरण-'यदि लकड़ी होती तो भात पका हुआ होता यह है।

भविष्यत् का उदाहरण—जैसे-'यदि सुन्दर वारिस होगी तो सुभिक्ष होगा' यह है। यह वैयाकरण का संक्षिप्त मत है।

अथ नैयायिकानां मते सङ्क्षेपाल्लकाराणामर्थो निरूप्यते। तत्र लडादिलृङन्ता दश लकाराः। तत्र लकारस्य कर्ता काल सङ्ख्या चेति त्रयोऽर्थाः। तत्र कर्तेति पातञ्जलाः। 'लः कर्म्मणि च' इति सूत्रे चकारेण कर्तुः परामर्शात्। कर्तृस्थाने व्यापार इति भाट्टाः। यत्न इति नैयायिकाः। युक्तं चैतत्। व्यापारताद्यपेक्षया लाघवेन यत्नत्वस्यैव शक्यतावच्छेदकत्वात्। शक्ततावच्छेदकञ्च लकारसाधारणं लत्वमेव भवतीत्यादौ चादेशेनादेशिनो लस्यैव स्मरणादन्वयधीः। आदेशेषु बहुषु शक्तिकल्पने गौरवात्। तदस्मरणे च शक्तिभ्रमादेवान्वयधीः। 'चैत्रो गन्ता गतो ग्रामः' इत्यादौ सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृद्वाच्ये। नचैवं 'लटः शतृशानचौ' इत्यनेन शतृशानचोरादेशत्वात्कथं कर्त्तरि शक्तिः। आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनात्। चैत्रः पचन्नित्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादत्रादेशेऽपि शक्तिः।

नैयायिक सम्मतं लकारार्थत्वं निरूपयितुमुपक्रमते—अथेत्यादिना। पातञ्जला वैयाकरणा इत्यर्थः।

चकारेणेति। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे 'कर्मणि च' इत्येको योगः 'भावे चाकर्मकेभ्यः' इत्येको योगः' तत्रोभयत्रापि 'कर्तरि कृत्' इति सूत्रचकाराभ्यां कर्तरीत्यनुकृष्यते इति बोध्यम्।

भाट्टाः=मीमांसकाः। तन्मते भावनात्वेनैव व्यापारे लकाराणां शक्तिरित्यवधेयम् तेषाञ्चायमाशयः—यद्यपि सूत्रमर्यादया व्यापाराश्रयस्यैव लकारार्थत्वमभ्युपेयते तथाप्याश्रयस्य प्रथमान्तपदेनैव लाभादनन्यलभ्यस्यैव शब्दार्थत्वाच्च भावनापरपर्यायो व्यापार एव लकारवाच्य इत्यवधेयम्। लाघवेनेति। कर्तुर्लकारवाच्यत्वेऽनन्तव्यक्तीनां

शक्यतावच्छेदकत्वे गौरवम् । कृत्याश्रयस्य कर्तृत्वात् द्वयेकयोरितिवत् प्रकृतसूत्रे कर्तृकर्मपदयोर्भावप्रधाननिर्देशाङ्गीकारे हि कृतिमात्रस्य तदर्थत्वे कृतित्वजातेः शक्यतावच्छेदकत्वे महल्लाघवम् । नैयायिकाश्च यत्नः=कृतिरिति मन्यते । एतन्मते तज्जन्यत्वविशिष्टतज्जन्यजनकत्वस्यैव व्यापारत्वेन कृतित्वजात्यपेक्षया गौरवान्न व्यापारे शक्तिरिति ध्येयम् । तथापि लकाराणां कर्तरि न शक्तिः । कर्तृत्वस्य शक्यतावच्छेदकत्वेन गौरवात् ।

तथा शाब्दिकनये आख्यातपदजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति आश्रयतात्वनिष्ठप्रकारतानिरूपित-विशेष्यत्वावच्छिन्नाश्रयत्व-प्रकारकोपस्थितेः कारणत्वम् । आश्रयतात्वनिष्ठ-प्रकारतानिरूपित-विशेष्यत्वावच्छिन्नाश्रयत्व-प्रकारकोपस्थितिं प्रति तादृशाश्रयत्वप्रकारकाश्रयनिष्ठ-शक्तिज्ञानस्य कारणत्वं वक्तव्यमिति गौरवं वैयाकरणमते। अस्मन्मते कृतित्वप्रकारोपस्थितिः कृतिनिष्ठशक्तिज्ञानञ्च शाब्दबोधोपस्थित्योः कारणमिति लाघवमिति नैयायिकानां तात्पर्य्यम् ।

तदस्मरणे च=तस्य स्थानिनो लकारस्य स्मरणाभावे च । एवञ्चातिव्याप्त्यादिरूपेणैव शक्तिभ्रमादन्वयबोध इति व्यवस्थासम्भवः ।

आदेशेन तिवादिना आदेशिनः स्थानिनः स्मरणात् इति । यद्यप्येतन्मते स्थानिवत्सूत्रं नास्ति तथापि तत्स्थानापन्नस्तद्धर्मं लभते यथा लोके गुरोः स्थाने शिष्यो याज्यकुलानिगत्वाऽग्रासनादीनि लभते इति लौकिकन्यायेन तत्स्मरणादिति भावः। शक्तिभ्रमादिति । लडादिनिष्ठशक्तेस्तिवाद्यादेशेषु तिप्पदं कृतिनिरूपितशक्तिमदित्येवं क्रमेण शक्तिभ्रमात् ।

ननु 'कर्तरि कृदि'त्यतोऽनुवृत्तं कर्तृपदं 'लः कर्मणी'ति सूत्रे कृति बोधयेत् चेत 'कर्त्तरी'तिसूत्रेऽपि तामेव बोधयेत् अर्थाधिकारानुरोधादित्यत आह—सामानाधिकरण्यानुरोधेनेति । अन्यथा नामार्थयोरभेदान्यसम्बन्धेनान्वयासम्भवादुक्तप्रयोगानुपपत्तिरिति तात्पर्यम् ।

हिन्दी—अब नैयायिकों के मत में संक्षेप से लकारों का अर्थ निरूपण किया जाता है। उनमें लट् से लेकर लङ् तक दशलकार होते हैं। उनमें लकार का कर्ता, काल, संख्या ये तीन अर्थ हैं। उनमें वैयाकरण लकारका अर्थ कर्ता मानते हैं। क्यों कि 'लः कर्मणि च' इस सूत्र में चकारबल से कर्ता का परामर्श होता है। मीमांसकलोग कर्ता के स्थान में व्यापार ही को लकार का अर्थ मानते हैं। नैयायिक लोग लकारका अर्थ यत्न मानते हैं। और यह युक्त भी है क्योंकि व्यापार मानने की अपेक्षा यत्न ही को शक्यतावच्छेदक अर्थात् अर्थ मानने में लाघव है। और शक्यतावच्छेदक सकल लकार में लत्व ही है। भवति इत्यादि स्थलों में आदेश से आदेशी अर्थात् स्थानी लकार ही के स्मरण से अन्वयबोध होता है। आदेश बहुत हैं इसलिए उनमें

शक्ति मानने में गौरव है। यदि स्थानी लकार का स्मरण न हो तो शक्तिभ्रम के द्वारा अन्वय-बोध हो जाता है।

'चैत्रो गन्ता गतो ग्रामः' इत्यादि स्थलों में सामानाधिकरण्य के अनुरोध से यथाक्रम से कृत्प्रत्यय का अर्थ कर्ता और कर्म है। इसलिए 'जाने वाला चैत्र गांव गया' यह अर्थ होता है।

अब किसी का संदेह यह है कि—यदि ऐसी बात है तो 'लटः शतृ शानचाव प्रथमा समानाधिकरणे' इस सूत्र से शतृ शानच् आदेश की कर्ता में शक्ति किस प्रकार मानी जा सकती है?

किन्तु यह सन्देह ठीक नहीं क्योंकि जब स्थानी की शक्ति से निर्वाह हो जाय तो आदेश में शक्ति मानने की क्या आवश्यकता।

'चैत्रः पचन् पठति' इत्यादि स्थलों में सामानाधिकरण्य के अनुरोध से स्थानी की शक्ति से निर्वाह नहीं हो सकता इसलिये आदेश में भी शक्ति मानी जाती है।

इयांस्तु विशेषः—लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन फले। 'मैत्रेण गम्यते ग्रामः' इत्यादौ मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यन्वयबोधात्। कृतिश्चात्र तृतीयार्थः। जन्यत्वं संसर्गः। मैत्रः कृतौ विशेषणम्, सा च गमने, तच्च फले, तच्च ग्रामे। 'ग्रामं गच्छति मैत्र' इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान्मैत्र इति बोधः। फलं च द्वितीयार्थः। जनकत्वं संसर्गः। ग्रामश्चात्र फले विशेषणम्, तद् गमने, तच्च कृतौ, सा मैत्रे इति विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थलीयबोधयोर्विशेषः। तावन्तः पदार्थास्तूभयत्रैव तुल्याः। मैत्रेण ज्ञायते इष्यते क्रियते घट इत्यादौ तु वृत्तिस्तृतीयाया, विषयता त्वाख्यातस्यार्थः। मैत्रवृत्तिज्ञानविषयो घट इति बोधः। घटं जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया, आश्रयत्वं चाख्यातस्यार्थः। घटविषयकज्ञानाश्रयो मैत्र इति बोधः।

स्वमतान्नैयायिकानां मते विशेषतां दर्शयति—इयांस्तु विशेष इति। लत्वेन यत्ने शक्तिरिति। लकारमात्रस्य कृतिशक्तत्वेन लपदं कृतिवाचकमिति शक्तिज्ञाने लकारमात्रस्य लत्वधर्मपुरस्कारेण भानाच्च यत्ननिष्ठशक्यतानिरूपितशक्ततावच्छेदकं लकारमात्रानुगतं लत्वमेवेत्याशयः।

गमनेति। संयोगाख्यफलजनको व्यापारोऽत्र गमनपदेन विवक्षित इति ध्येयम्।

तृतीयार्थ इति। उक्तन्यायेन कर्तृकरणयोरित्यत्रत्यकर्तृपदस्यापि तन्मते कृतिपरत्वादिति तात्पर्यम्।

'ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान् मैत्र' इति नैयायिकमते शाब्दबोधे कारणन्त्विदम्—कर्मणि द्वितीयेति विहितद्वितीयायाः कर्मत्वमर्थः। तत्रापि कर्मपद भाव-

निर्देशात् तच्च फलमेव। प्रकृतिजन्यबोधे प्रकारीभूतो भाव इति सिद्धान्तात्। तदपि धातुत एव लभ्यते। एवञ्चानन्यलभ्यः शब्दार्थ इति न्यायेन वृत्तित्वमात्र द्वितीयार्थः तथाच ग्रामवृत्तियः संयोगानुकूलव्यापारस्तदनुकूलकृतिमान् मैत्र इति शाब्दबोधः समुपपद्यते। वृत्तित्वं हि द्वितीयार्थ इति व्युत्पत्तिवादेऽभिहितम्।

मैत्रेण ज्ञायत इति। तृतीयाया वृत्तिर्वृत्तित्वमर्थः। तन्नियामकसंसर्गश्च ज्ञानेच्छाद्यर्थकधातुषु समवाय एव। ज्ञानेच्छादीनामात्मगुणत्वेन तत्संसर्गस्यैवाभ्यर्हितत्वात्। अन्यत्र तु यथायथं संयोगस्वरूपादिरिति ज्ञेयम्।

विषयता तु आख्यातस्यार्थं इति। ज्ञानेच्छाद्यर्थकधातुसमभिहारे विषयत्वं विषयित्वं वा कर्मप्रत्ययार्थ इति सिद्धान्तात्। तत्र विषयित्वञ्च विषयतानिरूपकत्वं ज्ञानेच्छाधर्मः। विषयत्वं तु विषयस्य घटादेरित्यवधेयम्।

हिन्दी—नैयायिकमत में विशेषता यह है कि—लत्वेन यत्न में शक्ति है और आत्मने पद मानकर फल में शक्ति है। क्योंकि 'मैत्रेण गम्यते ग्रामः' यहाँ पर 'मैत्रवृत्तिकृतिजन्यगमनजन्यफलशालीग्रामः' अर्थात् 'मैत्र में रहने वाला जो यत्न उससे जारी जो गमन उस गमन से उत्पन्न फल से शोभने वाला ग्राम है' यह बोध होता है। यहाँ तृतीया का अर्थ यत्न है। जन्यत्व संबन्ध है। मैत्र कृति में विशेषण है। और वह यत्न गमन में विशेषण है। वह गमन, फल में विशेषण है। और फल ग्राम में विशेषण है। ग्रामं गच्छति मैत्रः' यहाँ पर 'ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान् मैत्रः' अर्थात् 'ग्राम के साथ जो संयोग उस संयोग का जनक ( उत्पादक ) जो गमन उस गमन के अनुकूल जो यत्न उस यत्न वाला मैत्र है' ऐसा बोध होता है। यहाँ द्वितीया का अर्थ संयोग है। जनकत्व संसर्ग है। ग्राम फल में विशेषण है, फल गमन में, गमन यत्न में, यत्न मैत्र में विशेषण है। विशेष्य विशेषण भाव के भेद से ही कर्मस्थलीय और कर्तृस्थलीय शाब्दबोध में विशेषता है। और पदार्थ दोनों में समान ही है।

'मैत्रेण ज्ञायते दृश्यते क्रियते घटः' इत्यादि स्थलों में तृतीया का अर्थ वृत्ति है, आख्यात का अर्थ विषयता है, इसलिये 'मैत्रवृत्ति ज्ञान विषयताश्रयो घटः' अर्थात् मैत्र में ज्ञान उस ज्ञान का आश्रय घट है' ऐसा बोध होता है।

'घटं जानाति मंत्रः' इस कर्तृ प्रत्यय स्थल में द्वितीया का अर्थ विषयता है, आख्यात का अर्थ आश्रय है इसलिये घट विषयक ज्ञान का आश्रय मैत्र है, यह बोध होता है।

ज्ञानेच्छाद्यर्थक धातु समभिव्याहार में कर्म प्रत्यय के दो अर्थ होते हैं—विषयत्व और विषयित्व, उनमें विषयित्व विषयता का निरूपण करने वाला ज्ञान और इच्छा का धर्म है, विषयत्व धर्म विषय घटादि का है।

कालश्चातीतवर्त्तमानानागतात्मा यथायथं लडादेरर्थः। लटो भवतीत्यादौ वर्त्तमानत्वं; लङ्लुङ्लिटाम् अभवत् बभूवेत्यादौ भूतकालः, लुङ्लृटोर्भविता भविष्यतीत्यादौ भविष्यत्कालः। लिङ्लोड्लेटां भवेत् भवतु आग्नेयोऽष्टाकपालो भवातीत्यादौ विधिः। संख्या च केवलार्थः।

लेटस्तु छन्दस्येव प्रयोगः। तत्र दीर्घत्वमपि विकल्पेन भवति, भवातीति दर्शनात्। तत्र व्यापारादिबोधकेन लटा वर्तमानत्वं व्यापारादावेव बोध्यते। पचतीत्यादितो वर्त्तमानपाकानुकूलव्यापारवानिति बोधात्। एवमन्यत्रापि।

व्यापारबोधकाख्यातजन्यवर्त्तमानत्वप्रकारबोधे आख्यातजन्यव्यापारोपस्थितेर्हेतुत्वकल्पनान्नातिप्रसङ्गः।

व्यापाराबोधकज्ञाधात्वादिसमभिव्याहृताख्यातजन्यवर्त्तमानत्वप्रकारकबोधे तु तादृशधातुजन्योपस्थितिर्हेतुः। कार्यताकारणतावच्छेदिका च प्रत्यासत्त्या विषयतैवेति नातिप्रसङ्गः। जानाति इच्छति यतते इत्यादौ वर्त्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्यैवानुभविकत्वात्।

तत्र लटा शक्त्या वर्त्तमानत्वं लक्षणयाऽऽश्रयत्वं बोध्यत इति विशेषः। लटा स्वाधिकरणकालोपाधिस्पन्द एव वर्त्तमानः प्रत्याय्यते। वर्त्तमानसामीप्ये विहितेन तु स्वानधिकरणसमीपवर्त्ती तादृशकालः। तत्रापि शक्तिर्लक्षणा वेत्यन्यदेतत्।

नैयायिकमते लडादीनामर्थं विविनक्ति—कालश्चातीतेति। अतीतानागतेति। वर्तमानश्चातीतश्च अनागतश्चेति विग्रहेऽतीतवर्तमानागताः त आत्मानो यस्य स कालः यथाक्रमं लडादेरर्थः। वर्तमानभूतभविष्यत्काल इति यावत्। छन्दस्येवेति। लौकिकवाक्येषु लेडन्तप्रयोगानुपलम्भादेव वेद एव प्रयोगोऽस्य भवतीत्यवधेयम्।

तत्र दीर्घत्वमेव विकल्पेन भवतीति विशेषः। अडाटोः सतोर्दीर्घविकल्पफलस्य सिद्धत्वात्। व्यापारादावेवेत्यत्र आदिपदेन देवदत्तेन पच्यते इत्यत्र फलसंग्रहो बोध्यः। तत्र वर्तमानत्वस्य विक्लित्त्यादिफल एवान्वयादिति भावः बोध्यते विशेषणत्वेनेति शेषः।

व्यापाराबोधकेति। व्यापाराबोधकः य आख्यातजन्यो वर्तमानत्वप्रकारको बोधस्तत्र आख्यातजन्या व्यापारोपस्थितिस्तस्या एव कारणत्वम्। एवञ्च—

तत्तद्धातूत्तराख्यातजन्यकालत्वव्याप्यधर्मनिष्ठ-प्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबोधम्प्रति विशेष्यतासंसर्गेण धातूत्तराख्यातजन्यफलव्यापारान्यतरोपस्थितिर्हेतुरिति कार्यकारणभावः फलितो भवतीति बोध्यम्।

नातिप्रसङ्ग इति। आख्यातार्थ—व्यापारान्वयबोधककार्यकारणभावस्य धात्वर्थव्यापारेऽसक्त्या न तत्र वर्तमानकालान्वय इति तात्पर्यम्।

विषयतैवेति। कार्यकारणतावच्छेदकसम्बन्धो विषयतारूप इति ध्येयम्। अन्यथा कालिकादिसम्बन्धेन कारणस्यान्यत्रापि सत्वात् वर्तमानत्व-प्रकारकबोधापत्तेः।

स्वानधिकरण-समीपवर्ती कालः लट्प्रयोगानधिकरण-समीपवर्त्ती कालो भूतभविष्यद्रूपः तदुपलक्षितव्यापार इत्यर्थः।

अत्रेदमवधेयम्—वर्तमानसामीप्ये विहितलटो वर्तमानसामीप्यमर्थः। तस्य किल स्वप्रयोगाधिकरणक्षणाव्यवहितोत्तर-कालावच्छेद्यत्व—स्वप्रयोगाधिकरणक्षणाव्यवहितप्राक्कालावच्छेद्यत्व-भेदाभ्यां द्वैविध्यम्। एतद्भेदद्वयञ्च भूतभविष्यत्कालयोरेव।

अव्यवहितत्वञ्च—स्वध्वंसाधिकरण-समवध्वंसानधिकरणत्वे सति प्रागभावध्वंसान्यतर-सम्बन्धेन स्वाधिकरणत्वम्।

हिन्दी—भूत-वर्तमान-भविष्य काल यथाक्रम से लडादि का अर्थ है। भवतीत्यादि में लट् का अर्थ वर्तमान है। लङ् लुङ् लिट् का उदाहरण क्रमशः अभवत्, अभूत्, बभूव इत्यादि स्थलों में भूत काल अर्थ है लुट् लृट् के उदाहरण-भविता-भविष्यति इत्यादि स्थलों में भविष्यत्काल अर्थ है।

लिङ् लोट् लेट् लकार का भवेत्, भवतु, भवाति, उदाहरणों से विधिअर्थ होता है और संख्या केवल अर्थ है।

जैसे—लट्—वह जाता है। लङ्—वह कल गया। लुङ्—वह गया। लिट्—रामचन्द्र राजा हुए थे। लुट्—वह सुबह जायगा। लृट्—वह जायगा। लिङ्—वह जाय, उसे जाना चाहिए। लोट्—आप जायँ, वे जायँ। लेट्—अग्नि के लिए आठ किशोरे में बना हुआ हविष् होना चाहिए।

लेट् का प्रयोग छन्द ही में होता है। वहाँ दीर्घ भी विकल्प से होता है अर्थात् भवति, भवाति दोनों प्रयोग होते हैं। उसमें व्यापार आदि का बोधक लट् लकार से वर्तमानत्व का व्यापार ही वगैरह में बोध होता है। धात्वर्थ व्यापार में नहीं क्योंकि पचति आदि से विद्यमान पाक के अनुकूल व्यापार वाला है यह बोध होता है, इसी प्रकार और जगह भी जानना चाहिये।

तब संदेह यह होता है कि—धात्वर्थ व्यापार के वर्तमान काल में अन्वय क्यों नहीं होता है।

उत्तर यह है कि व्यापार बोधक आख्यात (तिङ्) से वर्तमानत्व प्रकारक बोध में आख्यातजन्य व्यापार की उपस्थिति होना ही कारण है इसलिए आख्यातार्थ व्यापार में अन्वयबोधक कार्यकारणभाव धात्वर्थ व्यापार में नहीं है इसलिए कोई दोष नहीं है।

व्यापार का नहीं बोध कराने वाला ज्ञान वगैरह धातु के योग में आख्यातजन्य

वर्तमानत्व-प्रकारक बोध में तो व्यापाराबोधक ही धातुजन्य उपस्थिति कारण होता है। उसमें कार्यकारणतावच्छेदक सम्बन्ध विषयता ही है इसीलिये अतिप्रसङ्ग (दोष) नहीं होता है। अन्यथा कालिकादि सम्बन्ध से कारण और जगहों में भी रह सकता है इसलिए वर्तमानत्व-प्रकार का बोध होने लगेगा। क्योंकि जानाति, इच्छति, यतते, इत्यादि स्थलों में वर्तमानकालिक ज्ञान के आश्रयत्वादि का ही बोध अनुभवसिद्ध है।

उसमें विशेषता यह है कि शक्ति के द्वारा लट् से वर्तमानत्व और लक्षणा के द्वारा आश्रयत्व का बोध होता है। लट् लकार से लट् प्रयोगस्थलीय वर्तमानकालिक उपाधि-युक्त ही वर्तमान का बोध होता है।

वर्तमान सामीप्य में जो लट् आता है उससे तो लट् प्रयोग के स्थल से भिन्न लट् प्रयोगाधिकरण के जो समीपवर्ती भूत-भविष्यत् काल है उसका बोध होता है। उसमें भी शक्ति के द्वारा या लक्षणा के द्वारा वर्तमान सामीप्य अर्थ होता है यह एक दूसरी बात है।

नन्वेकदोपस्थितयोः कृतिवर्तमानत्वयोः कथं मिथोऽन्वयः। तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात्। कार्यतावच्छेदिका च प्रत्यासत्तिः प्रकारता। कारणतावच्छेदिका च विशेष्यतेति। अन्यथा हरिपदार्थयोः-दण्डेनेत्यादौ च करणत्वैकत्वयोर्मिथोऽन्वयापत्तेः। मैवम्। तत्तत्पदान्यत्वस्योक्तव्युत्पत्तौ प्रवेशात्। कथमन्यथैवकारार्थयोरन्ययोगव्यवच्छेदयोर्मिथोऽन्वयः।

घटो नश्यतीत्यादौ वर्त्तमानोत्पत्तिकत्वं प्रतियोगित्वञ्च लडर्थः। आद्यं नाशे प्रकारः, द्वितीयं घटे प्रकारः। वर्त्तमानोत्पत्तिकनाशप्रतियोगी घट इति बोधस्यानुभविकत्वात्। अत्र च वृत्तिद्वयस्य युगपद्बोधकत्वं सर्वैरेपितव्यम्। तादृशोत्पत्तिकत्वप्रतियोगित्वयोरर्थयोर्युगपदेव बोधात्। नच तादृशोत्पत्तिकत्वमेवार्थोऽस्तु। धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे साक्षादन्वयासम्भवात्। न च प्रतियोगित्वमेवार्थोऽस्त्विति वाच्यम्। चिरनष्टेऽपि नश्यतीति प्रसङ्गात्।

## एतेनात्र वर्त्तमानत्वमेवार्थो नोत्पत्तिरित्यपास्तम्।

कृतिवर्तमानत्वयोर्मिथोन्वयं विसंवादं निर्णेति—नन्वेकपदोपस्थितयोरिति। अयम्भावः—तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेः कारणत्वेन एकपदेन उपस्थितस्य कृतित्वस्य वर्तमानत्वस्य च कथं परस्परमन्वयः स्यात्। कार्यतावच्छेदककोटौ कारणतावच्छेदककोटौ च प्रकारताविशेष्यतयोरेव बोधात् इति हि शङ्काग्रन्थस्याशयः। प्रोक्तकार्यकारणभावे तत्तत्पदान्यत्वस्य प्रवेशेन कृतिवर्तमानत्वयोरेकपदेनोपस्थितत्वेऽपि परस्परान्वयबोधे न कापि क्षतिरित्युत्तरग्रन्थस्याशय इत्यवधेयम्।

घटो नश्यतीत्यादौ च लटो वर्तमानत्वे शक्तिः प्रतियोगित्वे च लक्षणेति बोध्यम्।

अत्र च वृत्तिद्वयस्येति। न च वर्तमानोत्पत्तिकत्वप्रतियोगिकत्वयोर्युगपद्वृत्ति-द्वयविरोधेन शाब्दबोधे कथं भानमिति वाच्यम्। 'गङ्गायां मीनघोषौ स्त' इत्यादौ जलप्रवाहतटयोर्युगपद्वृत्तिद्वयबोधदर्शनेनास्या असार्वत्रिकत्वात्।

एतेन—ध्वंसस्य नित्यत्वाद्वर्तमानकालेऽपि सत्त्वेन चिरनष्टेऽपि नश्यतीति प्रयोग-प्रसङ्गेन।

हिन्दी—अब सन्देह यह होता है कि—एकपद से उपस्थित कृतित्व और वर्तमानत्व का परस्पर में अन्वय नहीं होना चाहिए। क्योंकि पदजन्य शाब्दबोध में पदान्तरजन्य उपस्थिति कारण हुआ करता है। उक्तकार्यकारणभाव में कार्यतावच्छेदक जो 'तत्पद-जन्य-शाब्दबोधे' यह सान्निध्य है वह विशेषण है, कारणतावच्छेदक जो 'पदान्तरजन्य उपस्थिति है वह विशेष्य है। अन्यथा हरि हरिपदार्थ के तथा 'दण्डेन' में करणत्व और एकत्व का परस्पर अन्वय होने लगेगा।

उत्तर यह है कि—उक्त व्युत्पत्ति में 'तत्पदान्यत्व' का भी प्रवेश है। अन्यथा एव का जो अर्थ है अन्ययोग-व्यवच्छेद अर्थात् दूसरे में सम्बन्ध का हटाना उन दोनों का भी परस्पर में अन्वय नहीं होगा इसलिए तत्पदान्यत्व का भी व्युत्पत्ति के अन्दर रखना आवश्यक है।

'घटो नश्यति' इत्यादि स्थलों में वर्तमानकालिक उत्पत्ति और उसका नाश दोनों लट् का अर्थ है। उसमें वर्तमान-कालिकोत्पत्तिकत्व नाश में विशेषण है, और प्रति-योगित्व घट में विशेषण है क्योंकि 'वर्तमानोत्पत्तिकनाशप्रतियोगी घटः' अर्थात् उत्पन्न होकर घट, नाश हो रहा है' यह बोध अनुभव सिद्ध है। इसमें दो शक्ति का एक काल में बोध कराना सर्वों का इष्ट है क्योंकि वर्तमानोत्पत्तिकत्व और प्रतियोगित्व दोनों अर्थ का बोध एक ही समय होता है। यदि यह कहें कि वर्तमानोत्पत्तिकत्व ही एक अर्थ हो प्रतियोगित्व नहीं यह भी ठीक नहीं क्योंकि धातु का अर्थ जो नाश है उसका घट प्रातिपदिकार्थ में साक्षात् अन्वय होना असम्भव है। यदि यह कहें कि प्रतियोगित्व ही अर्थ हो वर्तमानोत्पत्तिकत्व नहीं तो यह भी कहना ठीक नहीं क्योंकि बहुत दिनों से नष्ट घट में भी 'नश्यति' का प्रसङ्ग होने लगेगा।

इसमें जिनका यह कहना था कि—लट् का वर्तमान ही अर्थ है उत्पत्ति नहीं, उसका सर्वथा खण्डन हो गया।

केचित्तु लत्वमेवात्र प्रतियोगित्वस्य वृत्त्यवच्छेदकं लट्त्वन्तु तादृशोत्पत्ति-कत्वस्य। एकधर्मावच्छिन्नवृत्तिद्वयस्यैव न युगपद्बोधकत्वम्। अन्यथा दण्डेने-त्यादौ करणत्वैकत्वयोर्बोधो न स्यादित्याहुः।

अन्ये तु नश्यतीत्यादौ लटा नाशसामग्र्येव बोध्यते। तेन न चिरनष्टे

नश्यतीति प्रसङ्गः। अत एव विनश्यत्ता विनाशसामग्रीसान्निध्यमित्याहुः प्रामाणिकाः।

आख्यातात् क्रियाविशेष्यको बाध इति वैयाकरणाः भाट्टाश्च। आद्यनये धात्वर्थः क्रिया। चैत्रस्तण्डुलं पचतीत्यादितश्चैत्रकर्तृकतण्डुलकर्मकपाकइति धीः। अन्त्यनये भावना क्रिया प्रत्ययार्थः। चैत्रीयपाककरणिका तण्डुलकर्मिका भावनेति बोधः।

प्रथमान्तार्थविशेष्यक एव बोधः। ओदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोध इति नैयायिकाः। द्वितीयाद्यर्थकर्मकरणत्वादेः क्रियायामेव सर्वमतेऽन्वयः।

अन्येषां केषाञ्चिन्मतं दर्शयति—केचित्त्विति। वैयाकरणमते आख्यातात् क्रियाविशेष्यकशाब्दबोधे मानन्तु भूवादिसूत्रस्थं भाष्यं 'भावप्रधानमाख्यातं क्रियाप्रधानानि नामानि' इति निरुक्तवचनमेव। मीमांसका अपि 'तद्भूतानां क्रियाक्रियार्थेन समाम्नाय' इति सूत्रेण क्रियामुख्यविशेष्यकं बोधमेवाहुः।

नैयायिकमते प्रथमान्तार्थमुख्यशाब्दबोधे मानन्तुकालाद्यतिरिक्तत्वे सति आख्यातार्थनिष्ठ-प्रकारता-निरूपितविशेष्यतासम्बन्धेन आख्यातपद-ज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रथमान्ता-नामपद-जन्यान्यविशेषणीभूतार्थविशेष्यकोपस्थितिः कारणमिति कार्यकारणभाव एवेति बोध्यम्।

हिन्दी – किसी ने यह कहा है कि—'घटो नश्यति' में प्रतियोगित्व की शक्ति का बोध कराने वाला लत्व हो है वर्तमानोत्पत्तिका लट्त्व बोध कराता है 'क्योंकि एकधर्म वाला दो शक्ति का एक समय बोध कराना नियम-विरुद्ध है। दो धर्म वाली दो शक्ति तो एकसमय बोध कराती ही हैं। नहीं तो 'दण्डेन' यहाँ पर करणत्व और एकत्वका बोध एकसमय किस प्रकार होता।

किसी अन्य का मत यह है—'नश्यति' इत्यादि स्थलों में लट् से नाशसामग्री का ही बोध होता है इसलिए बहुत दिनों से नष्ट घट में 'नश्यति' का प्रयोग नहीं होता है। तथा इसी कारण से नाशवान् घट की नाश-सामग्री का सान्निध्य ( सामीप्य ) ही आता है यह प्रामाणिक लोगों का कहना है।

वैयाकरण 'क्रियाप्रधानमाख्यातम्' इस नियम के अनुसार क्रिया-विशेष्यक शाब्दबोध मानते हैं क्योंकि उनके मत में धातु का अर्थ क्रिया है इसलिए 'चैत्रः तण्डुलं पचति' यहाँ पर 'चैत्रकर्तृकस्तण्डुलकर्मकः पाकः' अर्थात् चैत्र तण्डुल पकाता है' यह बोध होता है।

मीमांसक के मत में भी भावना-क्रिया प्रत्यय का अर्थ है इसलिए 'चैत्रीय-पाककरणिका तण्डुलकर्मिका भावना' अर्थात् चैत्र के पाक करने से तण्डुल का पाक हो रहा है यह बोध होता है।

नैयायिक लोग प्रथमान्तार्थमुख्यविशेष्यक शाब्दबोध मानते हैं क्योंकि वे 'प्रकृति प्रत्ययौ सहार्थं ब्रूतः प्राधान्यन्तु प्रत्ययार्थस्यैव' इस सिद्धान्त के अनुसार प्रत्ययार्थ ही की प्रधानता मानते हैं इसलिए 'ओदनकर्मकपाकानुकूलकृतिमाँश्चैत्र' वह बोध होता है। द्वितीया का अर्थ कर्मत्व, तृतीया का अर्थ करणत्व आदि का तो सबों के मत में क्रिया ही में अन्वय होता है।

लङस्तु शक्यो ह्योऽनद्यतनकालः। लुङस्तु भूतसामान्यम्। भूतत्वं च वर्त्तमानध्वंसप्रतियोग्युत्पत्तिकत्वम्, न तु तादृशप्रतियोगत्वमेव। चिरोत्पन्नेऽपि पूर्वेद्युरभवदितिप्रत्ययापत्तेः। नष्ट इत्यादौ नाशे तदन्वयासम्भवाच्च। उत्पत्तेस्तु देशकालादावन्वयान्न दोषः। अभवदित्यादौ तु धातुनोत्पत्तिः प्रत्याय्यते, नष्ट इत्यादौ तादृशौत्पत्तिकत्वं प्रत्ययेनेति विशेषः। लिटस्तु भूतकाल इव परोक्षत्वमप्यर्थः। अहं चकारेत्यादिप्रयोगादर्शनात्। ननु चैवं 'णलुत्तमो वा'' इति ज्ञापकात् उत्तमपुरुषस्तत्र स्यादिति वाच्यम्। 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ चित्तविक्षेपादिना पारोक्ष्यमुपपाद्य तत्र सूत्रसार्थक्यसम्भवात्। तत्र च परोक्षत्वेन परोक्ष्यसादृश्ये तात्पर्यम्। 'चक्रे सुबन्धुः' इति तु न लिट्प्रयोगोऽपि तु तिङन्तप्रतिरूपको निपातः।

नैयायिकमते लङोऽर्थं विविनक्ति—लङस्त्विति। अनद्यतनकाल इति। अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितः कालोऽद्यतनः तद्भिन्नोऽनद्यतन इति वृत्तिसम्मतोऽर्थः।

अत्र च अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसोऽद्यतन इति लण्सूत्रे कैयटः प्रमाणम्।

भूतत्वञ्चेति। वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वम् भूतत्वम् इति लक्षणे वर्तमाने ध्वंसः, वर्तमानश्चासौ ध्वंसश्चेति समासद्वयस्य सम्भवत्वेनं वर्तमानलक्षणवृत्तिर्यो ध्वंसः- अतीतक्रियाध्वंसः, वर्तमानो यो ध्वंस इति वा तत्प्रतियोगिनी या क्रिया तदुत्पत्तिकत्वं भूतकालस्येतिलक्षणसमन्वयो बोध्यः।

चिरोत्पन्न इति। उत्पत्तिपदोपादानेन वर्तमानक्षणवृत्ति-ध्वंसप्रतियोगिन्या अतीतक्रियाया उत्पत्तिर्यस्मिन् इति बहुव्रीहिणा यस्मिन् काले तादृशक्रियोत्पत्तिः स एवातीतकालो लक्ष्यते। अन्यथा वर्तमानलक्षणवृत्तिध्वंसोऽतीतक्रियाध्वंसस्तत्प्रतियोगित्वस्यातीतक्रियायां सत्त्वेपि क्रियाया अपि कालत्वेन सामान्यातीतेऽपि वर्तमानत्वात्तादृशस्य प्रयोगस्य सम्भवः स्यादित्वधेयम्। परोक्षत्वञ्च—तक्तुः साक्षात्काराविषयत्वम्। अतएव स्वक्रियायाः स्वप्रत्यक्षेण नाहं चकारेति प्रयोगोऽसाधुरिति बोध्यम्। 'व्यातेने किरणावलीमुदयन.' इत्यस्य तु परोक्षत्वारोपेण समाधेयत्वमिति सारम्।

'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ परोक्षस्य पारोक्ष्यलिट् सादृश्यादेव साधुः।

ननु 'चक्रे सुबन्धुः' इत्यात्रापरोक्षत्वे कथं लिट्; इत्याशङ्कायामाह—चक्रे सुबन्धुरिति। तत्र तिङन्तप्रतिरूपकस्य निपातस्य स्वीकारेण तस्य समाधेयत्वादिति-ध्येयम्।

हिन्दी—लङ् का अर्थ अनद्यतन काल है इसलिये 'कार्यमिदमभवत्' इसका 'यह कार्य आठ पहर के पहले हुआ' यह अर्थ होता है।

लुङ् का अर्थ सामान्य भूत है—जिस काल में कोई विशेषता नहीं हो वह सामान्य-भूत होता है। जैसे 'वह गया' यहाँ किसी प्रकार की विशेषता क्रिया में नहीं कही जाती है।

भूतकाल उसे कहते हैं कि जो वर्तमान क्षण में विद्यमान जो अतीत क्रिया का ध्वंस उसकी उत्पत्ति वाला हो। केवल वर्तमान का प्रतियोगी ही नहीं क्योंकि चिरोत्पन्न घट में भी 'कल यह उत्पन्न हुआ' ऐसा बोध होने लगेगा। तथा 'नष्टः' इत्यादि स्थलों में नाश में उसका अन्वय भी असम्भव है।' उत्पत्ति का तो देश काल आदि में अन्वय होने से कोई दोष होने नहीं पाता। 'अभवत्' इत्यादि स्थलों में तो धातु से उत्पत्ति का बोध होता है। 'नष्टः' इत्यादि स्थलों में प्रत्यय से वर्तमानध्वंसप्रतियोगी उत्पत्ति का बोध होता है यही विशेषता है।

लिट् लकार का भूतकाल की तरह परोक्ष भी अर्थ होता है। क्योंकि 'अहं चकार' 'मैंने किया' यह परोक्ष में प्रयोग नहीं होता।

यदि यह कहें कि 'णलुत्तमो वा' इस सूत्र के वैयर्थ्य से उत्तम पुरुष यहाँ होना उचित ही है तो यह कहना ठीक नहीं क्योंकि उस सूत्र का तो 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं विचचार' इत्यादि स्थलों में चित्त-विशेष आदि कारण वश परोक्षता लाकर सूत्र सार्थक है। वहाँ परोक्ष का तात्पर्य परोक्ष सदृश है। 'चक्रे सुबन्धुः' यहाँ लिट् का प्रयोग नहीं है वहाँ चक्रे तिङन्त-प्रतिरूपक निपात है।

लुङ्लृटोस्तु भविष्यत्कालः। भविष्यत्त्वं वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। उत्पत्तौ च देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति। गृहे घटो भविता, अद्य घटो भविष्यतीत्यादौ धातुनोत्पत्तिः प्रत्याय्यते, वर्तमानप्रागभावप्रतियोगित्वमाश्रयत्वं च प्रत्ययेन। गृहाधिकरणकवर्त्तमानप्रागभावप्रतियोग्युत्पत्त्याश्रयो घटः, अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयो घट इत्यन्वयबोधात्। वर्त्तमानप्रागभावप्रतियोगित्वमात्रस्य लुडाद्यर्थत्वे श्वो गृहे समुत्पद्य परश्वः प्राङ्गणं गमिष्यति मैत्रे परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः।

वर्तमानप्रागभावेति। वर्तमानकालिको यः प्रागभावः तत्प्रतियोगिनी उत्पत्तिर्यस्येति बहुव्रीहिः अयं भावः—कार्योत्पत्तेः पूर्वं योऽभावः स तत्प्रागभावः। स च कार्योत्पत्तौ सत्यां स्वयमेव नश्यति। तथा च उत्पत्स्यमानघटस्योत्पत्तेः पूर्वं योऽभावस्तत्प्रतियोगिनीत्वं घटरूपकार्योत्पत्तौ, तदुत्पत्तिकत्वं घटस्य तदुत्पत्त्यवच्छिन्नकालस्य वेति लक्षणस्य समन्वयो बोध्यः।

धातुनोत्पत्तिरिति। नच सत्तायां पठितस्य भूधातोः कथमुत्पत्तिरर्थं इति वा धातूनामनेकार्थत्वात्।

श्वो गृहे समुत्पद्येति। इदमसङ्गतम्। श्वस्तनस्य परश्वस्तनकालस्यानद्यतने लुट्प्रयोगस्यैव न्याय्यत्वात्। कथमन्यथाऽनद्यतने लुट् इत्यस्य सार्थक्यमिति सर्वैर्विभावनीयम्।

हिन्दी—लुट् और लृट् लकार का भविष्यत्काल अर्थ है। भविष्यत्काल कहते हैं कि-वर्तमानकालिक जो प्रागभाव (कार्योत्पत्ति के पूर्व जो अभाव) का प्रतियोगी जो क्रिया उस क्रिया की उत्पत्ति जिसमें हो। उत्पत्ति में देश और काल अधिकरण है अर्थात् स्थल है उसी में उसका अन्वय होता है।

'गृहे घटो भविष्यति' धातु के अनेकार्थं मानकर धातु ही उत्पत्ति अर्थ का बोध कराता है। प्रागभाव प्रतियोगित्व का बोध प्रत्यय से होता है। क्योंकि गृहाधिकरण अर्थात् घट में जो विद्यमान प्रागभाव उसकी प्रतियोगी क्रिया की उत्पत्ति का आश्रय घट है 'आज प्रागभाव-प्रतियोगी क्रिया की उत्पत्ति का आश्रय घट है' यह बोध होता है।

•यदि वर्तमान प्रागभाव-प्रतियोगित्व लट् का अर्थ माना जाय तो मैत्र 'प्रातः घर में उत्पन्न होकर परसों आँगने में उत्पन्न होगा' यह भी सम्भव होने लगेगा।

केचित्तु देशविशेषः कालविशेषश्च प्रागभावे प्रतियोगिनि चान्वेति। परश्वः प्राङ्गणे मैत्रो भविष्यतीत्यस्य परश्वो वृत्तिः प्राङ्गणवृत्तिर्यः प्रागभावस्तत्प्रतियोग्युत्पत्त्याश्रयः परश्वोवृत्तिः परश्वोवृत्तिमैत्र इति बोधः। तेन नोक्तातिप्रसङ्गः। एतेन श्वोभाविनि घटे अद्य भविष्यतीति प्रसङ्गो निरस्त इत्याहुः॥

नङ्क्ष्यतीत्यादौ वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं प्रतियोगित्वं प्रत्ययार्थः श्वो घटो नङ्क्ष्यतीत्यादौ श्वोवृत्तिः वर्त्तमानप्रागभावप्रतियोगियोत्पत्तिस्तदाश्रयनाशप्रतियोगी घट इत्यन्वयबोधः। यत्त्वत्र वर्त्तमानप्रागभावप्रतियोगित्वमेव प्रत्ययार्थ इति, तन्न। [1]श्वोभाविनाशके घटे अद्य नङ्क्ष्यतीति प्रसङ्गात्।

पक्ष्यतीत्यादौ आद्यपाकव्यक्तिप्रागभावगर्भमेव भविष्यत्त्वम्, पक्ववानित्यादौ चरमपाकव्यक्तिध्वंसगर्भमेव भूतत्वं भासते। तत्तत्समभिव्याहारस्य तादृशबोधे हेतुत्वात्। तेन पाकमध्ये कस्याश्चित्पाकव्यक्तेरनुत्पादेऽपि कस्याश्चिदतीतत्वेऽपि पक्ष्यति पक्ववानित्यादिप्रयोगः।

पुनरपरेषां मतं प्रदर्शयति—केचित्त्विति। निरस्त इत्याहुरिति। एतेनात्र पक्षेऽरुचिः सूचिता। देशविशेषकालविशेषयोः प्रागभावे विशेषणतया उपस्थितयोर्

१. श्वोभावी नाशो यस्य तस्मिन्नित्यर्थः।

न्वयासम्भवात्। एकत्र विशेषणतयाऽन्वितस्य अन्यत्र विशेषणतयाऽन्वयस्य नित-मनौचित्यमवधेयम्।

पक्ष्यतीत्यादौ आद्यपाकव्यक्तीति। पाको हि नाम विक्लित्त्युत्पादकसिद्धासिद्ध-काराधःश्रयणान्तक्रियाकलापरूपोत्पादनापरपर्यायो व्यापारविशेषः साध्यत्वेन प्रतीयमानो धात्वर्थः। अत एव—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥ इति।
यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥

इत्यभियुक्तैरभिहितम्। तत्राद्यपाकपदेन फूत्कारस्य चरमपाकपदेनाधःश्रयणस्य च ग्रहणमित्यवधेयम्।

तत्तत्समभिव्याहारस्येति। आद्यपाकप्रागभावबोधे पचधातूत्तरस्य पदसमभि-व्याहारज्ञानस्य चरमपाकप्रध्वंसाभावबोधे च तद्धातूत्तरक्तवत्त्वादि समभिव्याहारज्ञान-स्य च कारणस्य कल्पनादिति तात्पर्यम्।

पुनः केषाञ्चनमतं प्रदर्श्य खण्डयति—यत्त्वत्रेति।

हिन्दी—किसी ने यह कहा है कि—देश विशेष और काल विशेष का प्रागभाव का प्रतियोगी में अन्वय होता है।

'परसों आँगन में मैत्र होगा' इसका तात्पर्य यह होता है कि—परसों जो कार्यो-त्पत्ति का पूर्व अभाव तथा आँगन में जो कार्योत्पत्ति का पूर्व अभाव तत्प्रतियोगिक उत्पत्ति का आश्रय परसों तथा आँगन में मैत्र होगा। इसलिए उक्त दोष नहीं होने पाता।

इससे 'प्रातः काल होने वाला घट में 'आज घट होगा' ऐसा प्रयोग खण्डित हो गया।

'नङ्क्ष्यति' में आदि में वर्तमान प्रागभाव—प्रतियोग्युत्पत्तिकत्व प्रत्यय का अर्थ है। 'श्वो घटो नङ्क्ष्यति' आदि में 'सुबह में रहने वाला जो वर्तमान प्रागभाव उसकी प्रतियोगी जो उत्पत्ति तदाश्रय नाश का प्रतियोगी घट है' ऐसा बोध होता है।

जो किसी ने यहाँ पर यह कहा है कि—वर्तमान-प्रागभाव-प्रतियोगित्व ही प्रत्यय का अर्थ है। वह ठीक नहीं क्योंकि सुबह में नष्ट होने वाला घट में 'आज नष्ट होगा' ऐसा भी प्रयोग होने लगेगा।

'पक्ष्यति' आदि स्थलों में प्रथम पाक करने वाले व्यक्तिका प्रागभाव ही भविष्यत्व है। 'पक्ववान्' में अन्तिम पाक का अभाव ही भूतकाल भासित होता है क्योंकि उस

प्रकार के बोध में तत्तत् का जुटान होना कारण है। इसलिये पाक के बीच में क्रि पाक करने वाले व्यक्ति के नहीं उत्पन्न होने पर भी किसी पाक करने वाले व्यक्ति हट जाने पर भी पक्ष्यति या पक्ववान् प्रयोग नहीं होता है।

लिङो विधिराशीश्चार्थः। यजेतेत्यादौ विधिः, आशीस्तु भूयादित्यादौ सा च शुभाशंसनं तदिच्छेति यावत्। लोटस्तु विधिरनुमतिर्वा। गच्छत्वि त्रानुमतिविषयगमनानुकूलकृतिमानिति बोधस्यानुभविकत्वात्।

विधिः प्रवर्त्तनेति भाट्टाः। [1]लिङ्निष्ठो व्यापारः पदार्थान्तरम्, [2]लिङ्प ज्ञानमेव वा। यस्य [3]प्रवर्तनात्वेन ज्ञानं शब्दाधानप्रवृत्तौ कारणम् लिङ्श्रवणे आचार्यो मां प्रवर्तयतीति ज्ञानाद् गवानयनादौ प्रवृत्तः आचार्यनि प्रवर्तनात्वभिप्रायविशेष एवेत्याहुः। तन्न। स्तनपानादिप्रवृत्ताविष्टसाधनता नस्य हेतुताया आवश्यकत्वात् तत एवोपपत्तौ प्रवर्तनाज्ञानस्य हेतुत्वे [4]मा

---

१. यद्यपि लोके आज्ञादिरूपोऽभिप्रायविशेष एव प्रवर्त्तना, तथापि वेदे पु भावाच्छब्दनिष्ठ एव स आश्रीयते इति भावः।

२. क्लृप्तेन लिङ्पदज्ञानेनैवोपपत्तौ पदार्थान्तररूपव्यापारकल्पनाया अनु त्वात्। तथाहि—प्रवृत्तिहेतुव्यापारः प्रवर्तना। विधिशब्दो हि पुरुषप्रवृत्तिरूपा वनां दशलकारसाधारणाख्यातत्वेन बोधयति, ज्ञातैव च सा अनुष्ठातुं शक्यत इति विधिशब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वम्। तस्य च प्रवृत्तिज्ञानद्वारा प्रवृत्तिहेतुत्वं 'वि शब्दः प्रवृत्तिबोधहेतुशक्तिमान्' इत्येवं ज्ञातस्यैवेति तादृशशक्तिमत्त्वेन ज्ञानमेव प्रवृत्तिहेतुर्व्यापार इति स एव प्रवर्तनाख्यां लभते। ज्ञानातिरिक्तव्यापार मानाभावादिति भावः।

३. प्रवर्तनात्वेनैव ज्ञानस्य प्रवृत्तिं प्रति कारणत्वान्न लोकवेदयोरननु लिङ्श्रवणे अयं मां प्रवर्तयतीतिसाक्षिकस्य प्रवर्तनात्वस्य आज्ञादिष्विव शब्दव्यापा सत्त्वादिति भावः।

४. इष्टसाधनत्वमपि प्रेरणात्वेनैव शक्यं, न स्वरूपतः। प्रेरणात्वापेक्षया गुरुत्वात्। इष्टत्वांशं विहाय साधनत्वमात्रस्य वाच्यत्वे च आख्यातत्वांशोपस्थि वृत्त्या सह समानाभिधानश्रुत्या साधनत्वान्वयसम्भवे पदान्तरोपस्थापितस्वर्ग समभिव्याहाररूपवाक्येन तदन्वयासम्भवात् प्रवृत्तिसाधनत्वरूपप्रेरणात्वे एव पर्य नमिति इष्टसाधनत्वं न पदार्थः, किन्तु वाक्यार्थः। तथाहि—प्रवर्तनाविषयीभूत भावना किम्भावयेदिति भाव्याकाङ्क्षायां समानपदोपात्तमपि धात्वर्थमपुरुषार्थ व्यतयाऽन्वयायोग्यं विहाय भिन्नपदोपात्तमन्यविशेषणमपि स्वर्गं कामपदसम पुरुषार्थतयावगतं साध्यत्वान्वययोग्यं भाव्यत्वेनाश्रयति। अपुरुषार्थकर्मिकायास्त प्रवर्त्तनासाध्यत्वानुपपत्तेः। एवञ्च स्वर्गभावनासाधनत्वात्स्वर्गरूपेष्टसाधनत

भावात्। स्वर्गकामो यजेतेत्यादौ प्रवर्त्तनाविषया यागकरणिकास्वर्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् प्रवर्तनाविषयत्वमात्रज्ञानात् प्रवृत्त्यनुपपत्तेरावश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः।

नैयायिकमते लिङर्थं निर्दिशति—लिङो विधिरिति। अयं भावः—'विधिनिमन्त्रणामन्त्रणा' इति 'आशिषि लिङ्लोटौ' इति सूत्राभ्यां लिङस्तादृशार्थद्वये शक्तिबोधनात् द्वयोरप्युक्तार्थयोरुपस्थितिः। किन्त्वियान् विशेषः—शप्समभिव्याहारे विधेस्तदितरत्र 'थास्त' 'सीस्त' इत्यन्तरसमभिव्याहारे चाशिषश्च तात्पर्यनिश्चयबोधस्य वैलक्षण्यम्।

तदिच्छेति। शुभविषयिणी इच्छेत्यर्थः।

विधिरनुमतिर्वेति। 'लोट्च' इत्यनेन विध्यादौ तद्विधादनुमतिरनुज्ञा, अत्राप्युक्तार्थस्यार्थान्तरोपलक्षणत्वमूह्यम्। तत्र जगदीशमतानुसारेण पक्षान्तरस्य कथनम्। स्ववक्त्रनुमतत्वस्य धात्वर्थेऽन्वयबोधने अनुकूला यादृशी तिङ् सैव परिभाष्यते इति। शब्दशक्तिप्रकाशिकायां तेनैवोक्तेः।

मीमांसकमतं दर्शयति—विधिः प्रवर्तनेति भाट्टा इति। भाट्टाः=मीमांसका इत्यर्थः यद्यपि लोके आज्ञादिरूपोऽभिप्रायविशेष एव प्रवर्तना, तथापि वेदे पुरुषाभावाच्छब्दनिष्ठ एव स आश्रीयत इति तात्पर्यम्। लिङनिष्ठो व्यापारः पदार्थान्तरम्।

क्लृप्तेन लिङ्पदज्ञानेनैवोपपत्तौ पदार्थान्तररूपकल्पनाया अनौचित्यमित्यरुचेराह—लिङ्पदज्ञानमेव वेति।

अरुचिकारणन्त्वत्र हि—प्रवृत्तिहेतुव्यापारः प्रवर्तनाविधिशब्दो हि पुरुषप्रवृत्तिरूपार्थभावनां दशलकारसाधारणाख्यातत्वेन बोधयति, ज्ञातैव च सा अनुष्ठातुं शक्यते इति भवति—विधिशब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वम्। तस्य च प्रवृत्तिज्ञानद्वारा प्रवृत्तिहेतुत्वम् 'विधिशब्दः प्रवृत्तिबोधशक्तिमान्' इत्येव ज्ञातस्य वेति तादृशशक्तिमत्त्वेन ज्ञानमेव तस्य प्रवृत्तिहेतुर्व्यापार इति स एव प्रवर्तनाख्यां लभते। ज्ञानातिरिक्तव्यापारकल्पने मानाभावादित्यवधेयम्।

तस्य प्रवर्तनात्वेनेति। प्रवर्तनात्वेनैव ज्ञानस्य प्रवृत्तिं प्रति कारणत्वान्न लोकवेदयोरननुगमः। लिङ्श्रवणे अयं मां प्रवर्तयति इतिप्रतीतिसाक्षिकस्य प्रवर्तनात्वस्य आज्ञादिष्विव शब्दव्यापारोऽपि सत्त्वादितिसारांशः।

---

प्रवर्तनायाः सिध्यति। पुरुषप्रवृत्तिरूपार्थभावना च यागव्यापारं विना स्वर्गं साधयितुं नालमिति यागस्य स्वर्गसाधनत्वमाक्षिप्यते। न तु यागस्य स्वर्गसाधनत्वं वाक्यप्रमाणगम्यम्। यजधातोरकर्मकत्वेन तत्र द्वितीयान्तस्वर्गपदार्थस्य कर्मत्वेनान्वयायोगात्। तस्मात् फलसाधनत्वस्य प्रवर्तनात्वेनैव वाच्यतेत्यादिकं मण्डनमतसमर्थनं वैयाकरणादिसम्मतमन्यतो विस्तरेणावगन्तव्यम्। मानाभावादिति तु नैयायिकमतनिरूपणप्रस्तावे ग्रन्थकारेणोक्तमिति तत्कथनं वैयाकरणसंमतमिति न भ्रमितव्यम्।

मीमांसकमतं खण्डयति—तन्नेति । स्तनपानादिप्रवृत्ताविति । आद्यक्षणे स्तनपाने बालस्य प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनाया असम्भवेन जन्मान्तरगृहीतेष्टसाधनतास्मरणादेव प्रवृत्तेरित्यवधेयम् ।

मानाभावादिति । आचार्ये प्रवर्तनायाः सत्त्वेऽपि कर्तुरिष्टसाधनताज्ञानाभावेन दृश्यते यागे प्रवृत्तिः । अन्यथा जल-ताडनादावपि प्रवृत्त्यापत्तेः । अतः कृतिसाध्यत्वज्ञानस्येव तज्ज्ञानस्यापि कारणत्वं वक्तव्यमिति तात्पर्यम् । मानाभावादिति तु नैयायिकमतनिरूपण-प्रस्तावे ग्रन्थकारेणोक्तमिति तत्कथनं वैयाकरणसम्मतमिति न भ्रमितव्यम् । फलसाधन-त्वस्य प्रवर्तनात्वेनैव वाच्यत्वमित्यादि मण्डनमिश्रमतसमर्थनस्यैव वैयाकरणसम्मतत्वा-दिति बोध्यम् ।

हिन्दी—लिङ् लकार का विधि और आशिष् अर्थ होता है । उसमें विधिलिङ् का विधि अर्थ होता है । जैसे–'स यजेत' उसे यज्ञ करना चाहिये, वह यज्ञ करे । आशीर्लिङ् का आशीर्वाद देना अर्थ में प्रयोग होता है । जैसे 'स श्रीमान् भूयात्' वह लक्ष्मीवान् हो। यह आशीष् किसी का शुभ मनाना या शुभ की इच्छा करना है ।

लोट् लकार का अर्थ भी विधि और अनुमति अर्थ होता है ।

सारांश यह है कि—विधिलिङ् वहाँ आता है कि जहाँ पर अपने से नीचे किसी को आज्ञा फरमाना हो, और श्राद्धादि में निमन्त्रण के लिये तथा विवाहादि में आमन्त्रण के लिये किसी को भेजना रहे, वहाँ भी आता है ।

लोट् लकार वहाँ आता है कि जहाँ सत्कारपूर्वक किन्हीं की अनुमति लेनी हो जैसे–आप हमारे यहाँ कृपया आवें, आकर भोजन करें ।

'गच्छतु' यहाँ पर अनुमतिविषयक गमनानुकूल यत्नवाले आप हों अर्थात् चलने के लिये आप अनुमति दें' ऐसा बोध अनुभव-सिद्ध है ।

मीमांसक लोगों ने प्रवर्तना अर्थात् प्रेरणा को विधि माना है । लिङ में व्यापार एक अन्य पदार्थ है या लिङ पदज्ञान ही है । क्योंकि प्रवर्तनारूप जो ज्ञान है वही शब्दा-धीन प्रवृत्ति में कारण है । लिङ् लकार का जहाँ श्रवण होता है वहाँ यह ज्ञान होने लगता है कि आचार्य मुझे आज्ञा फरमाते हैं इसलिये गौ आदि के लाने में मनुष्य प्रवृत्त हो जाता है इसलिये वहाँ आचार्य की प्रवर्तना अभिप्राय विशेष ही है. यह मीमांसक का मत है ।

किन्तु यह ठीक नहीं क्योंकि बालक को स्तन-पानादि कर्म में इष्टसाधन का ज्ञान ही कारण आवश्यक है और उसी से जब कार्य सिद्ध है तो प्रवर्तना ज्ञान के कारण मानने में कोई प्रमाण नहीं मिलता ।

'स्वर्गकामो यजेत्' इत्यादि स्थलों में 'यज्ञ करने से स्वर्ग प्राप्ति होती है' इस प्रकार का बोध और लोगों ने भी माना है क्योंकि प्रवर्तना-विषयत्व मात्र ज्ञान से

किसी की प्रवृत्ति नहीं हो सकती, आवश्यक स्वर्गसाधन के ज्ञान ही से उसमें प्रवृत्ति हो जावगी इसलिए प्रवर्तना मानना ठीक नहीं।

कार्यं विधिरिति [1]प्राभाकराः। स्वर्गकामो यजेतेत्यादौ स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्राथमिको बोधः। सनियोज्यकं यागविषयकं स्थायिस्वर्गसाधनं कार्यमिति द्वितीयः। स्वर्गकामनियोज्यको यागः स्वर्गकामकार्य्य इति तृतीयः। स्वर्गकामो यागकर्तेति चतुर्थः। अहं स्वर्गकामोऽतो यागो मत्कृतिसाध्य इति पञ्चमः। न च प्रथम एव स्वर्गकामकार्य्यो याग इति बोधोऽस्तु, तथा च कार्यत्वे एव शक्तिर्न कार्ये इति वाच्यम्। यागादिक्रियायां नियोज्यान्वयं विना कार्यत्वान्वयानुपपत्तेः। नियोज्यत्वं हि क्रियानिष्ठकाम्यसाधनताज्ञानाधीनमत्कार्यमितिबोधवत्त्वम् तत्तु स्वर्गकामानाविशिष्टे योग्यताऽवच्छेदकतया भासते। घटेन जलमाहरेत्यत्र घटे छिद्रेतरत्ववत्। न च यागे

१. प्राभाकरा इति। ते हि प्रवृत्ति प्रति कार्यताज्ञानस्य कारणत्वमभ्युपगच्छन्ति। तथाहि—कार्यताज्ञानं द्विविधम्—मयेदं कर्तुं शक्यते इत्येवंरूपमेकम्, मयेदमवश्यं कार्यमित्येवंरूपं द्वितीयम्। तत्राद्यं पदार्थयोग्यतागम्यमिति न प्रवृत्तौ कारणम्। द्वितीयमिष्टसाधनत्वादिज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिहेतुः। अत एव इष्टसाधनत्वेनाज्ञाते मध्वन्नभोजने, वलवदनिष्टसाधनत्वेन ज्ञाते विषसंयुक्तान्नभोजने च न प्रवृत्तिः। निरुक्तस्य कार्यताज्ञानस्य इष्टसाधनत्वज्ञानाद्यभावेऽजननात्। प्रवृत्ति प्रति इष्टसाधनत्वज्ञानादीनां त्रयाणां कारणत्वकल्पनापेक्षया लाघवेन उक्तकार्यताज्ञानस्यैव चिकीर्षाद्वारा कारणत्वकल्पनं समुचितमेव। प्रकरणादिहेतुकतात्पर्यज्ञानस्य फलभूतशाब्दबोधकारणत्वकल्पनवत्। तस्मात् कार्यताज्ञानमेव प्रवर्तकमिति तदेव लोके विध्यर्थः।

वेदे तु कार्यं विध्यर्थः। तृप्तिकामः पचेदित्यादौ लोके पाकादौ तृप्तिरूपफलसाधनत्वस्य लौकिकप्रमाणगम्यत्वेन तेन रूपेणावगते पाकादौ काम्यसाधनताज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्वविशिष्टान्वये कार्यत्वान्वयो यथा भवितुमर्हति, तथा स्वर्गकामो यजेतेत्यादौ वेदे यागादौ कार्यत्वान्वयो न भवितुमर्हति। क्षणिकयागे काम्यस्वर्गसाधनत्वरूपयोग्यताऽभावेन तज्ज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्वविशिष्टान्वयरूपाया योग्यतायाः कार्यत्वान्वयप्रयोजिकाया अभावात्। अतोऽपूर्वरूपकार्यं विध्यर्थमङ्गीकृत्य स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्रथमबोधोत्तरत्रपूर्वोपस्थितौ तत्र द्वितीयबोधेन स्थायित्वस्वर्गसाधनत्वयोः ग्रहे तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध उपपादनीयः। अत एव च अतीन्द्रियस्य तस्य कार्यत्वोपपत्तिः। चतुर्थबोधस्तु प्रथमप्रतीतकृतेराश्रयान्वयलाभार्थम्। पञ्चमस्तु यागे असाधारणप्रवृत्त्युपपादनार्थमित्यलम्।

स्वर्गसाधनत्वज्ञानं विनेदृशं नियोज्यत्वं भासितुमर्हति । न वा यागे स्वर्गसाधनत्वं प्रथममेव शक्यं ज्ञातुम् । तद्धि साक्षात् परम्परया वा । नाद्यः । आशुविनाशिनो यागस्य कालान्तर भाविनि स्वर्गरूपफले साक्षादहेतुत्वात् । नान्त्यः । परम्पराघटकापूर्वानुपस्थितेः । अतो यागविषयकं कार्यमिति प्रथमबोधादपूर्वोपस्थितौ तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध इत्युक्तम् । नियोज्यत्वं च पदानुपस्थितमपि योग्यतया शाब्दबोधे भासते द्वारमित्यत्र पिधेहीतिवत् ।

गुणमतानुसारिणां प्राभाकराणां मतं प्रदर्शयितुमुपक्रमते—कार्यं विधिरिति । इत्थं हि तन्मतम्—प्रवृत्तिं प्रति कार्यताज्ञानमेव कारणम् । तच्च द्विविधम्—मयेदं कर्तुं शक्यते इत्येकम्, मयेदमवश्यं कार्यमिति द्वितीयम् । तत्राद्यं पदार्थयोग्यतागम्यमिति न प्रवृत्तौ कारणम् । द्वितीयन्त्विष्टसाधनत्वादिज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिहेतुः । अत एव इष्टसाधनत्वेनाज्ञाते मिष्टान्नभोजने, बलवदनिष्टसाधनत्वेन ज्ञाते विषसंयुक्तान्नभोजने च न जनानां प्रवृत्तिर्भवति । प्रोक्तस्य कार्यताज्ञानस्य इष्टसाधनत्वज्ञानाद्यभावेऽजननात् । प्रवृत्तिं प्रति इष्टसाधनत्वज्ञानादीनां त्रयाणां कारणत्वकल्पनापेक्षया लाघवेन कार्यताज्ञानस्यैव चिकीर्षाद्वारा कारणत्वकल्पनस्य समौचित्यात् । प्रकरणादिहेतुकतात्पर्यज्ञानस्य फलभूतशाब्दबोधकारणत्वकल्पनवत् । अतोऽवश्यं कार्यताज्ञानमेव प्रवर्तकं तदेव लोके विध्यर्थं इति प्राभाकरसिद्धान्तः ।

वेदे तु कार्यमेव विध्यर्थः । तृप्तिकामः पचेदित्यादौ लोके पाकादौ तृप्तिरूपफलसाधनत्वस्य लौकिकप्रमाणगम्यत्वेन तेन रूपेणावगते पाकादौ काम्यसाधनता ज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्वविशिष्टान्वये कार्यत्वान्वयो यथा भवितुमर्हति, तथा स्वर्गकामो यजेतेत्यादौ वेदे यागादौ कार्यत्वान्वयो न भवितुमर्हति । क्षणिकयागे काम्यस्वर्गसाधनत्वरूपयोग्यताऽभावेन तज्ज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्व-विशिष्टान्वयरूपाया योग्यतायाः कार्यत्वान्वयप्रयोजिकाया अभावात् । तस्मादपूर्वरूपकार्यं विध्यर्थमङ्गीकृत्य स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्रथमबोधोत्तरमपूर्वोपस्थितौ द्वितीयेन बोधेन स्थायित्वस्वर्गसाधनत्वयोः ग्रहे तद्द्वारा यागे साधनत्वग्रहः । प्रथमबोधविषयीभूतकृतेराश्रयान्वयलाभाय चतुर्थो बोधः । यागेऽसाधारणप्रवृत्त्युपपादनार्थं पञ्चमो बोध इति मूले पञ्चबोधप्रदर्शनमित्यवधेयम् ।

छिद्रेतरत्ववदिति । बाधज्ञानस्य विषयतायां सङ्कोचकतया सच्छिद्रेण घटेन जलाहरणसम्भवीतिबाधज्ञाने सति उक्तवाक्ये घटपद प्रयोज्यकरणताख्यविषयतायां यथा सच्छिद्रेतरत्वावच्छिन्नत्वं भासते तथेह नियोज्यत्वमपि ज्ञेयम् ।

हिन्दी—प्राभाकर का सिद्धान्त यह है—विध्यर्थ कार्य ही है क्योंकि वे प्रवृत्ति के प्रति कार्यत्वज्ञान ही को कारण मानते हैं। इसलिए 'स्वर्गकामो यजेत'

इत्यादि स्थलो में 'स्वर्गकामनियोज्यक' अर्थात् 'स्वर्गकामनारूप इष्टसाधन वाला याग-विषयक कार्य है' यह प्रथम बोध होता है। इष्ट-साधनज्ञान के साथ साथ यागविषयक-कार्य स्थायी स्वर्ग का साधन है यह द्वितीय वोध होता है। स्वर्गकामरूप इष्टसाधनार्थं याग स्वर्गकार्य के लिए हैं यह तृतीय वोध होता हैं। 'स्वर्ग चाहने वाला यज्ञकर्ता है' यह चतुर्थ बोध होता है। मैं स्वर्ग चाहता हूँ इसलिये याग मुझे करना चाहिये यह पञ्चमबोध हैं।

तब किसी ने यह कहा कि—प्रथम बोध जो 'स्वर्ग-काम के लिये यज्ञ करना चाहिये' है वही बोध हो तो कार्यत्व हो में शक्ति माननी चाहिये कार्य में नहीं।

पर ऐसा कहना ठीक नहीं क्योंकि यागा-क्रिया में नियोज्य के अर्थात् इष्टसाधन के ज्ञान में साथ अन्वय के विना कार्यत्व में अन्वय नहीं हो सकता।

नियोज्य तो उसको कहते हैं—कि जो क्रिया में इष्ट-साधन-ज्ञान के द्वारा मेरा कार्य हो सकता है इस प्रकार का बोधवाला हो। पर वह तो स्वर्गकामनाविशिष्ट में योग्यता के द्वारा मालूम पड़ता है। 'घटेन जलमाहर' अर्थात् 'घड़े से जल लाओ' यहाँ पर जिस घड़े में छिद्र नहीं हो उस घड़े से जल लाना सिद्ध होता है। वैसा याग में स्वर्गसाधनत्व-ज्ञान के विना नियोज्यत्व अर्थात् कार्य में तत्परता नहीं आती है। या यज्ञ में प्रथम स्वर्गसाधनत्व ही ज्ञान नहीं हो सकता जब तक यज्ञ नहीं ठाने। वह साक्षात् भी नहीं हो सकता क्योंकि शीघ्र नष्ट होने वाला यज्ञ के कालान्तर में होने वाला स्वर्गरूप फल में साक्षात् कारण नहीं हो सकता। परम्परया भी नहीं हो सकता क्योंकि परम्परा के द्वारा भी अपूर्व प्राप्ति नहीं देखी जाती। इसलिए 'यज्ञ करना मेरा कार्य है' इस प्रकार प्रथम बोध से ही अपूर्व की प्राप्ति हो जाती है बाद उसके द्वारा यज्ञ में स्वर्ग-साधन का ज्ञान होता है, और तब उसमें कार्य करने का बोध होता है ऐसा कहा जा चुका है। यद्यपि नियोज्यत्व अर्थ किसी पद के द्वारा प्राप्त नहीं होता किन्तु शाब्दबोध में वह भासित होता है। तथापि जिस प्रकार 'द्वारम्' कहने के बाद 'पिधेहि' की ज्ञान हो जाता है उसी प्रकार नियोज्यत्व का भी बोध होता है।

प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः प्रवर्तकं च कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां ज्ञानम्। अतस्तेषु लिङ्गशक्तित्रयम्। सुमेरुशृङ्गाहरणनिष्फलाचरणमधुविषसंपृक्तान्नभोजनेषु प्रवृत्तिवारणाय यथा संख्यं त्रयाणामेव ज्ञानं प्रवर्तकम्।

यत्तु समुदिते शक्तिरेकैवेति। तन्न। विशेष्यविशेषणभावे विनिगमकाभावेन त्रिष्वेव पृथक्शक्तेः। एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामीयो यागः कृतिसाध्यः, इष्टसाधनं बलवदनिष्टाननुबन्धी चेति बोध इत्येके।

वस्तुतो नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया तादृशया-

गानुकूलकृतिमान् स्वर्गकाम इत्येव बोधः। कृतिसाध्यत्वं च प्रवृत्तिसाध्यत्वम्। अतो न समुद्रतरणादौ प्रवृत्तिः इष्टसाधनत्वं चेष्टनिष्ठासाध्यतनिरूपकत्वमतो न तृप्तस्य भोजने प्रवृत्तिः। बलवदनिष्टानुबन्धित्वं तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्। नहि सुखं दुःखैर्विना लभ्यते इति न्यायेन नान्तरीकं किञ्चिद् दुःखमिष्टोत्पत्ताववश्यं भावि तदतिरिक्तदुःखराहित्यमेव तत्त्वम्।

'ब्राह्मणो न हन्तव्यः' इत्यादौ नञः कृतिसाध्यत्वेष्टसाधनत्वनिषेधे स्वारस्याभावात्तेन बलवदनिष्टानुबन्धित्वनिषेधाद् ब्राह्मणबधो बलवदनिष्टजनक इत्यर्थः पर्य्यवस्यति। एतेन समुदिते लिङः शक्तिकल्पनमपास्तम्।

नैयायिकसम्मतं लिङर्थमभिधत्ते—प्रवर्तकेति। प्रवर्तकं प्रवृत्तिजनकं यज्ज्ञानं तद्विषयस्तद्विषयको विधिरित्यर्थः।

प्रवर्तकस्य लक्षणमाह—प्रवर्तकञ्चेति। लक्षणे कृतिसाध्यत्वेष्टेतिदानेन न सुमेरुशृङ्गाहरणे कस्यापि प्रवृत्तिः। नापि निष्फलजलताडने कस्यापि प्रवृत्तिर्भवति। अनिष्टत्वात्। कृतिसाध्यत्वज्ञानस्य प्रवर्तकत्वास्वीकारे सुवर्णशृङ्गारोहणं सुवर्णरूपं मदिष्टसाधनं तथा बलवदनिष्टानुबन्धि चेतिज्ञानेमात्रेण तत्र प्रवृत्त्यापत्तिः। तथा इष्टसाधनस्याप्रवर्तकत्वे निष्फलजलताडनादावपि प्रवृत्त्यापत्तिः। बलवदनिष्टाननुज्ञानस्याप्रवर्तकत्वे मधुविषसंपृक्तान्नभक्षणेऽपि प्रवृत्त्यापत्तिरिति बोध्यम्।

समुदिते एकामेव शक्तिं मन्वानानां मतं प्रदर्श्य निरस्यति—यत्त्विति। शक्तिरेकैवेति। फलव्यापारयोर्धातोरिव लिङोऽपि उक्तार्थत्रये एकैव शक्तिः स्वीक्रियताम्। खण्डत्रये चास्याः त्रिपूक्तेष्वर्थेषु च शक्तिबाहुल्ये शक्यतावच्छेदकबाहुल्येन गौरवञ्च परिहीयताम्। विशेष्यविशेषणभावश्च तात्पर्यनिश्चयविशेषबलाद् भविष्यतीति तत्रापि नैव किञ्चिद् वैषम्यमिति यत्त्वित्यादिग्रन्थस्य तात्पर्यम्।

तत्खण्डयति—तन्नेति। खण्डनग्रन्थस्यायमभिप्रायः—विशेष्यविशेषणभावे कस्यापि प्रमाणस्याभावेन त्रिष्वपि पृथक् पृथक् शक्तिर्मन्तव्येति।

बलवदनिष्टाननुबन्धित्वलक्षणे—स्वजन्येष्टोत्पत्तीति।

स्वं यागः, तज्जन्येष्टोत्पत्तौ, स्वर्गे नान्तरीयकोपमादिजन्यदुःखात् अधिकदुःखाजनकत्वमिति लक्षणसमन्वयः।

नान्तरीयकेति। अवश्यंभावीत्यर्थः। इष्टत्वमिह सुखसाधनत्वेनेच्छाविषयत्वम्। नत्विच्छाविषयत्वमात्रम्? तद्भिन्नत्वमनिष्टत्वम्।

बलवदनिष्टजनकमिति। ब्रह्महत्या सुरापानमिति स्मृतिवचनेन ब्रह्मबधस्य पापजनकत्वम्। तस्य च नरकयातनोपकारकत्वेनानिष्टजनकत्वम्।

स्वर्गकामीयो याग इति। स्वर्गकामीयो याग इत्यन्वयबोधे स्वर्गकामपुरुषस्य

स्वकर्तृकत्वसंसर्गेणैव यागेऽन्वयो वाच्यः। स चासम्भवः। नानार्थनिष्ठभेदसंसर्गाव-च्छिन्नप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबोध प्रति विशेष्यतासंसर्गेण प्रत्यय-जन्योपस्थितेः कारणत्वेन फलितोक्तव्युत्पत्तिविरोधादेवेति मनसि निधायोक्तम्—वस्तुत इत्यादि।

हिन्दी—नैयायिक लोगों ने प्रवृत्तिजनक ज्ञान ही को विधि माना है। प्रवृत्ति-जनक तीन हैं—कृतिसाध्यत्व ज्ञान, ( यत्नसाध्य वस्तु क्या है उसका ज्ञान ) इष्टसाधनत्व ( इष्टसाधन क्या है—उसका ज्ञान ) बलवदनिष्टाननुबन्धित्वज्ञान अर्थात् बलवन् अनिष्ट को जो नहीं लाने वाला हो उसका ज्ञान। इसलिये इन्हीं तीनों में लिङ् की शक्ति है।

यदि प्रवृत्ति में कृति साध्यत्वज्ञान आवश्यक नहीं माना जाय तो मनुष्य सुमेरु पहाड़ की चोटी पर चढ़ सकता है किन्तु वह यत्नसाध्य नहीं है इसलिये सुमेरु शृङ्गाहरण में तथा तदारोहण में प्रवृत्ति नहीं होने पाती।

प्रवृत्ति में यदि इष्टसाधनत्व ज्ञान आवश्यक नहीं माना जाय तो निष्फल जलताडन में मनुष्यों की प्रवृत्ति होने लगेगी किन्तु जलताडन से कोई भी इष्टसाधन नहीं होने पाता इसलिये जलताडन, समुद्र-लङ्घनादि में प्रवृत्ति नहीं होने पाती।

प्रवृत्ति में यदि बलवदनिष्टाननुबन्धित्वज्ञान आवश्यक नहीं माना जाय तो मनुष्यों को मधुविष से मिले हुए अन्नों के खाने में भी प्रवृत्ति होने लगेगी किन्तु वह बलात्कार अनिष्ट करने वाला है ऐसा विचार कर उसमें प्रवृत्ति नहीं होने पाती इसलिये क्रमशः तीनों का ज्ञान प्रवर्तक है यह नैयायिकों का मत है।

किसी ने यह जो कहा है कि जिस प्रकार फल और व्यापार दोनों में धातु की शक्ति है उसी प्रकार उक्त तीनों अर्थों में एक ही मानें, तीनों के पृथक् पृथक् शक्ति मानने में शक्ति के बाहुल्य से गौरव भी नहीं होगा। तात्पर्य के निश्चय विशेष्य बल से विशेष्य-विशेषणभाव भी सिद्ध है।

किन्तु यह कहना ठीक नहीं, तात्पर्य-निश्चय-बल से विशेष्य-विशेषणभाव मानने में कोई प्रमाण नहीं है इसलिए तीनों में पृथक् शक्ति मानना आवश्यक है। ऐसी समस्या में 'स्वर्गकामो यजेत' इत्यादि स्थलों में 'स्वर्गकामीय याग यत्नसाध्य है उससे इष्ट का साधन होता है और बलवत् अनिष्ट नहीं करने वाला है ऐसा कोई कोई कहते हैं।

यथार्थ में तो नामार्थ धात्वर्थ के भेदेन साक्षात् अन्वय अव्युत्पन्न है इसलिए यागा-नुकूलयत्न से स्वर्गकामना सिद्ध होती है यही भेद होता है। प्रवृत्तिसाध्य ही कृतिसाध्य ( यत्नसाध्य ) है इसलिये समुद्र तैरने आदि में प्रवृत्ति नहीं होती। इष्टसाधन उसी को कहते हैं जो इष्टवस्तु के साधन में उपकारक हो। इसलिये तृप्त मनुष्य को भोजन में प्रवृत्ति नहीं होती है।

बलवदनिष्टाननुबंधित्व उसी को कहते हैं कि जो यज्ञ से उत्पन्न होनेवाली इष्टोत्पत्ति में अवश्यंभावी अधिक से अधिक दुख को पैदा नहीं कर सके 'बिना दुःख के सुख नहीं मिलता है' इस न्याय के अनुसार अवश्यंभावी कुछ न कुछ दुःख इष्टोत्पत्ति में जरूरी रहता है। उससे अतिरिक्त दुःखरहित ही को सुख कहते हैं'।

'ब्राह्मणो न हन्तव्यः,' अर्थात् 'ब्राह्मण को नहीं मारना चाहिये' इत्यादि स्थलों में कृतिसाध्यत्व इष्टसाधनत्व इन दोनों के निषेध में तात्पर्य नहीं है किन्तु बलवदनिष्टाननुबन्धित्व निषेध से ब्राह्मणवध बलवत् अनिष्ट करने वाला है इसमें तात्पर्य है। इस लिये समुदित तीन अर्थ में लिङ् की एक ही शक्ति कल्पना सर्वथा विरुद्ध है।

यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येति व्युत्पत्या नञर्थे बलवदनिष्टाननुबन्धित्वान्वयोऽसम्भवी, तथाप्यन्यथाऽनुपपत्या एतदतिरिक्तस्थले एव सा व्युत्पत्तिः। अत एव नातिरात्रे षोडशिनं गृह्णातीत्यादौ षोडशिग्रहणाभाव इष्टसाधनमिति बोध इति दीधितिकृतः। न हन्तव्य इत्यादौ हननाभावविषयकं कार्यमिति बोध इति गुरवः। ननु पचतीत्यादौ लडाद्यर्थवर्त्तमानत्वादेर्यत्ने एवान्वयान्न सा व्युत्पत्तिः। मैवम्। यत्र प्रत्ययत्वं तत्र प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्याप्तेः। यः प्रत्ययार्थः स प्रकृत्यर्थस्य विशेष्यतया भासते इति व्याप्तेश्च॥

नञर्थे बलवदनिष्टान्वयसम्भवं प्रदर्शयति—यद्यपीति। 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येतिव्युत्पत्तेः फलितार्थं एव 'प्रत्ययार्थः प्रकृत्यर्थेनैवान्वेति' इति। अतएव पचन्तं पश्य पचमानं पश्येत्यत्र द्वितीयार्थकर्मत्वयोर्धात्वर्थेऽन्वयमुररीकृत्य केवलपाकदर्शनादेर्न बोधः, किन्तु शत्राद्यर्थ एवान्वयेन पाककर्तृदर्शनदशायामेव तादृक्प्रयोग इत्यलम्।

यः प्रत्ययार्थ इति। प्रकृत्यर्थनिष्ठविशेषणतानिरूपित-विशेष्यतावान् प्रत्ययार्थ इति फलितोऽर्थः। अत एव पचतीत्यत्र पाके कृतिर्विशेष्यतया भासते।

हिन्दी—यद्यपि 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्य' अर्थात् 'प्रत्ययार्थ प्रकृत्यर्थ के साथ अन्वित होकर स्वार्थ का बोधक होता है' इस व्युत्पत्ति के द्वारा नञर्थ में बलवत् अनिष्ट का अन्वय असम्भव है तो भी अगत्या नञर्थ से अतिरिक्त स्थल में ही वह व्युत्पत्ति लगती है ऐसा मानना आवश्यक है।

इसीलिये 'नातिरात्रे षोडशिनं गृह्णाति 'अतिरात्र में षोडशी को ग्रहण नहीं करे' यहाँ षोडशिग्रहण का अभाव इष्टसाधन है यह बोध होता है ऐसा दीधितिकार का कहना है।

'ब्राह्मणो न हन्तव्यः' यहाँ हननभाव - विषयक कार्य है यह गुरु लोगों का विचार है।

यदि यह कहें कि 'पचति' इत्यादिस्थलों में लडाद्यर्थ वर्तमानत्व आदि के यत्न ही में अन्वय हो जायगा उस व्युत्पत्ति की क्या आवश्यकता ? पर यह कहना ठीक नहीं क्योंकि 'जहाँ प्रत्ययार्थ रहता है वहाँ प्रकृत्यर्थ का अन्वय होता है' जो प्रत्ययार्थ है वह प्रकृत्यर्थ का विशेष्य है यह व्याप्ति जागृत है इसलिए प्रोक्त व्युत्पत्ति मानना आवश्यक है।

लेटस्तु यच्छब्दासमभिव्याहृतस्यैव विधिरर्थः समिधो यजतीत्यादौ विधिप्रत्ययात्। देवांश्च याभिर्यजते ददाति च य एवं विद्वानमावास्यां यजते इत्यादौ तदप्रत्ययादिति ॥

हिन्दी—यत् शब्द से रहित ही लेट् लकारका विधि अर्थ होता है यत् शब्द के साथ जब लेट् लकार रहता है तो विध्यर्थ का भान नहीं होने पाता। क्योंकि 'समिधो यजति' में विध्यर्थ का भान होता है और 'देवांश्च याभिर्यजते ददाति च य एवं विद्वानमावास्यायां यजते' यहाँ विध्यर्थ की प्रतीति नहीं होती।

लृङ्स्तु भूतत्वं क्रियातिपत्तिश्चार्थः। अतिपत्तिरनिष्पत्तिरापादनारूपा। सा च शक्या। सा चापादना तर्कः। तर्कत्वं च मानसत्वव्याप्यो जातिविशेषः। एधांश्चेदलप्स्यत ओदनमपक्ष्यत् इत्यादौ एधकर्मको भूतत्वेनापादनाविषयो यो लाभस्तदनुकूलकृतिमान् ओदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमांश्चेति बोधः। भविष्यति क्रियातिपादनेऽपि लृङ्। यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यदिति प्रयोगदर्शनात्। भूतत्वभविष्यत्त्वयोर्बोधनियमस्तात्पर्यात्। यदि स्यादित्यादौ लिङोऽप्यापादनायां शक्तिः। यदिनिर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्यादौ तस्या एव प्रतीतेः। लाघवेन स्थानिनां वाचकत्वात् सङ्ख्यापि लकारार्थः।

इति दशलकारादेशार्थनिरूपणम्

---

नैयायिकमते लृङर्थं निरूपयति-लृङस्त्विति। तर्क इति। व्याप्यारोपेण व्यापकारोपस्तर्क इति भावः। आरोपश्चाहार्यज्ञानम्। तच्च बाधकालीनेच्छाजन्यज्ञानरूपम्। यथा निर्वह्निः स्यान्निर्धूमः स्यादिति। अत्र किल व्याप्यस्य वह्न्यभावरूपस्य आरोपेण व्यापकस्य धूमाभावस्यारोपः। 'एधांश्चेदलप्स्यत' इत्यादौ एधाभावात् ओदनाभाव आरोप्यत इति सारांशः।

सुवृष्टिश्चेदिति। अत्र सुभिक्षभवने सुवृष्टिभवनं कारणमतो हेतुहेतुमद्भावे क्रियाया असिद्धौ धातोर्लृङ्लकारस्य सिद्धिस्तेन सुवृष्टिभवनहेतुकं सुभिक्षभवनमिति बोधः समुपपद्यते। भूतत्वभविष्यत्त्वयोर्बोधनियमस्तु तात्पर्यात् तात्पर्यनिश्चयवशात्

इत्यर्थः। यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्यत्रापादनायाः प्रतीतेर्यदि स्यादित्यादौ लिङ्गोप्यापादनायां शक्तिर्मन्तव्येति बोध्यम्।

संख्याया अपि लकारार्थत्वं निर्दिशति—लाघवेनेति। आदेशानां बाहुल्यात् स्थानिनामेव वाचकत्वमभ्युपेयम् तेन संख्याया अपि लकारार्थत्वं बोध्यम्।

इति तत्त्वप्रकाशिकाख्यायां व्याख्यायां दशलकारादेशार्थनिरूपणम्।

—*—

हिन्दी—लृङ् लकार का अर्थ भूत और क्रिया की असिद्धि अर्थ है। अतिपत्ति अर्थात् अनिष्पत्ति ( असिद्धि ), जो आपादनारूप है। आपादना तर्क को कहते हैं। वह मन में रहने वाला है जिसे तर्कवितर्क कहते हैं। जैसे—लकड़ी यदि मिलती तो भात पक जाता यह उदाहरण लृङ्निष्ठभूत अर्थ का है।

'यदि सुन्दर वृष्टि होगी तो सुभिक्ष होगा' यह उदाहरण लृङ्निष्ठ भविष्यत् क्रियातिपत्ति अर्थ का है। भूत भविष्यत् का बोध का निर्णय तात्पर्य के निश्चयवश से होता है।

'यदि स्यात्' इन स्थलों में लिङ् आपादना में अर्थ तर्क में भी शक्ति है क्योंकि यदि आग नहीं होती तो धूम भी नहीं होता। यहाँ आपादान अर्थ की प्रतीति होती है। लकार का अर्थ संख्या भी होता है क्योंकि स्थानी ही को वाचक मानने में लाघव है। आदेश तो बहुत हैं इसलिए उसे वाचक मानने में गौरव है।

इति हिन्दीभाषायां दशलकारादेशार्थनिरूपणम्।

—*—

## अथ कारकार्थनिरूपणम्

कर्ता कर्म च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहुः कारकाणि षट्॥

तत्र क्रियानिष्पादकत्वं कारकत्वम्[1] तच्च कर्त्रादीनां षण्णामपि। तत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम्।

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते।

इति हर्युक्तेः। अन्यकारकनिष्ठो व्यापारस्तु न प्रकृतधातुवाच्यः। यथा वह्निना पचतीत्यत्र वह्निनिष्ठः प्रज्वलनादिः। अन्यकारकनिष्ठव्यापाराश्रयस्य कर्तृत्ववारणाय धातुवाच्येति। तत्रोक्ते तु कारकमात्रे प्रथमैव। तिङसमानाधिकरणे प्रथमा अभिहिते प्रथमेति वार्तिकद्वयात्।

सूत्रमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः। तस्य चाख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम्। अत एवाख्यातार्थद्वारकक्रियान्वयात् तदर्थस्य क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः।

---

१. ननु परम्परया क्रियान्वितस्य कारकत्वे राज्ञः पुरुषमानयेत्यादौ राजादीनामपि कारकत्वापत्तिः। न च क्रियानिष्ठविषयताविशिष्टविषयताश्रयत्वं कारकत्वम्। विषयतावै० साक्षात् परम्परया वा स्वनिरूपितत्वम्, स्वनिरूपितविषयतासामानाधिकरण्यम् एतदुभयसम्बन्धेन। तथाच–राजनिष्ठविषयतायाः परम्परया क्रियाविषयतानिरूपितत्वेऽपि क्रियाविषयतानिरूपितविषयतासामानाधिकरण्याभावान्न राज्ञः कारकत्वापत्तिरिति वाच्यम्। सुन्दरस्य राज्ञः पुरुषमानयेत्यादौ सुन्दरपदार्थस्य परम्परयाक्रियाविषयतानिरूपितराजपदार्थनिष्ठविषयतासमानाधिकरणसुन्दरत्वावच्छिन्नविषयताश्रयत्वेन कारकत्वापत्तेः। साक्षात् क्रियाविषयतानिरूपितविषयतासामानाधिकरण्यनिवेशेऽपि चैत्रेण स्वस्य पुत्रो दृश्यते इत्यत्र चैत्रस्य स्वपदार्थत्वेनापि कारकत्वापत्तिः, सुन्दरश्चैत्रो गच्छतीत्यादौ सुन्दरपदार्थस्य कारकत्वानापत्तिश्चेति चेन्न। कारकत्वव्याप्यकर्तृत्वकर्मत्वादिसम्बन्धेतरसम्बन्धाघटितपरम्परया क्रियाविषयतानिरूपितविषयताश्रयस्यैव कारकत्वस्वीकारात्। चैत्रो गच्छतीत्यादौ आख्यातार्थाश्रये चैत्रस्य विशेषणत्वेऽपि अभेदस्य सम्बन्धत्वाभावेन तस्य सम्बन्धानवच्छिन्नतया तद्घटितपरम्परायाः कर्मत्वादिसम्बन्धेतरसम्बन्धाघटितत्वात् कारकत्वम्। चैत्रेण स्वस्य पुत्रो दृश्यते इत्यादौ

चैत्रो भवतीत्यत्र एकत्वावच्छिन्नकर्तृकं भवनमिति बोधः। आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमयाऽनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इति तात्पर्यम्।

कर्माख्याते तु चैत्रेण ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः।

कारकषट्कं निर्देष्टुमुपक्रमते--अथेति। अत्राथशब्दो मङ्गलार्थः। निरूप्यन्त इति। निरूपयतेरर्थस्तु स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धनानाधर्मप्रकारकज्ञानानुकूलो व्यापारः। तथा च मद्वृत्तिव्यापारजन्यकारकत्वव्याप्यमिथोविरुद्धकर्तृत्वादिधर्मप्रकारकज्ञानविषयता कर्त्रादिवृत्तिरिति वाक्यार्थः पर्यवस्यति।

क्रियानिष्पादकत्वमिति। निष्पादयति उत्पादयति इति निष्पादकः क्रियाया निष्पादकः क्रियानिष्पादकस्तस्य भावस्तत्त्वम्, क्रियानिष्पादकत्वम् क्रियाजनकत्वमित्यर्थः, जनकत्वेन क्रियान्वयित्वं वा कारकत्वम्। 'करोति क्रियां निवर्तयति' इति भाष्ये व्युत्पत्तिदर्शनात्।

कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थाश्रयत्वम् कर्तृत्वम्' इत्यन्ये वदन्ति।

तत्र कालिकसम्बन्धेन व्यापाराश्रयेऽतिप्रसङ्गवारणाय व्यापारतावच्छेदकसम्बन्धेनेति निवेशः। तथाच ग्रामं गच्छतीत्यादौ उत्तरसंयोगात्मके फले तादृशधात्वर्थत्वाभावात्तदाश्रये नोक्तदोषः। पक्वस्तण्डुलो देवदत्तेनेत्यादौ फलस्य विशेष्यत्वेन देवदत्तेऽतिव्याप्तिवारणाय कर्तृप्रत्ययसमभिव्याहार इति निवेशः। कारकेषु षट्सु प्रथमोपस्थितत्वात्कर्तारं लक्षयति--तत्र प्रकृतधातुवाच्येति। प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वमित्यर्थः।

अतएव माषेष्वश्वं बध्नातीत्यत्र गलाधःसंयोगानुकूलव्यापारमादाय माषाणां न कर्मत्वम्। अश्वस्य प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वरूपकर्तृत्वाभावात् इत्यवधेयम्।

प्रोक्तकर्तृत्वलक्षणेऽन्यानधीनव्यापाराश्रयत्वे सतीति निवेशोऽप्यावश्यकः। अन्यथा 'रामेण बाणेन हतो वाली' रामो बाणेन वालिनं हन्तीत्यादौ बाणादीनामपि कर्तृत्वापत्तेः। प्रकृत-हन् वाच्यप्राणवियोगानुकूलव्यापारस्य बाणे सत्त्वेन कर्तृत्वस्य दुर्वारत्वात्। तत्र व्यापाराभावे करणत्वस्यैवासङ्गत्यापत्तेरित्यवधेयम्।

---

तु स्वपदार्थस्य पुत्रपदार्थे निरूपितत्वसम्बन्धेन विशेषणत्वात् तदघटितपरम्परायाः कर्तृत्वादिसम्बन्धेतरसम्बन्धघटितत्वान्न कारकत्वम्। कटादेरधिकरणस्यापि परम्परया क्रियान्वयेऽपि तदघटितपरम्परायाः कर्तृत्वादीतरसम्बन्धाघटितत्वान्न कारकत्वानुपपत्तिरिति दिक्।

धातुनोक्तक्रिये इति। धातुना उक्तक्रिये कारके कर्तृता नित्यमिष्यते इत्यन्वयः। तेन यस्य व्यापारो यदा धातुनाऽभिधीयते, तदा स कर्तेति, स्थाली पचतीत्यादीनां सङ्गतिः।

तत्रोक्ते त्विति। कारकविभक्तिविधायकेषु कर्मणि द्वितीयेत्यादिसूत्रेषु 'अनभिहिते'। इत्यधिकारेण अनभिहिते कर्मादौ द्वितीयाविधानात् इति भावः।

वार्तिकद्वयादिति। उभयत्र वार्तिके कारके इत्यधिकारात् तिङर्थनिष्ठविषयतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारताश्रये कारके वर्तमानात् एवं तिङ्कृदाद्यन्यतमप्रयोज्याभिधानविषयताश्रये कारके वर्तमानाच्च प्रातिपदिकात् प्रथमेति वार्तिकद्वयस्य क्रमेणार्थोऽवसेयः।

एकत्वावच्छिन्नेति। तिङर्थैकत्वसंख्यायाः कर्तरि अन्वयात् वैयाकरणमते व्यापारमुख्यविशेष्यकबोधाच्चेत्याशयः।

कर्माख्याते तु तृतीयायाः कर्तरि विधानात्कर्तृत्वमर्थः, तत्र चैत्रस्याभेदसम्बन्धेनान्वयः कर्तुश्च वृत्तित्वसम्बन्धेन धात्वर्थव्यापारे, तस्य जन्यत्वसम्बन्धेन संयोगरूपफले तत्रैव निष्ठत्वसम्बन्धेन ग्रामादिकर्मणः ग्रामे चाख्यातार्थसंख्याया अन्वयस्तेनोक्तशाब्दबोधः संघटते।

चैत्रकर्तृक-व्यापारजन्य इति। अत्रायं निष्कर्षः—चैत्रेणेतिकर्तृतृतीयायाः कर्तार्थः। तेन सह चैत्रस्याभेदः, वृत्तित्वञ्च संसर्गतया भासते। धातोस्तु फलव्यापारयोः खण्डशः शक्तिः। तेन तयोर्विशेषणभावव्यत्यासः। एवञ्च चैत्राभिन्नकर्तृवृत्तिव्यापारजन्येत्यर्थं इति तात्पर्यम्।

हिन्दी—आचार्यों ने छः कारक कहा है। कर्ता, कर्म, करण, सम्प्रदान, तथा अपादान और अधिकरण।

उसमें क्रिया का निष्पादन ( सिद्धि ) जिससे हो उसे कारक कहते हैं, या क्रिया के साथ अन्वय जिसमें हो वह कारक है या क्रिया का जनक जो हो वह कारक है, इस प्रकार कारक के तीन लक्षण हो सकते हैं।

१ क्रियानिष्पादकत्वम् कारकत्वम्।

२ क्रियान्वयित्वम् कारकत्वम्।

३ क्रियाजनकत्वं वा कारकत्वम्।

यह तीनों लक्षण छहों कारकों में घटता है। इन कारकों में धात्वर्थव्यापार का जो आश्रय हो वह कर्ता है। क्योंकि हरि ने भी कहा है—कि 'धातु से उक्तक्रिय कारक में कर्तृधर्म रहता है' इसलिये कर्ता के तीन लक्षण हो सकते हैं—

१ प्रकृतधात्वार्थव्यापारश्रयत्वम् कर्तृत्वम्।

२ प्रकृतधातुवाच्यव्यापाराश्रयत्वम् कर्तृत्वम।

३ व्यापाराश्रयत्वम् कर्तृत्वम् ।

किन्तु निष्कृष्ट और निर्दुष्ट लक्षण यह है—

'कर्तृप्रत्ययसमभिव्याहारे व्यापारत्वावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थाश्रयत्वम् कर्तृत्वम्'

इस लक्षण में यदि 'कर्तृप्रत्ययसमभिव्याहारे' यह नहीं कहा जाय तो पक्वस्तण्डुलो देवदत्तेन' इत्यादि स्थलों में फल की विशेष्यता से देवदत्त में अतिव्याप्ति हो जायगी। यदि 'व्यापारत्वावच्छेदकसम्बन्धेन' यह नहीं कहा जाय तो कालिकसम्बन्ध से जो फलाश्रय हो वहाँ भी अतिप्रसङ्ग होने लगेगा।

उसमें कर्तृकारकनिष्ठ व्यापार ही प्रकृत धातुवाच्य है। अन्य कारकनिष्ठ व्यापार प्रकृतधातुवाच्य नहीं कहा सकता। जैसे 'वह्निना पचति' में वह्निनिष्ठ प्रज्वलनादि प्रकृतधातुवाच्य नहीं हो सकता।

कर्तृकारक से भिन्न कर्मादिकारक में व्यापाराश्रय कर्ता न हो जाय इसलिये लक्षण में धातुवाच्य कहा गया है, उसमें किसी से जब उक्त हो जाय तो सकलकारक में प्रथमा ही होती है क्योंकि इसमें दो वार्तिक प्रमाण हैं, एक 'तिङ्समानाधिकरणेप्रथमा' दूसरा 'अभिहिते प्रथमा'। सूत्रकार के मत में कर्तृकर्माद्यर्थक प्रत्यय से कर्त्ता आदि के उक्त हो जाने से प्रथमा का अर्थ प्रातिपदिकार्थ ही है उसका तिङर्थक कर्ता आदि के के साथ अभेदान्वय होता है इसलिये प्रथमार्थ का कारकत्व है। इसी कारण तिङर्थ क्रिया के साथ अन्वय होने से क्रियाजनकत्वेन भाष्य में प्रथमा का कारकविभक्तित्वेन व्यवहार किया गया है।

'चैत्रो भवति' यहाँ पर 'एकत्वावच्छिन्न-चैत्रकर्तृकं भवनम्' अर्थात् एक चैत्र होता है' यह जो बोध होता है वह आख्यात कृतादि से कर्तादि के उक्त हो जाने पर भी प्रथमा से कर्ता में अप्रादुर्भूत शक्ति का प्रतिपादन किया जाता है यह तात्पर्य है।

कर्माख्यात 'चैत्रेण ग्रामो गम्यते' इत्यादि स्थलों में 'चैत्रकर्तृकव्यापारजन्यः एकत्वावच्छिन्न-ग्रामाभिन्न-कर्मनिष्ठः संयोगः' अर्थात् चैत्रकर्तृक जो व्यापार उस व्यापार के द्वारा एक ग्राम में संयोग होना है यह बोध होता है।

सम्बोधनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन 'विधे-

१ विधेयक्रियायामिति। "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते'॥ इति हर्युक्तेर्विधेयक्रियायामेव सम्बोधनप्रथमान्तार्थान्वियलाभात् प्रवृत्तिनिवृत्त्योश्च तत्फलत्वात् प्रवर्तनादिविषयक्रियायामेव तदन्वयः। अत एव व्रजानि देवदत्तेत्यादौ जानीहीत्यादिः शेष आवश्यकः। अस्मत्पदार्थकर्तृकव्रजनस्य देवदत्तोद्देश्यकप्रवर्तनाविषयत्वाभावात्। विधेयक्रियायामन्वयोऽपि लोडर्थप्रवर्तनान्वयद्वारकः। प्रवर्तनायामुद्देश्यतानिरूपकत्वसम्बन्धेन प्रकृत्यर्थान्वयः। तस्याश्च विषयतासम्बन्धेन धात्वर्थे। अभिमुखीभावमात्रसम्बोधनस्य प्रकृत्यर्थे

यत्क्रियायामन्वयात् क्रियाजनकत्वरूपं कारकत्वम्। देवदत्त त्वं गच्छेत्यादौ अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयो गमनमिति बोधः। अत एव —

**आशयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।**
**यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः॥**

इत्यभियुक्तोक्तम्—

सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।

इति भाष्यं च सङ्गच्छते। अनुक्तकर्त्रादिषु तृतीयादयो विभक्तयः, अनभिहिताधिकारे तासां विधानादित्यन्यत्र विस्तरः।

सम्बोधनप्रथमायाः साम्प्रतं विचारमारभते—सम्बोधनप्रथमार्थस्यापीति।

विधेयक्रियायामिति। अयम्भावः—

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते॥

---

एवान्वयः। अभिमुखीभावश्च प्रयोक्तृवचनार्थज्ञानायादरवैशिष्ट्येनावस्थानम्। अयमेव प्रयोक्त्रिच्छाविषयप्रकृतवाक्यार्थविषयकबोधानुकूलो व्यापारः। तदाश्रयत्वं सम्बोध्यत्वम्। एतद्व्यापारानुकूलस्य सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपप्रयोक्तृव्यापारस्येतरनैरपेक्ष्येणैव प्रतीतेस्तस्य न वाक्यार्थत्वम्। अभिमुखीभावस्यापि प्रातिपदिकार्थत्वमेव। तथा च राम मां पाहीत्यादौ अभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणमिति बोधः। राम देवदत्तं मां पाहीत्यादौ च देवदत्तरक्षणं रामोद्देश्यकनिवर्त्तनाविषय इति बोधः। व्रजानि देवदत्तेत्यादौ जानीहीत्यध्याहारस्वीकारादेव सम्बोधनस्य कर्तृत्वव्यवहारो वृद्धोक्तः संगच्छते। अन्यथा व्रजनक्रियाकर्तृत्वस्याभावात्। तत्र स दुरुपपादः। अस्माकं तु सूपपादः। तस्यैव त्वं पदार्थत्वेन आध्याहृतक्रियाकर्तृत्वात्। अत एव च तिङ्समानाधिकरणे प्रथमेति वार्तिकमते प्रथमा सिध्यति। तिङ्समानाधिकरणयुष्मत्पदसमानाधिकरणत्वात्। तद् ध्वनयन्नाह—अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थेति। अत्र च श्रूयमाणपदवृत्त्यैव बोधस्वीकारात् देवदत्तपदेनैव लक्षणया देवदत्तोद्देश्यकप्रवर्तनाविषयज्ञानरूपवाक्यार्थबोधनात् 'एकतिङ् वाक्यम्' इति परिभाषित वाक्यलक्षणमपि समन्वेतीति आमन्त्रितनिघातसिद्धिः। एतेन अध्याहृतक्रियायामन्वये व्रजानीत्यनेनैकवाक्यत्वाभावान्निघातो न स्यादित्यपास्तम्। नद्यास्तिष्ठति कूले इत्यादाविव परम्परया व्रजानीत्यनेनान्वयस्य अध्याहृतक्रियान्वयेऽपि सत्त्वेनैकवाक्यत्वस्य सुलभत्वाच्चेति दिक्।

इति हरिकारिकानुसारं विधेयक्रियायामेव सम्बोधनप्रथमान्तार्थस्यान्वयलाभात् प्रवृत्तिनिवृत्त्योश्च तत्फलत्वात् प्रवर्तनादिविषयक्रियायामेव तस्यान्वयः। अतएव—

व्रजानि देवदत्तेत्यादौ जानीहीतिक्रियादानमावश्यकम्। अस्मत्पदार्थकर्तृकव्रजनस्य देवदत्तोद्देश्यकप्रवर्तनाद्विषयत्वाभावात्। विधेयक्रियायोग्यान्वयोऽपि लोडर्थप्रवर्तनाद्वारैव प्रकृत्यर्थस्य चोद्देश्यतानिरूपकत्वसम्बन्धेन प्रवर्तनायामन्वयः।

तत्राभिमुखीभावश्च—प्रोक्तृवचनार्थज्ञानाय आदरवैशिष्ट्येन अवस्थानम्। सम्बोधन-प्रथमार्थविषये मतान्तरम्।

नैयायिकाश्च—समीहितं बोधनं सम्बोधनमिति व्युत्पत्त्या विषयत्वस्याकांक्षालभ्य-त्वात् समीहाबोधनञ्च खण्डशो विभक्त्यर्थः। समीहा-इच्छा, बोधनं-ज्ञानम्। तत्र 'राम! मां पाहि' इत्यादौ विभक्त्यर्थज्ञाने प्रकृत्यर्थरामादेः समवायेन तदर्थेच्छाया विषय-तासम्बन्धेनान्वयः। प्रत्यासन्नत्वात् प्रयोक्तुरेवेच्छा ग्राह्या। तादृशज्ञानस्य च प्रवर्तना विषयमत्कर्मकरक्षणादिरूपवाक्यार्थेऽन्वये 'प्रयोक्त्रिच्छा-विषयरामसमवेतज्ञानविषयमत्कर्म-कप्रवर्तनाविषयरक्षणजनककृतिमांस्त्वमिति तार्किकमते बोधः।

शाब्दिकमते च-त्वत्कर्तृकं मत्कर्मत्वादिविशिष्टं रक्षणं प्रयोक्त्रिच्छाविषयत्वादिर्विशिष्ट-ज्ञानविषय इति बोधः।

गदाधरभट्टाचार्य्यास्तु—बोधनस्य समीहा इति व्युत्पत्त्यनुसारं प्रत्यासत्त्या श्रोतृसम-वेतबोधेच्छाया लाभात् सम्बोधनपदाव्यवहितवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छां विभक्त्यर्थं मत्वा तस्याः प्रकृत्यर्थरामादौ विषयतासम्बन्धेनान्वयं स्वीकुर्वन्ति।

प्राचीनवैयाकरणाश्च—प्रयोक्तृवचनार्थबोधाय अवधानादिवैशिष्ट्योपलक्षिताव-स्थितिरूपस्य अभिमुखीभावस्यापि सम्बोधनपदप्रयोगे प्रतीतेर्बोधनाय संमुखीकरणं सम्बो-धनमिति व्युत्पत्त्या प्रकृतवाक्यार्थविषयकबोधफलकश्रोत्रभिमुखीभावरूपव्यापारानुकूल-व्यापारं विभक्त्यर्थं स्वीकुर्व्वन्ति।

नव्यास्तु—'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते' इति हर्युक्ते लाघवाच्च प्राचीनमतोक्तव्यापारोद्देश्यकेच्छारूपाभि-मुखीकरणफलभूतो मुखपरावृत्त्याद्यभिव्यङ्ग्योऽभिमुखीभाव एवात्र सम्बोधनम्' बोधनाय (बोधाय) संमुखीभावः सम्बोधनमिति व्युत्पत्त्यनुसारं वदन्ति।

अयमेव च प्रयोक्तुः इच्छाविषयप्रकृतवाक्यार्थविषयकबोधानुकूलो व्यापारः। तदा-श्रयत्वं संबोध्यत्वम्। अतएव=संबोधनप्रथमार्थस्यापि कारकत्वादेव।

आश्रयोऽवधिरिति। सुपां कर्मेति भाष्यतः, आश्रयः, अवधिः, उद्देश्यः, सम्बन्धः, शक्तिरेव वा यथायथं विभक्त्यर्थाः, (ज्ञेयाः) इत्यन्वयः। तत्र द्वितीयातृतीयासप्तमी-नामाश्रयोऽर्थः। पञ्चम्याश्चावधिरर्थः। सम्प्रदानस्य चतुर्थ्या उद्देश्योऽर्थः। षष्ठ्यर्थः सम्बन्धः शक्तिरेवार्थ इति विवेकः।

'सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् । इत्यस्य'
'प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ।' इत्युत्तरार्द्धम् ।

तथा तिङाम् तद्वृत्तिङामपि संख्याकर्माद्यर्थं इत्यर्थः । अनभिहिताधिकारे तासां विधानादिति । अनभिहिताधिकाराभावेऽभिहितानभिहितयोरुभयोरपि कारकयोः कारकविभक्त्यापत्त्या तद्व्यवस्थाया अनुपपत्तिः स्यात् ।

हिन्दी—सम्बोधन प्रथमार्थं भी अनुवाद्य है इस उद्देश्य से युष्मदर्थ से अभिन्न है इसलिए उसका अन्वय भी विधेयक्रिया ही में होता है अतः क्रियाजनकत्वरूप कारकत्व उसमें भी है ।

'देवदत्त ! त्वं गच्छ' इत्यादि स्थलों में सम्मुख होता हुआ जो देवदत्त है उससे अभिन्न ही युष्मदर्थ है उसके उद्देश्य ही से प्रवर्तनाविषयक ( प्रेरणाविषयक ) गमन है, यह बोध होता है यहाँ अभिमुखीभवनानुकूल जो व्यापार है उसका क्रिया ही में अन्वय होता है ।

इसलिए अभियुक्तों ने कहा है कि—

आश्रय, अवधि, उद्देश्य, सम्बन्ध, शक्ति, ये सब अर्थ यथाक्रम से विभक्ति के होते हैं 'सुपां कर्म' के भाष्य के अनुसार । भाष्य में भी कहा है—कि

जिस प्रकार सुप् के अर्थ कर्मादि हैं उसी प्रकार तिङ् के भी संख्या कर्मादि अर्थ हैं । अनुक्त कर्ता में तृतीया विभक्ति होती है और कर्म में प्रथमा होती है । जब कर्ता प्रथमान्त रहता है तो कर्म में द्वितीया होती है क्योंकि अनभिहिताधिकार में उन सबों का विधान है । यह बात लघुमञ्जूषा में विस्तारपूर्वक वर्णित है ।

ननु क्रियानिमित्तत्वं कारकत्वमिति स्वीकार्यमिति चेत्, न । चैत्रस्य तण्डुलं पचतीत्यत्र सम्बन्धिनि चैत्रादावतिव्याप्तेः । अनुमत्यादिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वात् । किन्तु क्रियाऽन्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्त्तकत्वं वा कारकत्वम् । विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थेऽन्वेति । स च विशेष्यतयैव चैत्रघटादौ । षष्ठ्यर्थस्य तण्डुलादिनामार्थान्विततया क्रियाऽनन्वितत्वात् । अत एव षष्ठ्यर्थस्य च न कारकत्वम्, क्रियान्वयाभावादिति शाब्दिकाः । उपपदविभक्तीनामपि सम्बन्ध एवार्थः । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः । षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रिययोर्निराकाङ्क्षत्वात् ।

यत्तु कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोजकत्वं कर्तृत्वमिति तन्न । स्थाली पचति असिश्छिनत्तीत्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात् कारकान्तरप्रयोज्यत्वाच्च तत्त्वं न स्यादित्यलम् ।

केषाञ्चनान्येषां मतं प्रदर्श्य खण्डयति—नन्वित्यादिना । क्रियानिमित्तत्वमिति । यद्यपि निमित्तजनकत्वयोरभेदान्वय उभयोरपि करणत्वरूपत्वात् तथापि निमित्तमिह साक्षात्परम्परासाधारणम् इत्यभिमानेनायं प्रश्नः । सम्बन्धिनि चैत्रादाविति सम्बन्धिता चात्र स्वस्वामिभावसम्बन्धेन ज्ञेया । षष्ठ्यर्थस्येति । षष्ठ्यन्तार्थस्य चैत्रादेरित्यर्थः । क्रियानन्वितत्वादिति । जनकतासम्बन्धेन साक्षात्क्रियान्वयाभावादिति तात्पर्यम् । क्रियान्वयाभावात्=जनकत्वेन क्रियाया अन्वयाभावात् ।

उपपदविभक्त्यर्थस्येति । पदमाश्रित्योत्था या विभक्तिस्सा उपपदविभक्तिरर्थात् पदोद्देश्यिका विभक्तिः । षष्ठ्यस्योपपदविभक्त्यर्थस्य च नैव कारकत्वम् । 'नमः स्वस्ति स्वाहा' इत्यादिर्विहितचतुर्थ्यादेः पदोद्देश्यकत्वेन क्रियान्वयित्वाभावादिति बोध्यम् ।

उपपदविभक्तीनामपि सम्बन्ध एवार्थः । तासां षष्ठ्यपवादत्वादित्याशयः । तण्डुलादिपदाध्याहारेणेति किं पचतीति कर्मजिज्ञासायाम् 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेन कर्म विना अनुपपद्यमानया पचिक्रियया योग्यस्य तण्डुलरूपस्य कर्मण आक्षेपो बोध्यः ।

पुनरपरेषां केषाञ्चन मतं प्रदर्श्य खण्डयति—यस्त्वित्यादिना । कारकं च चक्रप्रयोक्तृत्वमिति । प्रकृतधातूपात्तक्रियान्वययोग्यकारकसमुदायप्रवर्तकमिति तात्पर्यम् । तत्त्वं न स्यात्=कर्तृत्वं न स्यात् इत्यर्थः ।

हिन्दी—जो भी किसी ने यह लक्षण किया है कि—क्रिया के निमित्त जो हो वह कारक है यह कहना ठीक नहीं 'चैत्रस्य तण्डुलं पचति' यहाँ सम्बन्धी चैत्रादि में भी कारक का लक्षण चला जायगा क्योंकि अनुमति आदि प्रकाशन के द्वारा सम्प्रदानादि क्रिया में निमित्त है उसी प्रकार तण्डुल आदि के द्वारा सम्बन्धी चैत्रादि भी क्रिया में निमित्त है इसलिए 'क्रियानिमित्तत्वं कारकत्वम्' यह लक्षण ठीक नहीं। किन्तु 'क्रियान्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्तकत्वं वा कारकत्वम्' अर्थात् क्रिया से युक्त विभक्त्यर्थ में अन्वय जिसका है, या क्रिया का निर्वर्तक ( प्रवर्तक ) जो हो वह कारक है ।

क्रिया विशेष्यता के द्वारा सुप् या तिङ् विभक्त्यर्थ में अन्वित होती है । और विभक्त्यर्थ चैत्र घटादि में अन्वित होता है । क्योंकि षष्ठ्यर्थ तण्डुल आदि नामार्थ के साथ अन्वित होकर क्रिया में अन्वित होता है । और इसीलिये षष्ठ्यर्थ सम्बन्ध का तथा उपपदविक्त्यर्थ का कारकत्व नहीं है क्योंकि क्रिया में उसका अन्वय नहीं होता है यह वैयाकरण का मत है ।

उपपद विभक्ति का भी सम्बन्ध ही अर्थ होता है इसलिए 'चैत्रस्य तण्डुलं पचति' इत्यादि स्थलों में भी तण्डुलादिपद के अध्याहार ( आक्षेप ) करके ही बोध होता है । क्योंकि षष्ठ्यर्थ को सम्बन्ध है उसका नामार्थ ही के साथ और क्रिया के

कर्मादि ही के साथ साकांक्ष है सम्बन्ध और क्रिया तो निराकांक्ष है तो सम्बन्ध कारक कभी नहीं हो सकता।

किसी ने यह जो लक्षण किया है कि—

'कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोजकत्वम् कर्तृत्वम्' अर्थात् 'अन्य कारकों से जो प्रयोज्य नहीं हो और सकलकारका प्रयोजक हो'। पर यह लक्षण भी ठीक नहीं क्योंकि 'स्थाली पचति' 'असिश्छिनत्ति' इत्यादि स्थलों में 'स्थाली' और 'असि' कारक-समूह का प्रयोजक नहीं है और अन्य कारकों का प्रयोज्य भी है तो 'स्थाली' 'असि' ये दोनों कर्त्ता नहीं कहायेंगे बस इतना कहना पर्याप्त है।

इति कर्तृकारक विचार समाप्त

कर्मत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्मलक्षणे ईप्सिततमत्वम्। गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः तदनुकूलश्च गोपवृत्तिः। अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः। जन्यत्वनिवेशे तन्न स्यात्। प्रयागात् काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। नहि विभागः प्रकृतधात्वर्थः किन्तु नान्तरीयकतया गमने उत्पद्यते। प्रयागस्य फलतावच्छेदकसम्बन्धेन[1] फलाश्रयत्वेनानुद्देश्यत्वाच्च।

---

१. फलस्य व्यापारे स्वानुकूलत्वं—स्वेच्छाधीनेच्छाविषयत्वम्—एतदुभयसम्बन्धेनान्वयः। तादृशसम्बन्धघटकेच्छीयविषयतावच्छेदकश्च सम्बन्धः फलतावच्छेदकः। तथा च तण्डुलं पचतीत्यादौ 'समवायेन विक्लित्त्याश्रयस्तण्डुलो भवतु' इत्याकारकेच्छायाः कर्तृनिष्ठत्वेन तादृशेच्छीयफलनिष्ठविषयतावच्छेदकत्वस्य समवाये एव सत्त्वेन तत्सम्बन्धेन फलाश्रयस्यैव कर्मत्वम्, न तु कालिकादिना फलाश्रयस्य। तत्सम्बन्धस्य निरुक्तेच्छीयविषयतावच्छेदकत्वाभावात्। एवं ग्रामाद्विभजते इत्यादौ विभागसमानाधिकरणव्यापारार्थकविपूर्वकभजधातुयोगे ग्रामादेर्न कर्मत्वम्। तस्य प्रकृतधात्वर्थव्यापारप्रयोज्यविभागरूपफलाश्रयत्वेऽपि 'अनुयोगित्वेन विभागाश्रयोऽहं भवानि' इत्याकारकेच्छाया एव तत्र कर्तृनिष्ठायाः प्रतीयमानत्वेन अनुयोगित्वस्यैवेच्छीयविषयतावच्छेदकत्वेन तेन सम्बन्धेन विभागरूपफलाश्रयत्वाभावात्। ग्रामं त्यजतीत्यादौ त्यजधातुयोगे तु ग्रामादेः कर्मत्वं भवत्येव। तत्र त्यजधातुना कर्तृव्यापारव्यधिकरणविभागस्यैव प्रतीत्या 'प्रतियोगित्वेन विभागविशिष्टो ग्रामो भवतु' इत्याकारकेच्छाया एव तत्सम्बन्धेन फलाश्रयत्वस्य सत्त्वात्। एवं च प्रयागात् काशीं गच्छति इत्यत्र नवीनमते पञ्चम्युपपत्तये विभागस्य धात्वर्थत्वेऽपि व्यापारसमानाधिकरणस्यैव विभागस्य प्रतीत्या अनुयोगित्वस्यैव फलतावच्छेदकत्वात्तेन सम्बन्धेन फलाश्रयत्वेन प्रयागस्यानुद्देश्यत्वान्न 'ध्रुवमपाये' कर्मत्वमिति भावः। गम्धात्वादिसमभिव्याहारेऽपि विभागस्य धात्वर्थत्वं

कर्मत्वलक्षणं वक्तुं प्रारभते—कर्मत्वञ्चेति । प्रकृतधात्वर्थप्रधानीभूतो यो व्यापारस्तत्प्रयोज्यं यत् प्रकृतधात्वर्थफलं तत्फलाश्रयत्वेनोद्देश्यत्वमित्यर्थः । यथा चैत्रो हरिं भजतीत्यत्र प्रकृतधातुः भजधातुः तदर्थप्रधानीभूतो व्यापारो भजनानुकूलो व्यापारस्तत्प्रयोज्यं प्रकृतधात्वर्थफलं प्रीतिरूपं फलं तदाश्रयत्वेनेच्छोद्देश्यत्वं हरेरिति भवति तस्य कर्मसंज्ञा । ईप्सिततमत्वस्यापि एतदेव लक्षणम् । आप्नोतेरिच्छासन्नन्तात् कर्मक्तान्तात् प्रकृत्यर्थातिशयद्योतके तमपि निष्पन्न ईप्सिततमशब्दः ।

प्रकृतधात्वर्थेति । यत्रैकस्मादेव व्यापारात् फलद्वयमुत्पद्यते तत्रावाच्यव्यापारजन्यफलाश्रयस्य कर्मत्ववारणाय पूर्वदलोपादानम् । प्रयागात्काशीं गच्छतीत्यादौ प्रयागादीनां कर्मत्ववारणाय पूर्वदलोपादानम् । तद्वृत्तिविभागफलस्य प्रकृतगम्-धात्वर्थत्वाभावात् । अत एवोक्तं मूले नहि विभागः प्रकृतधात्वर्थं इति ।

प्रयोज्यत्वनिवेश इति । गोव्यापारं बिना पयसि व्यापारपूर्वकविभागानुत्पत्तेः गोपव्यापारजन्यो गोव्यापारो धातुवाच्यः । तज्जन्यस्तु पयोनिष्ठो व्यापारपूर्वको विभागः । तत्र पयोनिष्ठव्यापारस्य विभागनान्तरीयकत्वान्न धातुवाच्यत्वम् । एवञ्च पयोनिष्ठविभागरूपफलस्य गोपनिष्ठधात्वर्थप्रधानव्यापारजन्यत्वाभावात्कर्मसंज्ञा न स्यादतः साक्षात्परम्परासाधारणं प्रयोज्यत्वमवश्यं निवेश्यमिति ग्रन्थाशयः ।

प्रकृतधात्वर्थफलेत्यत्र प्रकृतधात्वर्थत्वम्—प्रकृतधातुनिष्ठशक्तिज्ञानाधीनोपस्थितीयमुख्यविशेष्यताश्रयत्वम् । फलव्यापारयोः खण्डशः शक्तिपक्षे समूहालम्बनोपस्थितीयमुख्यविशेष्यताया उभयोरपि सत्त्वात् ।

नान्तरीयकतया=अवश्यम्भावितयेत्यर्थः । नहि पूर्वदेशविभागमन्तरेण उत्तरदेशे संयोग उत्पद्यत इति भावः ।

फलतावच्छेदक सम्बन्धेनेति । येन सम्बन्धेन फलत्वप्रकारिकेच्छा भवति स एव फलतावच्छेदकसम्बन्धो भवति । यथा तण्डुलं पचतीत्यत्र समवायसम्बन्धेन विक्लित्त्याश्रयस्तण्डुलो भवतु इति इच्छायाः सत्त्वेन तेन सम्बन्धेन तण्डुलस्य फलाश्रयत्वात् कर्मत्वम् । प्रकृते 'प्रयागात् काशीं गच्छति' इत्यत्र अनुयोगित्वविशिष्ट-समवायसम्बन्धस्य फलतावच्छेदकत्वात् तेन सम्बन्धेन प्रयागस्य फलाश्रयत्वाभावान्न कर्मत्वमिति तत्त्वम् ।

हिन्दी—वैयाकरण के मत में कर्मत्व का लक्षण यह है—

'प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्' ।

प्रकरणगत जो धातु तदर्थ प्रधानीभूत जो व्यापार उस व्यापार से प्रयोज्य ( होने

---

इति सूत्रे शब्देन्दुशेखरे स्पष्टमभिहितमिति तत एवावगन्तव्यम् । जन्यतावच्छेदकस्य, प्रकारतावच्छेदकस्य वा फलतावच्छेदकसम्बन्धत्वमिति तु न युक्तम् । तथा सति ग्रामं त्यजति ग्रामाद्विभजते इत्यादौ समवायस्यैवाविशेषेण फलतावच्छेदकत्वादुभयत्रापि ग्रामादेः कर्मत्वापत्तेरित्यन्यत्र विस्तरः ।

लायक ( जो धात्वर्थ फल उस फल का जो आश्रय हो तदाश्रयत्वेन उद्देश्य जो हो वही कर्म है । जैसे—'चैत्रो हरिं भजति' में प्रकृतधातु है भजधातु तद्धात्वर्थ प्रधानीभूत जो व्यापार भजनानुकूल व्यापार उस व्यापार से प्रयोज्य जो प्रकृतधात्वर्थ फल वह है प्रीतिरूप फल फलाश्रयत्वेन उद्देश्य है हरि इसलिए हरि में कर्मसंज्ञा होती है ।

यही लक्षण ईप्सिततमत्व का भी शब्देन्दुशेखर में इन्होंने लिखा है ।

'गां पयो दोग्धि' में दुग्ध में वर्तमान जो विभाग उस विभाग के अनुकूल जो व्यापार सो गौ में है उसके अनुकूल व्यापार गोप में है' यहाँ पय में कर्मसंज्ञा के लिए प्रयोज्यत्वनिवेश आवश्यक है । अन्यथा जन्यत्वनिवेश कर्मसंज्ञा नहीं होगी । तात्पर्य यह है कि—गोव्यापार के विना दुग्ध का विभाग व्यापार करने पर भी नहीं हो सकता और गोप के व्यापार के विना गोव्यापार भी नहीं हो सकता इसलिए पयोनिष्ठविभागरूपफल गोप के व्यापार से जन्य नहीं है तो कर्मसंज्ञा नहीं हो सकेगी इसलिये प्रयोज्यत्व निवेश लक्षण में आवश्यक है ।

'प्रायागात्काशीं गच्छति' में प्रयाग को कर्मसंज्ञा नहीं हो जाय इसलिये लक्षण में 'प्रकृतधात्वर्थ फल' का निवेश है । तो विभाग गम्धात्वर्थं नहीं है किन्तु अवश्यं—भावितया गमन में उत्पन्न हो जाता है । और प्रयागफलाश्रयत्वेन उद्देश्य भी नहीं अर्थात् प्रयाग जाने का उद्देश्य भी नहीं है इसलिए 'प्रकृतधात्वर्थ फल' के निवेश से प्रयाग में कर्मसंज्ञा नहीं होने पाती है ।

ननु प्रकृतधात्वर्थग्रहणेनैवात्र वारणादुद्देश्यत्वनिवेशः किमर्थः, इति चेत् न । यस्यासाधारण प्रयोजनं काशीं गच्छन् पथि मृत इति काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात्कर्मत्वम् । ननु काशीं गच्छति चैत्रे चैत्रः काशीं गच्छति न प्रयागमिति प्रयोगानुपपत्तिः, प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादिति चेत् उच्यते । कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा । तथाच प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम् । तच्च प्रयागस्याप्यस्तीति कर्मत्वं तस्य सुलभम् । एतेन कार्यान्तरं कुर्वति चैत्रे किं ग्रामं गच्छति अथवा ओदनं पचतीति प्रश्ने न ग्रामं गच्छति नौदनं पचतीत्यादिप्रयोगा व्याख्याताः ।

उद्देश्यत्वनिवेशस्य फलं प्रश्नमुखेन दर्शयति— ननु प्रकृतधात्वर्थेति । कर्तुरीप्सितमं कर्मेत्येव रूपं कर्तव्यम् । प्रकृतधात्वर्थफलाश्रयत्वपर्यन्तमेव लक्षणं विधेयम् । सूत्रे तम्ग्रहणञ्च मास्तु इति हि प्रश्नकर्तुराशयः ।

उद्देश्यत्वग्रहणाभावे च 'काशीं गच्छन् पथि मृत' इत्यत्र प्रकृतगम्धात्वर्थीभूतसंयोगरूपफलाश्रयत्वाभावात् कर्मत्वं न स्यात् । उद्देश्यत्वनिवेशे तु काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वात् कर्मत्वसिद्धिरित्यवधेयम् ।

काशीं गच्छति न प्रयागमित्यत्र स्थले प्रयागमित्यत्र कर्मत्वसिद्ध्युपायं प्रदर्शयति प्रश्नमुखेन— नन्वित्यादिना ।

योग्यताविशेषे लक्षणेति । कर्मसंज्ञाविधायकसूत्रे ईप्सितपदस्य फलाश्रयत्वप्रकारकेच्छीयविषयतायोग्यताश्रयोपलक्षकतया 'प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वायोग्यताविशेषशालित्वं कर्मत्वम्' इति लक्षणे सुसम्पन्ने च प्रयागगमनस्याप्युद्देश्यत्वेन किञ्चित्कारणवशात्तत्रागमनेऽपि तत्र कर्मत्वसिद्धिरिति तात्पर्यम् । वस्तुतस्तून्नञ्समभिव्याहारस्थले धातूनामनेकार्थत्वात् नञ्पदं द्योतकत्वेन तात्पर्यग्राहकम् । तथाच प्रकृते गम्धातोः संयोगाभावानुकूलव्यापारार्थकतास्वीकारेण संयोगभावाश्रयत्वेन उद्देश्यत्वात् प्रयागस्यापि कर्मत्वं ज्ञेयम् ।

एतेन प्रोक्तलक्षणस्वीकारेण, न ग्रामं गच्छतीत्यादिप्रयोगाणामपि सङ्गतिः ।

हिन्दी—अब सन्देह होता है कि कर्मत्वलक्षण में 'प्रकृतधात्वर्थं फलाश्रयत्वम्' इतना ही निवेश से कार्य हो जायगा लक्षण में उद्देश्यत्वनिवेश क्यों किया ।

उत्तर यह है कि उद्देश्यत्वनिवेश का असाधारण अर्थात् विशेष फल यह है कि 'काशीं गच्छन् पथि मृतः' यहाँ पर जब काशी जाता ही हुआ रास्ते में मर गया तो फलाश्रय काशी है नहीं तो वहाँ कर्मसंज्ञा नहीं होनी चाहिये जब उद्देश्यत्व निवेश किया काशी के फलाश्रय नहीं होने पर भी फलाश्रयत्वेन जाने का उद्देश्य जरूर था। किन्तु अभाग्यवश मर जाने पर नहीं जा सका इसलिए फलाश्रयत्वेन उद्देश्य काशी है अतः कर्मसंज्ञा सिद्ध है ।

पुनः प्रश्न यह होता है कि काशी जाता हुआ चैत्र काशी जाता है प्रयाग नहीं ऐसी विवक्षा में 'काशीं गच्छति न प्रयागम्' यहाँ पर प्रयाग में कर्म नहीं होना चाहिए क्योंकि प्रयाग फलाश्रयत्वेन उद्देश्य नहीं है ।

उत्तर यह है कि कर्मसंज्ञाविधायक सूत्र में ईप्सिततम पद के स्वार्थविशिष्टयोग्यताविशेष में लक्षणा है तो 'प्रकृतधात्वर्थ प्रधानीभूत-व्यापारप्रयोज्य-प्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्' यह निष्कृष्ट लक्षण हुआ । इसलिये प्रयाग जाने के उद्देश्य से योग्यता अवश्य थी किन्तु काशी जाने के बाद किसी कारणवश प्रयाग नहीं जा सका इसलिए प्रयाग में कर्म होने में कोई आपत्ति नहीं । क्योंकि फलाश्रयत्वेन योग्यताविशेषशाली प्रयाग भी है ।

'फलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेशाषलित्वम्' ऐसा निवेश होने से दूसरा कार्य करता हुआ चैत्र में 'किं ग्रामं गच्छति' ओदनं वा पचति, क्या गाँव जाता है ? या भात पकाता है ? इस प्रश्न् में 'न ग्रामं गच्छति, 'न ओदनं पचति' न गाँव जाता है न भात ही पकाता है, यहाँ पर भी कर्म होता है अन्यथा उक्तस्थलों में कर्मसंज्ञा नहीं होगी ।

यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादि तादृश-फलाश्रयत्वेनोद्देश्यमेव। अत एव "आर्तश्च विषमीप्सितं यद्भक्षयति ताड-नात्" इति भाष्यं सङ्गच्छते। एतेन कशाभिहतः कारागारं गच्छतीति व्या-ख्यातम्। कालत्रये काशीगमनशून्ये चैत्रे काशीं गच्छति चैत्र इति वारणाय विशेष इति। काश्याः फलाश्रयत्वेनोद्देश्यत्वयोग्यतासत्त्वेऽपि तद्विशेषाभावान्न कर्मत्वम्। तद्विशेषश्च व्यापारसमकालिकस्तटस्थजनगम्यः किञ्च ईदृशस्थले तद्विशेषवत्वेऽपि निषेध एवानुभवसिद्ध इति काशीं न गच्छतीति किमनुप-पन्नम्।

अनीप्सितस्थलेऽपि कर्मत्वसिद्धिप्रकारं दर्शयति—यत्र त्विति। अत एव=तादृश-स्यापि फलाश्रयत्वेनोद्देश्यत्वादेव। तत्र प्रमाणं दर्शयति भाष्यम्—आतश्चेति। आत-श्चेत्यव्ययम्, अवश्यमेवेत्यर्थे बोध्यम्। यत्र ताडनादिना फलाश्रयत्वन्तत्र तेन तादृशीच्छैव समुत्पाद्यते इति न स तथायुक्तमित्यस्य विषय इति तात्पर्यम्।

कशाभिहत इति। "नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा" इत्यमरकोशब-लात् कशा चर्ममयी रज्जुस्तया अभिहतस्ताडित इत्यर्थः।

लक्षणे विशेषपदोपादानस्य फलं दर्शयति—कालत्रयेऽपीति। तस्या अपि तादृशयो-ग्यतासत्त्वात्कर्मत्वं दुर्वारमित्याशयः।

तद्विशेषश्चेति। योग्यताविशेषश्च यत्र व्यापार उत्पद्यते तत्समकालिकः तटस्थः समीपस्थो जनस्तेनैव गम्य इत्यर्थः।

अन्यप्रकारमाह—किञ्चेति। तादृशस्थले विशेषतासत्वेऽपि निषेधस्यैवानुभवसिद्धत्वात् काशीं न गच्छतीति का क्षतिः।

हिन्दी—जहाँ पर मारने पीटने के कारण पराधीन होकर विष वगैरह भोजन कर लेता है वहाँ तो विष वगैरह भी फलाश्रयत्वेन उद्देश्य ही है। इसलिए भाष्य में कहा है कि—

"आर्तश्च विषमीप्सितं यद् भक्षयति ताडनात्" अर्थात् ताडन से जो विष खा लेता है तो वह विष अवश्यमेव ईप्सित है। इससे—"कशाभिहतश्चोरः कारागारं गच्छति" अर्थात् "कोड़े की चोट खाकर चोर जेल जाता है" यह भी व्याख्यातप्राय है।

तीनों काल में जो चैत्र काशी नहीं जा सकता वहाँ 'काशीं गच्छति चैत्रः' यह प्रयोग नहीं होने पावे इसलिये लक्षण में विशेष पद का सन्निवेश है। ऐसी स्थिति में काशी की फलाश्रयत्वेन उद्देश्यत्वयोग्यता रहने पर भी विशेषता नहीं रहने के कारण कर्मसंज्ञा नहीं होती।

उसकी विशेषता तो व्यापार के समय समीपस्थजन ही से पता चल सकती है।

और ऐसे स्थलों में विशेषता रहने पर भी निषेध ही अनुभव सिद्ध है इसलिए 'काशीं न गच्छति' ऐसा कहने में क्या क्षति है।

नन्वन्नं भक्षयन् विषं भुङ्क्ते ग्रामं गच्छंस्तृणं स्पृशतीत्यादौ विषतृणयोरुद्देश्यत्वाभावात् कथं कर्मत्वमीति चेच्छृणु। "तथा युक्तम्" इति लक्षणान्तरात्। प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वमनीप्सितकर्मत्वमिति तदर्थात्। प्रयागात् काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। द्वेष्योदासीनकर्मसङ्ग्रहार्थमिदं लक्षणम्। दुहादीनां व्यापारद्वयार्थकत्वपक्षे "अकथितञ्च" इति व्यर्थम्, पूर्वेणैवेष्टसिद्धेः। एकव्यापारबोधकत्वपक्षे तु सम्बन्धषष्ठीबाधनार्थम्। तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितत्वमकथितकर्मत्वमिति तृतीयलक्षणेन 'गां पयो दोग्धि' इत्यादौ गामित्यस्य कर्मत्वसिद्धिरित्यन्यत्र विस्तरः।

'अन्नं भुञ्जानो विषं भुङ्क्ते' इत्यादिस्थले कर्मत्वानुपपत्तिप्रसङ्गं प्रदर्श्य तत्सिद्धिप्रकारमाह—नन्वन्नमित्यादिना। यद्यप्युक्तस्थले पराधीनतया विषं भुञ्जाने भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात् 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव सिद्धिः। 'आर्तश्च विषमीप्सितं यद्भक्षयति ताडनादिति भाष्यात्'। तथापि चोरान् पश्यतीत्यस्योपलक्षणं तदुदाहरणमवगन्तव्यम्।

तथायुक्तमिति लक्षणान्तरादिति। अयम्भावः—कर्म खलु द्विविधम्-इप्सितम्, अनीप्सितञ्च। तत्र विषतृणयोरीप्सितकर्मत्वाभावेऽपि अनीप्सितकर्मत्वस्याबाधात् कर्मत्वसिद्धिरिति भावः।

न चैवं कर्मत्वाननुगमप्रसङ्ग इति वाच्यम्। स्वाश्रयत्वस्वाश्रत्वप्रकारकेच्छाविषयत्वैतदन्यतरसंसर्गेण प्रकृतधात्वर्थव्यारप्रयोज्यप्रकृतधात्वर्थफलविशिष्टत्वं कर्मत्वमिति लक्षणस्वीकारेणसर्वेषामनुगमसम्भवात्।

लक्षणं प्रकृतधात्वर्थफलनिवेशस्य फलं प्रदर्शयति प्रयागात्काशीं गच्छतीति। इदमनीप्सितलक्षणं हि द्वेष्यं प्राणवियोगद्वारा हानिकारकम्, उदासीनं फलाभावात् मनोनुकूलं यत्कर्म तत्संग्रहार्थम् इत्यवधेयम्।

दुहादीनां व्यापारद्वयार्थकत्वपक्षेऽकथितञ्चेत्यस्य वैयर्थ्यं दर्शयन्नाह—दुहादीनामिति। अयम्भावः—क्षरणानुकूलव्यापारानुकूलव्यापारो दुहेरर्थः, परस्वत्वोत्पत्त्यनुकूलव्यापारानुकूलव्यापारो याचेरर्थः, नीधातोश्च संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थ इति। व्यापारद्वयार्थकत्वे पूर्वसूत्रेणैव सिद्धिं प्रदर्श्य अकथितञ्चेति सूत्रं प्रत्याख्यातमाकरे इति। बलिं याचते वसुधां वामन इत्यत्र वामनस्वत्वोत्पत्त्यनुकूलो व्यापारो बलिवृत्तिः। तदनुकूलश्च वामनवृत्तिरित्यादिविवेकस्तु स्वयमेव विधेयः।

एकव्यापारबोधकत्वपक्षेऽकथितकर्मणो लक्षणमाह—'कर्मसम्बन्धित्वे सति अपा-

दानादिविशेषाविवक्षितत्वम् अकथितकर्म्मत्वम् इति। एतल्लक्षणस्वीकारेणैव 'गां दोग्धि पयः' इत्यत्र गामित्यस्य अर्थात् गोपदार्थस्य कर्मत्वसिद्धिरन्यथा तत्सिद्धिर्न स्यादिति भावः।

हिन्दी—पुनः सन्देह यह होता है कि 'अन्नं भुञ्जानो विषं भुङ्क्ते' अर्थात् 'अन्न खाता हुआ विष खा डालता है', 'ग्रामं गच्छंस्तृणं स्पृशति' अर्थात् गाँव जाता हुआ तृण छूता है यहाँ पर विष और तृण तो कर्ता का उद्देश्य नहीं तो उन दोनों में कर्मसंज्ञा किस प्रकार होती है?

उत्तर यह है कि ऐसे ऐसे स्थलों के लिए तो खास पाणिनि का सूत्र ही है 'तथा युक्तञ्चानीप्सितम्'।

सारांश यह है—कर्म दो तरह के होते हैं—एक ईप्सित कर्म दूसरा अनीप्सित कर्म तो विष और तृण यद्यपि ईप्सित कर्म नहीं है तथापि अनीप्सित कर्म तो हैं तो अनीप्सित कर्म मानकर कर्म संज्ञा होने में कोई क्षति नहीं।

इसलिए अनीप्सितकर्म का लक्षण यह कहा है—'प्रकृतधात्वर्थप्रधानीभूतव्यापार-प्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम् अनीप्सितकर्मत्वम्।'

'प्रयागात् काशीं गच्छति' यहाँ पर प्रयाग को कर्मसंज्ञा न हो जाय इसलिए प्रकृत-धात्वर्थ फल का लक्षण में निवेश है। द्वेष्य अर्थात् प्राणवियोग करने वाला हानिकारक, तथा उदासीन अर्थात् फलाभाव के कारण मन के जो अनुकूल नहीं हो उस कर्म के सङ्ग्रह के लिये यह लक्षण कहा गया है।

दुहादि धातु के व्यापारद्वयार्थ बोधकत्व के पक्ष में तो पूर्व सूत्र (कर्तृरीप्सिततमं कर्म) से ही कर्मसंज्ञा सिद्ध है 'अकथितञ्च' यह सूत्र व्यर्थ हो है।

एक व्यापार बोधकत्व पक्ष में तो षष्ठी बाधने के लिये सूत्र चरितार्थ है क्योंकि उस पक्ष में अकथित कर्म का लक्षण यह है—

'कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितत्वम् अकथितकर्मत्वम्'।

इसलिये 'गां दोग्धि पयः' यहाँ पर 'गाम्' में कर्मसंज्ञा होती है अन्यथा अपादान की अविवक्षा के विना कर्म दुर्लभ है।

यत्तु तार्किकाः— कर्मत्वं तु न करणव्यापारवत्त्वम्, तद्धि करणजन्यव्यापार-वत्त्वम्। दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः। नापि क्रिया जन्यफलशालित्वं तत्। चैत्रश्चैत्रं गच्छतीत्यापत्तेः। संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात्। नापि परसमवेतक्रियाजन्यफलशालित्वं तत्। गमिपत्योः पूर्वस्मिन्देशे त्यजेश्चोत्तरस्मिन्देशे कर्मत्वप्रसङ्गात्। नदी वर्धत इत्यादौ अवयवोपचयरूपवृद्धिक्रियायाः तीरप्राप्तिरूपफलाश्रये तीरे कर्मत्वापत्तेश्चेति।

अत्र ब्रूमः—धात्वर्थतावच्छेदकफलशालित्वं, तादृशफलं च गमेस्संयोगस्त्यजेर्विभागः पतेरधोदेशसंयोगः अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मकत्वेन पर्णं वृक्षाद् भूमौ पततीति। संयोगमात्रफलपक्षे वृक्षाद् भूमिं पततीति। ननु चतुर्थलक्षणेऽपि चैत्रश्चैत्रं गच्छतीत्यापत्तिः, तत्र हि धात्वर्थतावच्छेदकफलं संयोग इति चेत्, न। लक्षणे व्यापारानधिकरणत्वे सतीति विशेषणादानादित्याहुः। तन्न।

काशीं गच्छन् पथि मृत इत्यादौ काश्याः, काशीं गच्छति न प्रयागमित्यादौ प्रयोगस्य, ग्रामं न गच्छतीत्यादौ ग्रामस्य च तादृशफलशालित्वाभावादेतस्य लक्षणस्यात्र सर्वत्राव्याप्तेः।

कर्मत्वविषये तार्किकमतं दर्शयति—यत्तु तार्किका इति। अयम्भावः—कर्मत्वस्य करणजन्यव्यापारवत्तया 'धात्वर्थक्रियाजन्यफलशालित्वं कर्मत्वम्' इति लक्षणमाश्रित्य 'दात्रेण धान्यं लुनाति' इत्यादौ कर्मलक्षणस्यातिव्याप्तिवारणेऽपि चैत्रः ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि कर्मत्वापत्तिस्स्यात्। संयोगरूपं यत्फलन्तस्योभयकर्मकर्तृनिष्ठत्वात्।

परसमवेतक्रियाजन्यफलफलशालित्वलक्षणेनापि नैव निर्वाहः। गमिधातोः पतृधातोश्च पूर्वस्मिन् देशे त्यज्धातोश्च उत्तरस्मिन् देशे कर्मत्वप्रसङ्गात्। नदी वर्धते इत्यादौ च तीरे कर्मत्वप्रसङ्गाच्च।

धात्वर्थतावच्छेदफलशालित्वमिति। धातुनिष्ठशक्तिनिरूपकतावच्छेदकेत्यर्थः। एवं गमिपत्योः संयोगानुकूलव्यापारे शक्तिसत्वेन तादृशशक्तिनिरूपकतावच्छेदकतायाः संयोगे सत्त्वेन तदाश्रयत्वस्य पूर्वस्मिन् देशेऽसम्भवात् पूर्वदेशविभागरूपफलस्य संयोगानुकूलव्यापाररूपक्रियाजन्यत्वेपि प्रकृतधात्वर्थतावच्छेदकत्वाभावान्न तदाश्रयस्य कर्मत्वम्।

त्यज्धातोर्विभागानुकूलव्यापारे शक्तत्वेन तत्रोत्तरदेशवर्त्तिसंयोगस्य न धात्वर्थतावच्छेदकत्वं किन्तु विभागस्यैवेति नोत्तरदेशे कर्मत्वातिव्याप्तिरिति तात्पर्यम्।

धात्वर्थनिष्ठत्वादिति। धात्वर्थेनोपसंग्रहादकर्मकत्वम्। तदुक्तम्—

> धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
> प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥ इति

वह्धातोः प्रापणे पाठेऽपि स्यन्दने शक्तिकल्पनात् नदी वहतीत्यस्य नदी स्यन्दते इत्यर्थः। अतोऽत्र वह् धातुरकर्मकः। जीवधातोः कर्मणः प्राणस्य धात्वर्थेनोक्तत्वादकर्मकत्वम्। वृषेर्जलस्य कर्मणः प्रसिद्धत्वादकर्मकत्वम् इत्यवधेयम्।

धात्वर्थतावच्छेदकफलशालित्वमिति चतुर्थलक्षणेऽपि दोषमाशङ्क्य खण्डयन्ति तार्किका एव ननु चतुर्थलक्षणेऽपीति।

तार्किकमतं खण्डयति तन्नेत्यादिना। चतुर्थलक्षणे व्यापारानधिकरणत्वे सतीति विशेषणदाने—

धात्वर्थतावच्छेदकव्यापारानधिकरणफलशालित्वं कर्मत्वमिति लक्षणे चैत्रश्चैत्रं गच्छतीति स्थले दोषवारणेऽपि काशीं गच्छन् पथि मृत इत्यत्राव्याप्तिदोषस्य तादवस्थ्ये चतुर्थलक्षणमपि नैव निर्दुष्टं तार्किकाणामित्यवधेयम्।

हिन्दी—तार्किकों का जो यह मत कि—कर्मत्व 'करणव्यापारवाला नहीं है किन्तु करणजन्य व्यापारवाला है। 'दात्रेण धान्यं लुनाति' इत्यादि स्थलों में हाथ वगैरह करण से जो व्यापार होता है उस व्यापार वाला दत्रि में भी कर्मसंज्ञा हो जायगी।

यदि 'क्रियाजन्यफलशालित्वम्' यह लक्षण कहेंगे तो "दात्रेण धान्यं लुनाति" यहाँ दोष का वारण हो जायगा किन्तु 'चैत्र-चैत्रो गच्छति' भी प्रयोग होने लगेगा। क्योंकि संयोगरूप फल कर्त्ता कर्म दोनों में है।

यदि 'परसमवेतक्रियाजन्यफलशालित्वम् कर्मत्वम्' अर्थात् दूसरे में समवाय सम्बन्ध से क्रियाजन्य फलशाली जो हो उसी की कर्मसंज्ञा होती है यह लक्षण किया जाय तो उक्तस्थल में दोष का वारण तो हो जाता है किन्तु गम और पत् धातु के पूर्व देश में और त्यज् धातु के उत्तर देश में कर्मसंज्ञा होने लगेगी। 'तथा नदी वर्धते' इत्यादि स्थलों में अवयव के उपचय अर्थात् वृद्धिरूप क्रिया के तीर प्राप्तिरूप फल का आश्रय तीर में भी कर्मसंज्ञा होने लगेगी। अतः तार्किक चतुर्थ लक्षण यह कहते हैं कि—'धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्' अर्थात् धात्वर्थ जो फल हो तत्फलशाली कर्म है, ऐसी स्थिति में गम् धातु का संयोगरूप फल है, त्यज् धातु का विभागरूप फल है, पत् धातु का अधोदेश में संयोगरूप फल है। अधोदेशरूप कर्म का धातु के अर्थ ही से संग्रह हो जाने के कारण अकर्मक हो जाता है इसलिये 'पर्णं वृक्षात् भूमौ पतति' ऐसा प्रयोग होता है। संयोग फल मानने पर 'पर्णं वृक्षात् भूमिं पतति' ऐसा प्रयोग होता है तो कोई आपत्ति नहीं।

पुनः तार्किकों के प्रति यह प्रश्न है कि चतुथ लक्षण मानने पर भी 'चैत्रश्चैत्रं गच्छति' यह आपत्ति तो रह ही गई क्योंकि वहाँ धात्वर्थतावच्छेदक फल संयोग है ?

तार्किक उत्तर यह देते हैं कि चतुर्थ लक्षण में व्यापारानधिकरणत्व भी विशेषण है अर्थात् 'धात्वर्थतावच्छेदकव्यापारानधिकरणफलशालित्वम् कर्मत्वं' यह लक्षण मैं मानता हूँ तो 'चैत्रश्चैत्रं गच्छति' में कोई आपत्ति नहीं हो सकती। यह तार्किकों का मत है।

किन्तु यह भी मत ठीक नहीं क्योंकि व्यापारानधिकरण विशेषण देने पर उक्त स्थल में तो दोषवारण हो जाता है किन्तु 'काशीं गच्छन् पथि मृतः' यहाँ पर काशी के तथा 'काशीं गच्छति न प्रयागम्' यहाँ पर प्रयाग का एवं 'ग्रामं न गच्छति' यहाँ पर ग्राम का व्यापारानधिकरण फलशाली नहीं होने के कारण कर्मसंज्ञा नहीं होगी इसलिये चतुर्थ लक्षण भी अव्याप्ति-दोष-ग्रस्त है। इसलिसे तार्किक का एक लक्षण भी निर्दुष्ट नहीं है।

ननु वृक्षं त्यजति खग इत्यत्र वृक्षस्य विभागरूपफलाश्रयत्वेनापादानत्वमास्त्विति। चेत्, न। अत्र हि विभागाः प्रकृतधात्वर्थः। यत्र च विभागो न प्रकृतधात्वर्थस्तद्विभागाश्रयस्यैवापादानत्वम्, यथा वृक्षात्पततीत्यादौ। यत्र च प्रकृतधात्वर्थो[1] विभागस्तत्रोभयप्राप्तौ "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्ययुक्तेः कर्मत्वम्। अनुक्ते कर्मणि षष्ठीद्वितीये, भारतस्य श्रवणं भारतं शृणोतीति यथा।

सकर्मकत्वं च फलव्यधिकरणव्यापारवाचकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वमकर्मत्वम्। अद्य देवदत्तो भवति उत्पद्यत इत्यर्थः। अत्रोत्पत्तिरूपं फलं बहिर्निस्सरणं च व्यापारः देवदत्तनिष्ठ एव। व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम्। अस्ति भवति विद्यते वर्तत इत्यादिधातुषु फलस्य सर्वैदुर्विज्ञेयत्वात्। सत्ता हि स्थितिरूपो व्यापारविशेषः।

देवदत्तोऽस्तीत्यादौ देवदत्तकर्तृका सत्तेत्येव वोध्यच्च। "फलव्यापारयोर्धातुर्वाचक" इति तु बाहुल्याभिप्रायेणेति दिक्।

विभागरूपफलाश्रयत्वेनेति। इदञ्च विभागाश्रयत्वम् अपादानत्वम् इत्यभिमानेन प्रोक्तम्।

वस्तुतस्तु "प्रकृतधात्ववाच्यव्यापारजन्यविभागाश्रयत्वेन विवक्षितत्वम् अपादानत्वम्" इत्येव लक्षणम्। 'ध्रुवमपायेऽपादानाम्' इति सूत्रस्वरसात् अत एव हरिरप्याह—

अपाये यदुदासीनं चलं वा यदिवाऽचलम्। ध्रुवमेव तदादेशात्तदपादानमिष्यते॥ इति। तत्रोदासीनश्च प्रकृतधात्ववाच्यविभागवद् ग्राह्यः।

न चैवं ग्रामाद्विभजते इत्यत्राव्याप्तिः, तत्र विभागस्य प्रकृतधातुवाच्यत्वादिति वाच्यम्। प्रकृतधातुवाच्यव्यापारव्यधिकरणविभागाश्रयत्वेन विवक्षितत्वमिति लक्षणस्वीकारेण दोषाभावात्।

अनुक्ते कर्मणि षष्ठीद्वितीये इति। 'कर्तृकर्मणोः कृतीति' सूत्रेऽनभिहिते इत्यधिकारसत्त्वेन अनुक्ते कृदन्तयुक्ते कर्तरि कर्मणि च षष्ठयाः, एवं 'कर्मणि द्वितीया' इत्यनेनापि

१. फलतावच्छेदकसम्बन्धेन च फलाश्रयत्वमिति शेषः।

सूत्रेण अनुक्ते कर्मसामान्ये द्वितीयाया विधानादित्याशयेन मूले उक्तं षष्ठी-द्वितीये इति ।

नन्वेवं 'फलव्यापारयोर्धातुः' इत्यादिकारिकातो विरोधः फलव्यापारोभयवाचकताया धातोस्तथा प्रतिपादनादित्यत आह—बाहुल्याभिप्रायेणेति । मल्लग्रामादिवत् भूयसा व्यपदेश इति भावः ।

हिन्दी—पुनः सन्देह यह होता है कि—'वृक्षं त्यजति खगः' यहाँ पर वृक्ष जब विभागरूप फल का आश्रय है तो अपादान संज्ञा के द्वारा पञ्चमी क्यों नहीं ?

उत्तर यह है कि—यहाँ प्रकृत त्यज् धातु का अर्थ विभाग है। जहाँ प्रकृतधात्वर्थ विभाग नहीं है उसी विभागाश्रयकी अपादान संज्ञा होती है।

जैसे—'वृक्षात्पतति' में और जहाँ पर प्रकृत धातु का अर्थ विभाग है वहाँ कर्मसंज्ञा की भी प्राप्ति है और अपादान संज्ञा की भी प्राप्ति है इसलिये 'अपादानमुत्तराणि कारकाणि बाधन्ते' अर्थात् 'उत्तर कारक अपादान को बाध देते हैं' इस भाष्य के अनुसार यहाँ कर्म संज्ञा ही होगी अपादान संज्ञा नहीं। और जहाँ अनुक्त कर्म रहता है वहाँ षष्ठी और द्वितीया दोनों होती हैं। जैसे 'भारतस्य श्रवणम्' में षष्ठी होती है और 'भारतं शृणोति' में द्वितीया होती है।

ऐसी स्थिति में सकर्मक का लक्षण—'फलव्यधिकरणव्यापारवाचकत्वम् सकर्मकत्वम्' 'फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम्' अर्थात् फल से पृथक् अधिकरण में व्यापार का वाचक जो हो वह सकर्मक है। और फल और व्यापार दोनों एक में हो उस व्यापार का वाचक अकर्मक है। 'अद्य देवदत्तो भवति' आज देवदत्त उत्पन्न होता है, यहाँ उत्पत्ति फल और बाहर निकलना व्यापार दोनों देवदत्त ही में हैं इसलिये अकर्मक है।

अथवा 'व्यापारमात्रवाचकत्वम् अकर्मकत्वम्' यही लक्षण मानना ठीक है, क्योंकि अस्ति, भवति, विद्यते, वर्तते इन धातुओं में फल सबों को दुःखेन विज्ञेय है अर्थात् फल लक्षित ही नहीं होने पाता। स्थिति रूप व्यापार को सत्ता कहते हैं क्योंकि 'देवदत्तोऽस्ति' इत्यादि स्थलों में 'देवदत्तकर्तृकसत्ता' यही बोध होता है।

यदि यह कहें कि 'फलव्यापारयोर्धातुः' इस कारिका से तो विरोध हो जायगा तो नहीं वह कारिका मल्लग्राम की तरह बाहुल्याभिप्राय से है।

इति कर्मकारकविचारः ।

स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम्। इदमेव साधकतमत्वम् ।

**क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥**

इति हर्युक्तेः। क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः। रामेण वाणेन हतो वालीत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात् पूर्वमपि कर्तरि सत्त्वात्। रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो यो बाणनिष्ठो व्यापारस्तज्जन्यं यत् प्राणवियोगरूपं फलं तदाश्रयो वालीति बोधाच्च। रामो बाणेन वालिनं हन्तीत्यादौ कर्तृप्रत्यये बाणव्यापारजन्यो यो, वालिनिष्ठः प्राणवियोगस्तदनुकूलो रामकर्तृको व्यापार इति बोधः। अर्थाद् रामव्यापारप्रयोज्यो बाणव्यापार इति पार्ष्णिको बोधः। कर्त्रादिपञ्चकारकाणां करणत्ववारणाय व्यापाराव्यवधानेनेति दिक्।

करणकारकस्य लक्षणमाह—स्वनिष्ठेति। अत्र यस्य करणत्वं चिकीर्षितं तदेव स्वपदेन ग्राह्यम्। यथा 'रामेण वाणेन हतो बाली' इत्यत्र बाणव्यापाराव्यवहितोत्तरफलनिष्पादकत्वं बाणस्यास्तीति करणत्वसिद्धिरिति भावः।

क्रियाया इति। यद्व्यापारात्, अनन्तरम् यत्र यदा क्रियायाः परिनिष्पत्तिः विवक्ष्यते, तदा, तत् करणं स्मृतम् इत्यन्वयः। अर्थात् यद्व्यापारात् पश्चात् क्रियायाः सिद्धिस्तदेव करणमिति तात्पर्यम्।

हिन्दी—जिसके व्यापार के तत्क्षण ही फल हो जाय वही करण है। वही साधकतम कहा जाता है। क्योंकि हरि ने कहा है—

जिसके व्यापार के बाद क्रिया की सिद्धि हो जाय वही करण है। 'क्रियायाः' का अर्थ फलात्मिका क्रिया निरर्थिका क्रिया नहीं। क्योंकि—

'राम ने बाण से बाली को मारा' यहाँ धनुराकर्षण आदि व्यापार बाणव्यापार से पूर्व भी कर्ता में है। इसलिये रामकर्तृनिष्ठ जो व्यापार उस व्यापार से प्रयोज्य जो बाणनिष्ठ व्यापार उस व्यापार से जायमान प्राणवियोग रूपफल उस फल का आश्रय बाली है यह बोध होता है। कर्तृप्रत्यय में 'बाणव्यापारजन्यो यो वालिनिष्ठः प्राणवियोगस्तदनुकूलो रामकर्तृको व्यापारः' यह बोध हो जाता है। अर्थात् राम व्यापार से प्रयोज्य बाणव्यापार है यह पश्चात् बोध होता है। कर्मादि पाँच कारक में करण का लक्षण नहीं चला जाय इसलिये लक्षण में 'व्यापाराव्यवधानेन' दिया है।

इति करणकारकविचारः।

[1]क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत् कारकं तत्त्वं सम्प्रदानत्वम्। यथा ब्राह्मणाय गां ददातीत्यादौ दानक्रियाकर्मीभूतगोसम्बन्धाय

---

१. अत्र मात्रशब्दः कार्त्स्न्ये। तथाच क्रियासामान्यस्य कर्मणा सम्बन्धायेत्यर्थः नतु दानरूपाया एव। तेन चैत्रो मैत्राय वार्तां कथयतीत्यादौ कथनादिसङ्ग्रहः।

ब्राह्मणो दानक्रियोद्देश्यः। गोब्राह्मणयोः स्वस्वामिभावः सम्बन्धः, चैत्रो मैत्राय वार्ताः कथयतीत्यत्र मैत्रवार्तयोर्ज्ञेयज्ञातृभावः सम्बन्धश्च।

यत्तु वृत्तिकारः--सम्यक्प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञेयम्। तथा च गोनिष्ठत्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानत्वम्। पुनर्ग्रहणाय रजकस्य वस्त्रदाने रजकस्य वस्त्रं ददातीति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः।

तन्न। "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति" इति भाष्यविरोधात्। "कर्मणा यमभिप्रैति'' इति सूत्रव्याख्यावसरे भाष्यकृताऽन्वर्थसंज्ञाया अस्वीकाराच्च। अत एव

तदाचक्ष्वासुरेन्द्राय स च युक्तङ्करोतु यत्।

इति सप्तशतीश्लोकः सङ्गच्छते। तस्माद्रजकाय वस्त्रं ददातीत्यादि भवत्येव। अत्राधीनीकरणेऽर्थे ददातिः। चपेटां ददातीत्यत्र न्यसनेऽर्थे इति।

सम्प्रदानस्य लक्षण प्रदर्शयति—क्रियामात्रकर्मसम्बन्धायेति। 'क्रियया यमभिप्रैति' इति वार्तिकाभिप्रायेणेनेदं लक्षणं संघटते। तत्रापि 'कर्मणा यमभिप्रैति' इति सूत्रस्वारस्येनैव क्रोडीकृतं लक्ष्यते। तत्र कर्मपदस्य क्रियामात्रपरत्वाश्रयणात्।

वृत्तिकारमतं प्रदर्श्य खण्डयति—यत्तु वृत्तिकार इति। गोनिष्ठेति। गोनिष्ठं यत् स्वस्य दातुः स्वत्वम् तन्निवृत्तिसमानाधिकरणः यः परस्वत्वोत्पत्त्यनुकूलो व्यापारस्तद्व्यपाररूपा या क्रिया तदुद्देश्यको ब्राह्मणादिरेवेति तस्यैव सम्प्रदानत्वमित्यर्थम्।

यच्च वस्तु पुनर्ग्रहणाय दीयते तत्र न सम्प्रदानत्वम्। तत्र तु सम्बन्धसामान्ये षष्ठ्येव भवतीति वृतिकारमतम्।

परमेतन्मतं न सत् इति खण्डयति—तन्नेति। 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति भाष्यात् रजकाय वस्त्रं ददातीति प्रयोगस्यापि सार्थक्यमिति सारम्।

वस्तुतस्तु—'शिष्याय चपेटां ददाति' इत्यत्र विनेतुमिति तथा सप्तशतीश्लोके च ...यितुमिति तुमुन्नन्तं पदमध्याहृत्य क्रियार्थोपपदस्येति कर्मणि चतुर्थी। ददातेश्च स्वत्वनिवृतिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापार एवार्थः, तथाच पुनर्ग्रहणाय षष्ठ्येव। सम्प्रदानशब्दस्य तु सम्यक् प्रदीयते यस्मै इति विग्रहे बाहुलकात् सम्प्र... ल्युटि साधुत्वमित्यवगन्तव्यम्। प्रदाने सम्यक्त्वन्तु अपुनर्ग्रहणमेवेति सारम्।

हिन्दी—क्रियामात्र में सम्बन्ध के लिए क्रिया में उद्देश्य जो हो उसे सम्प्रदान ...क कहते हैं। 'जैसे विप्राय गां ददाति' ब्राह्मण को गौ देता है, यहाँ दानक्रिया का ... गौ है उसके सम्बन्ध के लिये ब्राह्मण दान क्रिया का उद्देश्य है इसलिये ब्राह्मण ...तुर्थी होनी है। यहाँ गो और ब्राह्मण का स्वस्वामिभाव सम्बन्ध है। 'चैत्रो

मैत्राय वार्ताः कथयति' चैत्र मैत्र से वार्तालाप करता है यहाँ मैत्र और वार्ता का ज्ञेय ज्ञातृभाव सम्बन्ध है। जाननेवालों से किसी बात को जानने ही को ज्ञेयज्ञातृ भाव सम्बन्ध कहते हैं।

वृत्तिकार ने जो यह सम्प्रदान का लक्षण कहा—'सम्यक् प्रदीयते यस्मै तत्सम्प्रदानम्' अर्थात् अच्छी तरह जिसे दान दिया जाय उसको सम्प्रदान कहते हैं। ऐसी स्थिति में गो में रहनेवाला जो दाता का स्वत्व ( अपनापन ) उस स्वत्व की निवृत्ति तथा परस्वत्व की उत्पत्ति के अनुकूल व्यापार क्रिया का उद्देश्य ब्राह्मण है इसलिये उसमें सम्प्रदानत्वात् चतुर्थी होती है।

और यदि फिर लेने के लिये दिया जाय तो वहाँ सम्बन्ध सामान्य में षष्ठी होती हैं, यह वृत्तिकार का मत है।

किन्तु यह ठीक नहीं क्योंकि भाष्यकार ने 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' अर्थात् 'खल्ली के गुरु शिष्य को चपेटा देता है' यह उदाहरण दिया है वहाँ भी पुनर्ग्रहण नहीं तो चतुर्थी क्यों ?

तथा 'कर्मणा यमभिप्रैति' इस सूत्र की व्याख्या के समय भाष्यकार ने अन्य संज्ञा को स्वीकार नहीं किया है।

इसलिये 'तदाचक्ष्वासुरेन्द्राय' यह सप्तशती श्लोक भी संगत होता है अन्यथा 'असुरेन्द्राय' में चतुर्थी नहीं हो सकती। अतः 'रजकाय वस्त्रं ददाति' यह भी प्रयोग होता ही है।

सम्प्रदानचतुर्थ्यर्थ उद्देश्यः, तथा च ब्राह्मणोद्देश्यकं गोकर्मकं दानमिति बोधो मैत्रोद्देश्यकं वार्ताकर्मकं कथनमिति च। अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम्। यथा पत्ये शेते इत्यादि। पत्युद्देश्यकं नायिकाकर्तृकं शयनमिति बोधः।

ननु दानादीनां तदर्थत्वात्तादर्थ्ये चतुर्थ्येव सिद्धौ ! किं 'कर्मणा यम्' इति सम्प्रदानसंज्ञया, 'चतुर्थी सम्प्रदाने' इति सूत्रं तु 'रुच्यर्थानाम्' इति विधेयचतुर्थ्यर्थमिति चेत्, न। दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दानक्रियायाः परलोकार्थत्वात्। अत एव तादर्थ्यचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वे दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियायामन्वयानापत्त्या कारकत्वानापत्तिरिति हेलाराजः।

उपकार्योपकारकत्वसम्बन्धस्तादर्थ्यचतुर्थ्यर्थः। ब्राह्मणाय दधीत्यादौ ब्राह्मणोपकारकं दधीति बोधादिति दिक्।

सम्प्रदानचतुर्थ्या अर्थमाह—सम्प्रदानचतुर्थ्यर्थ इति उद्देश्यत्वं सम्प्रदानचतुर्थ्यर्थ इति भावः।

'पत्ये शेते' इत्याद्यर्थं लक्षणान्तरमाह—अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वम् । तेन पत्युद्देश्यकं नायिकाकर्तृकं शयनमिति बोधः सञ्जायते ।

लक्षणे क्रियामात्रसम्बन्धायेत्यस्य लाभप्रकारश्चेत्थम्—'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति सूत्रे कर्मणः क्रियायां साकाङ्क्षितत्वात् क्रियालाभः । यमभिप्रैति सम्बन्धुमिच्छति इति कर्मसम्बन्धाय यः सम्बन्धुमिच्छति स सम्प्रदानम् । तत्फलितार्थकथनमेव लक्षणे क्रियामात्रसम्बन्धाय इत्युक्तम् । तेन ब्राह्मणाय गां ददातीत्यादिसिद्धिः । एतेन लक्षणेन पत्ये शेते इत्यादौ सम्प्रदानसंज्ञाया अप्राप्त्यैव 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति वार्तिकस्यारम्भः । तन्मूलकमेव 'अकर्मकक्रियोद्देश्यत्वम्' इति लक्षणम् इत्यवगन्तव्यम् ।

ननु ब्राह्मणादौ स्वर्गरूपोपकारस्तु न साक्षाद्गामी किन्तु दुग्धाद्युपभोगरूपोपकार एवेति तज्जनकत्वस्य दुग्धादिद्वारा गवादाविव गवादिद्वारा तद्दानादावपि सम्भवात् कैयटादिसम्मततादर्थ्यचतुर्थ्यैव सिद्धौ सम्प्रदानसंज्ञायाः किं प्रयोजनमिति मनसि निधाय शङ्कते—

ननु दानादीनां तदर्थत्वादिति । दानक्रियायामन्वयानापत्त्या इति । दानक्रियायाः स्वर्गार्थत्वात् स्वर्गरूपोपकारस्य दानक्रियाकर्तृगामित्वात् तद्गतफलद्वारा तज्जनकत्वरूपतादर्थ्यस्य ब्राह्मणादिनिरूपितस्य दानक्रियायामभावेन चतुर्थ्यन्तार्थस्य तत्रान्वयानापत्तेरिति भावः ।

हिन्दी—सम्प्रदान चतुर्थी का अर्थ उद्देश्य होता है । इसलिये 'ब्राह्मणाय गां देहि' इस वाक्य का ब्राह्मणोद्देश्यक यह गोदान है ऐसा बोध होता है । 'मैत्राय वार्ताः कथयति' का मैत्रोद्देश्यक यह वार्तालाप है ऐसा वोध होता है ।

'पत्ये शेते' में चतुर्थी के लिये एक दूसरा लक्षण यह है 'अकर्मकक्रियोद्देश्यत्वम् सम्प्रदानत्वम्' अर्थात् अकर्मकक्रिया का जो उद्देश्य हो वह सम्प्रदान होता है, इसलिये 'पति के उद्देश्य से नायिका का शयन है' यह बोध होता है ।

अत्र सन्देह यह होता है कि दान वगैरह तो किसी दूसरे के लिये किया जाता है यह तदर्थ है तो तादर्थ्य मान ही कर चतुर्थी सिद्ध है, 'कर्मणा यमभिप्रैति' इस सूत्र से सम्प्रदान संज्ञा करने की क्या आवश्यकता ? 'चतुर्थी सम्प्रदाने' यह सूत्र तो 'रुच्यर्थानां प्रीयमाणः' इस सूत्र के विषय में चतुर्थी करने के लिए चरितार्थ है ।

उत्तर यह है कि यह सन्देह ठीक नहीं, गोदान कर्म यद्यपि ब्राह्मण के लिए किया जाता है, किन्तु दानक्रिया परलोक के लिये की जाती है । इसलिये दाता अपने हित के लिये गोदान करता है न कि ब्राह्मण के लिये । इसलिए यह कैयट सम्मत तादर्थ्य से मानकर चतुर्थी नहीं हो सकती संप्रदानसंज्ञा अवश्य आवश्यक है ही ।

इसलिये हेलाराज ने यह कहा है कि—'तादर्थ्य चतुर्थी से दान का कर्म गो आदि

सम्प्रदानार्थं है भी, किन्तु दानक्रिया ब्राह्मण के लिए नहीं होती वह तो परलोक के लिए होती है। चतुर्थ्यन्त ब्राह्मणादि के दानक्रिया में अन्वय नहीं होने से वह कारक नहीं कहा-यगा'। तादर्थ्यचतुर्थी का अर्थ उपकार्य्य उपकारकत्व सम्बन्ध है। इसलिए 'ब्राह्मणाय दधि' अर्थात् ब्राह्मणं का उपकारक दही है, ऐसा बोध होता है।

इति सम्प्रदानकारकविचारः।

तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादानत्वम्। तदेवावधित्वम्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि। माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भात्ये पञ्चमीसाधनात्। अत एव चैत्रान्मैत्रः इत्यादिर्लोके सुन्दर प्रयोगः। [1]वृक्षं त्यजति खग इत्यादावपादानत्ववारणाय प्रकृतधात्ववाच्येति। परस्परस्मान्मेषावपसरत इत्यत्रापादानत्वाय तत्तत्कर्त्रिति। तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयस्तत्तत्पशुविशेषः। किं च मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा, परस्परपदवाच्ययोस्तयोस्तु विभागाश्रयत्वविवक्षेत्यौपाधिकस्तयोर्भेदः। शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते। यथाऽऽत्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्नं करणं, निरवच्छिन्नं निरीहं कर्म। एकस्यैव शब्दभेदाद्भेदः। शब्दालिङ्गितस्यैव सर्वत्र भानात्। तदाह—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति

अपादानत्वस्य लक्षणं तत्पदकृत्यञ्च वक्तुं प्रारभते-तत्तत्कर्तृसमवेतेति।

बुद्धिपरिकल्पितमपादानत्वमपि ग्राह्यं भवतीत्यत्रांशे 'वा जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकप्रत्याख्यानपरं भाष्यमेव मानम्—

'तथाहि-तत्तर्हि वक्तव्यम्; न वक्तव्यम्। कथं तावत् अधर्माज्जुगुप्सते अधर्मात् बीभत्सते इति। एवं प्रेक्षापूर्वकारी भवति दुःखोऽधर्मो नानेन कृत्यमस्तीति बुद्धया सम्प्राप्य निवर्तते तत्र 'ध्रुवमपायेऽपादानम्' इत्येव सिद्धम्' इत्यादि भाष्ये उक्तम्। अनेन भाष्येण बुद्धया परिकल्पितमपादानत्वं स्पष्टमेवोक्तम्।

'वृक्षं त्यजति खग' इत्यत्र लक्षणे प्रकृतधात्ववाच्येति निवेशाभावे खगसमवेतविभागानुकूलक्रियाजन्यविभागाश्रयत्वात् वृक्षस्यापादानत्वापत्तिरतोऽवश्यं प्रकृतधात्ववाच्येति निवेशः कार्यः। अत्र किल क्रियाजन्यविभागतः प्रकृतधातुवाच्य एव। यत्र

१. अत्रत्यं तत्त्वं पूर्वमुक्तम्।

किल विभागो न प्रकृतधात्ववाच्यस्तद्विभागाश्रयस्यैवापादानत्वनियमात्। यथा वृक्षात्पततीत्यादौ। यत्र च प्रकृतधात्वर्थौ विभागस्तत्रोभयप्राप्तौ 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यात् कर्मत्वमेवेति तत्वम्।

"परस्परान्मेषावपसरत" इत्यत्र अपादानत्वाय तत्तत्कर्त्रिति निवेश:। परस्परपदोपात्तयोरपादानत्वम्, तत्तत्क्रियाश्रयत्वात् मेषपदोपात्ताया: कर्तृत्वञ्चोपपद्यते इति अन्यथा तत्तत्कर्त्रिनिवेशाभावे परस्परपदेन पञ्चमी न स्यात् इत्यवधेयम्।

नन्वपादानलक्षणे प्रकृतधात्ववाच्यत्वनिवेशे ग्रामाद् विभजते इत्यत्रापि ग्रामस्यापादनत्वं न स्यात् विभागस्य प्रकृतधातुवाच्यत्वात्। किन्तूपसर्गाणां द्योतकत्वात् विपूर्वस्य भज्धातो: कथं विभागोऽर्थं इत्यरुचेराह किंचेति। एतेन विभागानुकूलगत्यनाश्रयत्वे सति विभागाश्रयत्वमिति बोध्यम्।

वस्तुतस्तु विभागनिरूपितावधित्वप्रकारकतात्पर्यविषयत्वमपादानत्वमित्येव लक्षणं बोध्यम्।

न सोऽस्तीति। य: शब्दानुगमात् ऋते स प्रत्यय: लोके न अस्ति, सर्वं ज्ञानम्-नुविद्धम् इव शब्देन भासते इत्यन्वय:। अयम्भाव: यथा ज्ञानं विषयमपोह्य न भासते; किन्तु विषयविशिष्टमेव, शब्दोऽपि स्वरूपं परित्यज्य न केवलमर्थं प्रत्याययतोति।

हिन्दी—अपादानकारक का लक्षण यह है 'तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वम् अपादानत्वम्'।

अर्थात् जो जो कर्ता हो उनमें समवाय सम्बन्ध से रहने वाली जो क्रिया उस क्रिया से जन्य जो प्रकृत धातु अर्थ न हो बस विभाग का जो आश्रय हो वह अपादान है। वही अवधि कहाती है। वह विभाग वस्तुत: सम्बन्धपूर्वक वास्तविक ही केवल नहीं लिया जाता है। किन्तु बुद्धि से परिकल्पित सम्बन्धपूर्वक बुद्धिपरिकल्पित भी अर्थात् बुद्धि के द्वारा निश्चित भी लिया जाता है। क्योंकि 'माथुरा: पाटलिपुत्रकेभ्य आढ्यतरा:' अर्थात् मथुरा के लोग पटना के रहने वालों से ज्यादा घटनाढ्य होते हैं। इत्यादिस्थलों में बुद्धिपरिकल्पित विभाग मानकर ही भाष्य में पञ्चमी विधान किया है।

इसलिये 'चैत्रान्मैत्र: सुन्दर:' अर्थात् चैत्र से मैत्र सुन्दर होता है इत्यादि प्रयोग भी लोक में व्यवहृत है।

सारांश यह है कि यद्यपि उक्त उदाहरणों में विभाग लक्षित नहीं होता है तथापि बुद्धि के द्वारा यह समझा जाता है कि पटना से उठकर मथुरा में धन चला आया है एवं चैत्र से सौन्दर्य मैत्र में चला आया है इस प्रकार विभाग मानकर भी अपादान होता है।

'वृक्षं त्यजति खग:' यहाँ पर वृक्ष में अपादान संज्ञा वारण के लिये प्रकृतधा-

त्ववाच्य लक्षण में दिया है। क्योंकि पक्षी वृक्ष छोड़ता है तो वहाँ भी विभाग अवश्य हैं तो विभागाश्रय वृक्ष है इसलिये वृक्ष में पञ्चमी हो जायगी। जब लक्षण में 'प्रकृत-धात्ववाच्य' निवेश है तो विभाग प्रकृत धात्वर्थ नहीं होना चाहिये। क्योंकि जहाँ विभाग प्रकृतधात्वर्थ नहीं रहता है वहाँ दोनों की प्राप्ति में 'अपादानमुत्तराणि कारकाणि बाधन्ते' इस भाष्य के अनुसार पञ्चमी बाधकर द्वितीया ही हो जाती है। यहाँ पर विभाग प्रकृतधातु का अर्थ है इसलिए द्वितीया ही होती है।

'परस्परान्मेषावपसरतः' यहाँ पर अपादान संज्ञा के लिये तत्तत्कर्तृ समवेत का निवेश लक्षण में है। अन्यथा 'परस्परात्' में पञ्चमी नहीं होगी। जब उक्त निवेश किया जाता है तो एक मेष से दूसरा मेष लड़कर हटता है पुनः दूसरा मेष से दूसरा लड़कर हट जाता है परस्पर में जब दोनों का विभाग है इसलिये परस्पर में पञ्चमी होती है। अर्थात् एक छाग निष्ठ व्यापार जन्य विभाग का आश्रय दूसरा हो जाता है तो परस्पर विभाग का आश्रय दोनों हो जाते हैं।

दूसरी बात यह है कि मेष का अर्थ जो पशुविशेष छाग है उन दोनों की क्रियाश्र-यत्व की विवक्षा है। परस्पर पदवाच्य उन दोनों के विभागाश्रय की विवक्षा तो औपाधिक है अर्थात् उपाधिवश है।

शब्दस्वरूप उपाधि के वश से भेद भी अर्थ में लिया जाता है। जैसे—'आत्मा-नम् आत्मना वेत्ति' यहाँ शरीरावच्छिन्न कोई शरीरी कर्ता है, निरवच्छिन्न निराश्रय निरीह ईहाशून्य परमात्मा कर्म है अन्तःकरणावच्छिन्न हृदय करण है। एक ही पदार्थ के शब्द के भेद से भेद हो जाता है क्योंकि शब्दालिंगित अर्थात् शब्दाश्रित ही का सभी जगह भान होता है। जिस प्रकार ज्ञान विषय छोड़कर नहीं मालूम पड़ता है अर्थात् ज्ञान जिस प्रकार विषय से अतिरिक्त नहीं होता है किन्तु विषयविशिष्ट ही होता है उसी प्रकार शब्द भी अपना स्वरूप छोड़कर केवल अर्थ की प्रतीति नहीं कराता है।

ननु ह्यं तदौपाधिकभेदमादायैवात्रापादानत्वे सिद्धे किं तत्तत्कर्तृसमवेते-त्यनेनेति चेत्, न। पर्वतात् पततोऽश्वात् पतत्यश्ववाह इत्यादावश्वस्यापा-दानत्वाय तत्स्वीकारात्। ननु वृक्षात् पर्णं पततीत्यादौ तादृशफलाश्रयत्वात् पर्ण-स्याप्यपादानत्वं विभागस्य द्विष्ठत्वादिति चेत्, परया कर्तृसंज्ञया बाधात्। अतएव 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यम् सङ्गच्छते।

यत्तु केचिद्—गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्व-मिति। तन्न। तत्तद्वाक्ये मेषाश्वयोरपादानत्वानापत्तेः। यद्यपि अपसरत इति सृधातुना' गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रतीतेरस्यापादानत्वम-

विरुद्धमिति । तन्न । क्रियाया एकत्वात् । अत एव 'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' इति भाष्यं सङ्गच्छते ।

पञ्चम्यर्थोऽवधिः । वृक्षावधिकं पर्णकर्तृकं पतनमिति बोधः । पर्वतावधिकपतनाश्रयाभिन्नाश्वावधिकमश्ववाहकर्तृकं पतनमिति बोधः । परस्परमेषावधिकं द्वित्वावच्छिन्नमेषकर्तृकमपसरणमिति बोध इति दिक् ।

तत्तत्कर्तृसमवेतेति निवेशस्यानन्यथासिद्धत्वं प्रदर्श्य तत्फलं प्रदर्शयति—नन्वित्यादिना ।

इत्थं हि प्रश्नकर्तुराशयः—औपाधिकभेदमादायैवापादानत्वसिद्धौ लक्षणे तत्तत्कर्तृनिवेशस्य किं प्रयोजनमिति ।

तदुत्तरञ्च – लक्षणे तन्निवेशाभावे 'पर्वतात्पततोऽश्वात्पतत्यश्ववाह' इत्यत्र औपाधिकभेदेन निर्वाहाभावेऽपादानत्वं न स्यात् । तन्निवेशे च–अश्वसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन पर्वतस्य, अश्ववाहसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन चाश्वस्य अपादानत्वसिद्धिरित्यवधेयम् ।

वृक्षात्पर्णं पततीत्यादौ पर्णेऽपादानत्वप्रसङ्गमाशङ्क्य खण्डयति नन्वित्यादिना ।

प्रश्नकर्तुरयमभिप्रायः—पर्णसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वं यथा वृक्षस्य; तथा पर्णस्यापि सत्त्वादपादानत्वं स्यात् विभागस्य द्व्याश्रयत्वात् इति ।

तदुत्तरञ्च 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यात्, परया कर्तृसंज्ञया अपादानसंज्ञाया बाधात् नैव पर्णेऽपादानत्वमिति सारम् ।

केषाञ्चन सम्मतं लक्षणान्तरं प्रदर्श्य खण्डयति यत्तु केचिदिति ।

इत्थं हि प्रश्नकर्तुराशयः—गत्यनाविष्टत्वे सति अर्थात् संयोगानुकूलव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् अर्थात् विभागजनकक्रियाजन्यविभागाश्रयत्वम् अपादानत्वमिति लक्षणे वृक्षात्पर्णमित्यादौ वृक्षादेस्तादृशव्यापारानाश्रयत्वात् पर्णवृत्त्युत्तरदेशसंयोगानुकूलव्यापारजन्यविभागाश्रयत्वेन विवक्षितत्वाच्च वृक्षस्यापादानत्वसिद्धौ मदभिप्रेतमिदमेव लक्षणं निर्दुष्टम् इति ।

उत्तरग्रन्थस्य चायमभिप्रायः—वृक्षात्पर्णं पततीत्यादौ यद्यप्युक्तलक्षणेन निर्वाहस्य सम्भवस्तथापि 'परस्परान्मेषावपसरतः, पर्वतात्पततोऽश्वात्पतति' इत्यादिवाक्ये मेषाश्वयोरपादानत्वं न स्यात् । गत्यनाविष्टत्वाभावात् इति भवत्सम्मतं प्रोक्तलक्षणं नैव निर्दुष्टम् इत्युत्तरयितुस्तात्पर्य्यम् ।

भूषणकारस्य मतं प्रदर्श्य खण्डयति—यदपीत्यादिना ।

इत्थं हि तन्मतम्—अपसरत इति गतित्वसामान्यधर्मपुरस्कारेणैकेनैव सृधातुना कर्तृभेदेन गतिरूपक्रियाद्वयस्य प्रतीतिसम्भवेन एकनिष्ठां प्रति इतरस्यापादानत्वे नैव कोपि विरोध इति ।

तन्मतं खण्डयति—तन्नेत्यादिना। अयम्भावः—द्विवचनार्थद्वित्वसंख्यायाः कर्त्राश्रयत्वेन प्रतीतेरेकशेषं विना धातुतः प्रतीतिसम्भवाभावान्न क्रियाया अनेकत्वं किन्त्वेकत्वमेवेति।

प्रातिपदिकानामेवैकशेषो न तु धातूनामित्यंशे प्रमाणमुपन्यस्यति—अत एव इति। अतएव=धातूनामेकशेषाभावादेवेत्यर्थः।

पञ्चम्या अर्थं निर्दिशति—पञ्चम्यर्थोऽवधिरिति। अपादानं हि त्रिधा—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते॥

यत्रोपात्तधातुनाऽपायलक्षणः सज्ञाविषयो निर्दिश्यते तत् निर्दिष्टविषयम् अपादानम्। यथा विद्यालयादागच्छति।

यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयमपादानम्। यथा बलाहकात् विद्योतते विद्युत्।

यत्र क्रिया न श्रूयते प्रमाणान्तरेण प्रतीयते तदपेक्षितक्रियम्। यथा आगच्छन्तं दण्डिनं प्रत्यक्षेणाह-कुतो दण्डीति।

हिन्दी—अब शङ्का यह होती है कि—औपाधिक भेद अर्थात् किसी उपाधि को लेकर ही अपादानत्व सिद्ध है लक्षण में तत्तत्कर्तृ निवेश क्यों किया ?

उत्तर यह है कि यदि तत्तत्कर्तृ का निवेश नहीं किया जाय तो 'पर्वतात्पततोऽश्वात्पतत्यश्ववाहः' पहाड़ से गिरते हुए घोड़े से घोड़सवार गिरता है' यहाँ अश्व को अपादान संज्ञा नहीं होगी क्योंकि 'कर्तृसमवेत' इतना ही केवल निवेश से केवल पर्वत पद ही में अपादानत्व लक्षण जायगा अश्वात् में नहीं। 'तत्तत्कर्तृनिवेश' से अश्व में समवाय सम्बन्धेन रहने वाली क्रिया से जायमान विभाग का आश्रय होने से पर्वत में और अश्ववाहकर्तृनिष्ठ क्रियाजन्य विभाग का आश्रय होने से अश्व में भी अपादान संज्ञा की सिद्धि हो जाती है इसलिये 'तत्तत्कर्तृ' का निवेश आवश्यक है।

पुनः शङ्का यह होती है कि—'वृक्षात्पर्णं पतति' यहाँ पर पर्ण में भी अपादानत्व मानकर पञ्चमी क्यों नहीं, क्यों कि विभाग दोने में रहने वाली वस्तु हैं इसलिये विभागाश्रय पर्ण भी है ?

उत्तर यह है कि—प्राप्त दोनों संज्ञा है किन्तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इस भाष्य के अनुसार परत्वात् कर्तृसंज्ञा से अपादान संज्ञा का बोध हो जाता है इसलिये 'पर्णम्' में अपादानत्वात् पञ्चमी नहीं होने पाती।

जो किसी ने यह लक्षण किया है कि 'गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वम् अपादानत्वम्' अर्थात् गमन क्रिया का जो आश्रय नहीं हो और गमनक्रिया जन्य विभाग का जो आश्रय हो वह अपादान है।

पर यह लक्षण ठीक नहीं क्योंकि 'परस्परान्मेषावपसर्पतः', 'पर्वतात्पततोऽश्वात्पतत्यश्ववाहः' इन दोनों वाक्यों में मेष और अश्व में अपादानसंज्ञा नहीं होगी क्योंकि गत्यनाविष्ट नहीं है अर्थात् यहाँ गमनक्रिया का मेष और अश्व आश्रय ही है इसलिये पंचमी नहीं होगी। अतः यह लक्षण ठीक नहीं।

भूषणकार ने जो यह कहा है कि—'अपसरतः' यहाँ सृधातु के लट् का द्विवचनान्त का रूप है तो गतिद्वय का उपादान है इसलिये एक में रहने वाली गति के प्रति-अन्य विभाग का आश्रय हो ही जायगा तो अपादान संज्ञा होने में क्या विरोध है ?

किन्तु यह भी कहना ठीक नहीं क्योंकि विना एकशेष के दो का बोध होना असम्भव है और एकशेष धातु का नहीं होता किन्तु प्रातिपदिक ही का होता तो सर्वथा क्रिया एक है।

इसलिये भाष्यकार ने कहा है—कि 'न वै तिङन्तानि एकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' अर्थात् तिङन्त एक शेष का प्रयोजक नहीं है क्योंकि क्रिया एक है।

पञ्चमी का अर्थ अवधि है इसलिये 'वृक्षात् पर्णं पतति' इस वाक्य से वृक्षावधिक पर्ण पतन है यह बोध होता है। 'पर्वतात्पततोऽश्वात् पतत्यश्ववाहः' इस वाक्य से 'पर्वतावधिक पतन क्रिया का आश्रय अश्वावधिक अश्ववाह का पतन है' यह बोध होता है। इसी प्रकार 'परस्परान्मेषावपसरतः' इस वाक्य से परस्परमेषावधिक दो मेष का अपसरण है अर्थात् भागना है। यह बोध होता है।

इत्यपादान कारक विचारः

कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम्। यथा स्थाल्यामोदनं गृहे-पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली, कर्तृद्वारकव्यापाराधारो गृहमिति। ननु साक्षात्क्रियाधारयोरोदनचैत्रयोरधिकरणत्वलब्धौ परम्परया तदाधारयोर्गृहस्थाल्योस्तत्संज्ञात्वयुक्तेति चेत् न। परत्वात्कर्तृकर्मसंज्ञाभ्यां साक्षादाधारीभूते बाधात्[1]। स्थाल्यधिकरणिका या ओदननिष्ठाविक्लित्तिस्तदनुकूलो गृहाधिकरणको [2]मैत्रकर्तृको व्यापार इति बोधः।

---

१. बाधादिति। अतएव गृहं प्रवशति, मोक्षमिच्छति इत्यादौ न सप्तमी। मोक्षे इच्छाऽस्ति इति तु प्रत्ययोपात्तेच्छारूपकर्तृद्वारा अस्तिक्रियायामन्वयाद् बोध्यम्। धातूपात्तेच्छायामन्वये तु कर्मत्वात् 'कर्तृकर्मणोः' इति षष्ठ्येवेति दिक्।

२. अन्ये तु गृहाधिकरणको यश्चैत्रस्तत्कर्तृको व्यापारः, स्थाल्यधिकरणको य ओदनस्तन्निष्ठा या विक्लित्तिरित्येवम् अधिकरणकारकस्य कर्तृकर्मणोरेवान्वयः। अत एव अक्षशौण्ड इत्यादौ समासः सिद्धयति। क्रियायामन्वये तु शौण्डादिनाऽसामर्थ्यात् समासो न स्यात्। शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणया अन्तर्भूताशक्त्यादि-

तच्चाधिकरणं त्रिधा। अभिव्यापकमौपश्लेषिकं वैषयिकं चेति। तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्, यथा तिलेषु तैलमस्तीत्यादि। उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम्। अत एव 'इको यणचि' इत्यादावौपश्लेषिकाधारे सप्तम्युक्ता 'संहितायाम्' इति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीनाम्। 'यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम् मासिकं धान्यम्' इत्युक्तम् 'तत्र च दीयते' इति सूत्रे भाष्ये।

यत्तु कटे आस्ते इत्यौपश्लेषिकोदाहरणमुक्तं कैयटेन, तदयुक्तम्, उक्तभाष्यविरोधात्। एतद्व्यतिरिक्तं वैषयिकमधिकरणम्। कटे आस्ते, जले सन्तिमत्स्या इत्यादि[1] अभिव्यापकातिरिक्तं गौणमधिकरणमिति बोध्यम्। सप्तम्यर्थोऽधिकरणमिति दिक्।

ज्ञापकक्रियाश्रयवाचकादुत्पन्नायाः सत्सप्तम्यास्तु क्रियान्तरज्ञापकत्वमर्थः। तत्रानिर्णीतकालिकायाः[2] क्रियाया निर्णीतकालिका ज्ञापिका। गोषु दुह्यमानासु गत इत्यादौ गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः।[3]

---

क्रियाद्वारा सामर्थ्योपपादनं तु न युक्तम्। अक्षविषयकशौण्डत्ववान् इति बाधस्यैव ततो जननात्, विवक्षितत्वाच्च। अक्षशौण्डस्य धनमित्यादौ शौण्डादेरकर्तृत्वे तु अगत्या आसक्तशौण्डादौ लक्षणाश्रयणम्। अत्र शौण्डत्वस्य विधेयत्वेनाविवक्षितत्वाल्लक्षणाश्रयणेऽदोषात्। एतेन तत्र लक्षणास्वीकारेऽत्रापि लक्षणोचितेत्यपास्तमित्याहुः।

१. अग्रे वृक्षः कपिसंयोग्यस्तीत्यादौ अग्राधिकरणिका कपिसंयोगविशिष्टवृक्षकर्तृका सत्ता इति बोधे संयोगस्याव्याप्यवृत्तित्वात् वृक्षस्यावयवान्तरे मूलादौ कपिसंयोगविशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे अग्रावच्छेद्यत्वं फलति। शिरसि मे वेदना इत्यादि तु अवच्छेद्यावच्छेदकभावसम्बन्धस्याप्याधारतानियामकत्वादुपपादनीयम्।

२. अनिर्णीतकालिकाया इति। एवम् अनिर्णीतदेशिकाया निर्णीतदेशिका लक्षणम्। सति गुणे द्रव्यत्वमस्तीत्यादौ गुणनिष्ठसत्ताज्ञाप्या द्रव्यत्वनिष्ठा सत्तेति बोधः। ज्ञाप्यज्ञापकभावस्योत्सर्गतः समानाधिकरण्ये सत्येव प्रतीतेः सामानाधिकरण्येन गुणविशिष्ट द्रव्यत्वमिति फलति। एतन्मूलक एव सत्सप्तम्या वैशिष्ट्यमर्थ इति तार्किकाणां प्रवादः। जले पीते तृषा शाम्यतीत्यादौ भूतार्थकप्रत्ययसमभिव्याहारे एतद्योगे हेतुत्वस्याप्याकाङ्क्षया प्रतीतेरस्या निमित्तसप्तमीत्वव्यवहारोऽपीति दिक्। ज्ञाप्यज्ञापकभावश्च तत्तच्छब्दबोध्यत्वेन विवक्षित एवैतच्छास्त्रप्रवृत्तौ निमित्तम्, नतु वह्निधूमयोरिव व्यभिचारादर्शनसहकृतभूयोदर्शनाश्रयः। तथा सति उदिते आदित्ये तमो नष्टमित्यादावेव स्यात्, गोषु दुह्यमानासु गत इत्यादौ कादाचित्कगमने विवक्षिते न स्यादिति बोध्यम्।

३. दुह्यमानगोज्ञाप्यगमनाश्रय इति शब्दतो बोधे गोर्ज्ञापकत्वस्य विशेषणी-

अधिकरणस्य लक्षणं ब्रवीति—कर्तृकर्मद्वारकेति। कर्तृकर्मद्वारा फलव्यापारयोर्य आधारस्तत्त्वम् अधिकरणत्वमित्यर्थः।

एतादृशार्थलाभप्रकारश्च—'आधारोऽधिकरम्' इति सूत्रसामर्थ्यादेवावसेयः-तथाहि उक्तसूत्रेण कर्तृकर्मघटितपरम्परासम्बन्धेन कर्मनिष्ठफलरूपक्रियाधारस्य कर्तृनिष्ठव्यापार-रूपक्रियाधारस्य चानेनाधिकरणसंज्ञा विधीयते। साक्षात्फलाधारे कर्मसंज्ञया, साक्षाद्व्या-पाराधारे च कर्तृसंज्ञायाऽस्य बाधात् इत्यवधेयम्।

स्थाल्यामोदनमिति। अत्र स्वाश्रयौदनसंयुक्तत्वरूपकर्मघटितपरम्परासम्बन्धेन विक्लित्तिरूपफलाश्रयः स्थाली तदनुकूलव्यापाररूपकर्तृनिष्ठक्रियायाः स्वाश्रयदेवदत्तसंयु-युक्तत्वरूपपरम्परासम्बन्धेनाश्रयो गृहमिति बोध्यम्।

अत्रायं निष्कर्षः—कारकाधिकारीयेनैतेन क्रियान्वय्याधारस्याधिकरणसंज्ञा विधीयते। क्रिया च धात्वर्थः। साक्षादाधारस्य पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वात् सूत्रमिदं व्यर्थं सत् ज्ञापयति परम्परया तदाश्रयस्य ग्रहणं बोधयति। परम्परात्र कर्तृकर्मद्वारैवेत्यत्र मानम्—

कर्तृकर्मव्यवहितमसाक्षाद्धारयत्‌ क्रियाम्।
उपकुर्वत्‌ क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥

इति वाक्यपदीयपद्यमेव।

स्थाल्यामोदनं पचतीत्यादौ। गृहस्थाल्योरधिकरणसंज्ञाया अयुक्तत्वमाशङ्क्य खण्ड-यति—नन्वित्यादिना।

शङ्काकर्तुरयमभिप्रायः—'स्थाल्यामोदनं गृहे पचति चैत्रः। इत्यत्र साक्षात्क्रिया-न्वयाधारस्तु ओदनश्चैत्रश्च तयोरधिकरणसंज्ञा तु नितरां युक्ता किन्तु परम्परया क्रियान्वय्याधारयोर्गृहस्थाल्योरधिकरणसंज्ञा तु नैव युक्ता तत्कथं गृहस्थाल्योरधिकरण-त्वम् इति।

उत्तरयितुश्चायमाशयः—साक्षात् क्रियाधारयोरोदनचैत्रयोरधिकरणत्वस्य युक्ति-युक्तत्वेऽपि परत्वात् कर्तृकर्मसंज्ञाभ्यां साक्षादाधारीभूतयोरोदनचैत्रयोरधिकरणसंज्ञाया बाधात्। अत एव 'गृहं प्रविशति, मोक्षमिच्छति' इत्यादौ न सप्तमी। न च मोक्षे इच्छास्तीति कथं प्रयोग इति वाच्यम्। प्रत्ययोपात्तेच्छारूपकर्तृद्वाराऽस्तिक्रियायामन्वय-द्वारा सप्तम्याः प्राप्तौ तत्प्रयोगस्यापि सम्भवात्। धातूपात्तेच्छायामन्वये तु कर्मत्वात् षष्ठ्या एव प्राप्तिरिति बोध्यम्।

केचित्तु 'गृहाधिकरणको यश्चैत्रस्तत्कर्तृको व्यापारः स्थाल्यधिकरणको य ओदन-

---

भूतदोहनक्रियाद्वारैव पर्यवसितत्वात् गोनिष्ठदोहनक्रियाज्ञाप्यगमनाश्रयश्चैत्र इतिबोधः फलितो भवति। एवमेव सति गुणे द्रव्यत्वमित्यादावपि बोध्यम्।

स्तन्निष्ठा या विक्लित्तिरिति अधिकरणकारकस्य कर्तृकर्मणोरेवान्वयः। अत एव अक्षशौण्ड इत्यादौ समासः सिद्धयति। क्रियायामन्वये तु शौण्डादिनाऽसामर्थ्यात् समासो न स्यात्' इति वदन्ति।

अधिकरणं विभजते=तच्चाधिकरणमिति। तत्र व्याप्यव्यापकभावघटितपरम्परा-सम्बन्धेन क्रियाश्रयोऽभिव्यापकम्।

विषयताघटितपरम्परासम्बन्धेन क्रियाश्रयौ वैषयिकम्।

संयोगघटितपरम्परासम्बन्धेन क्रियाश्रय औपश्लेषिकम्। तत्राभिव्यापकस्योदा-हरणम्--सर्वस्मिन्नात्मास्ति। तिलेषु विद्यते तैलमित्यादि।

औपश्लेषिकस्योदाहरणम्--वटे गावः सन्ति, इत्यादि।

वैषयिकस्योदाहरणम्--मोक्षे इच्छास्ति, खे पक्षिणः इति।

औपश्लेषिकाधिकरणविषये मानं दर्शयति--अत एवेति। औपश्लेषिकाधारस्य स्वीकारादेवेत्यर्थः।

कैयटमतं प्रदर्श्य खण्डयति--यस्त्वित्यादिना। सप्तम्युक्तेति। अतएव ईदृशसूत्रेषु तस्मिन्निति परिभाषोपस्थितिः। तस्या हि औपश्लेषिकाधारबोधकसप्तम्यन्तं प्रवृत्तौ निमित्तम्।

उक्तभाष्यविरोधादिति। तद्भाष्येण हि समीपत्वस्य सप्तम्यर्थत्वप्रतीत्या 'कटे आस्ते' इत्यत्र तस्याभावान्न औपश्लेषिकाधारस्य उदाहरणं ज्ञेयम्। एतद्व्यतिरिक्तम्=औपश्ले-षिकाभिव्यापकाधारभिन्नम् इत्यर्थः।

'अग्रे वृक्षः कपिसंयोगी अस्ति' इत्यादौ अग्राधिकरणिका कपिसंयोगविशिष्टवृक्षकर्तृका सत्ता इति बोधे संयोगस्याव्याप्यवृत्तित्वात् वृक्षस्यावयवान्तरे मूलादौ कपिसंयोगविशिष्ट-वृक्षाभावप्रतीतेः कपिसंयोगेऽग्रावच्छेद्यत्वं फलति। शिरसि मे वेदना इत्यादि तु अवच्छे-द्यावच्छेदकभावसम्बन्धस्याप्याधारतानियामकत्वादुपपादनीयम्।

सत्सप्तम्या अर्थं विविनक्ति--ज्ञापकक्रियाश्रयेति? "यस्य च भावेन भावलक्ष-णम्" इति सूत्रविहितसप्तम्या इत्यर्थः।

गोषु दुह्यमानासु गत इति। ज्ञापकक्रियाश्रयः कर्ता कर्म च। तत्र ब्राह्मणेष्वधीया-नेषु इति कर्तर्युदाहरणम्। गोषु दुह्यमानासु गत इति कर्मण्युदाहरणम्। अत्र दोहन-क्रियाज्ञानजन्यज्ञानविषयताश्रयो य उत्तरदेशसंयोगस्तदनुकूलव्यापाराश्रयाभिन्नश्चैत्र इति बोधः।

हिन्दी--कर्ता और कर्म के द्वारा फल और व्यापार का आधार जिसमें हो उसे अधिकरण कहते हैं। जैसे 'स्थाल्यामोदनं गृहे पचति' अर्थात् चैत्र घर में बरतन में भात पकाता है। कर्म ओदन के द्वारा विक्लित्तिरूप फल का आधार स्थाली है और कर्ता चैत्र के द्वारा व्यापार का आधार गृह है।

अब आशंका यह होती है कि—साक्षात् क्रिया का आधार तो ओदन और चैत्र है उनमें अधिकरण संज्ञा न होकर परम्परया क्रिया का आधार जो गृह और स्थाली है उन दोनों की अधिकरण संज्ञा तो बिलकुल अयुक्त है ?

उत्तर यह है कि–"है तो अधिकरणसंज्ञा की प्राप्ति ओदन और चैत्र में भी किन्तु अधिकरण संज्ञा को परत्वात् साक्षात् आधार चैत्र में कर्तृ संज्ञा हो जाती और साक्षात् ओदन में कर्म संज्ञा हो जाती है। इसलिये स्थाल्यधिकरणक ओदननिष्ठ विक्लित्त्यनुकूल व्यापार है" और गृहाधिकरणक मैत्रकर्तृक व्यापार है इस प्रकार का बोध होता है।

वह अधिकरण तीन प्रकार के होते हैं—

एक आभिव्यापक, दूसरा औपश्लेषिक, तीसरा वैषयिक। उनमें—

व्याप्य व्यापक से घटित परम्परासम्बन्ध से क्रिया का आश्रय अभिव्यापक होता है। अर्थात् सम्पूर्ण अवयवों से व्याप्ति रहने पर अभिव्यापक होता है। जैसे—'तिलेषु तैलमस्ति' यहाँ तिल में संपूर्ण अवयवों से तैल विद्यमान है। सर्वस्मिन् आत्माऽस्ति यहाँ सभी प्राणियों में व्यापक रूप से आत्मा रहती है।

संयोगघटित परम्परासम्बन्ध से क्रिया का आश्रय औपश्लेषिक होता है क्योंकि उप का अर्थ समीप होता है और श्लेष का अर्थ सम्बन्ध होता है अर्थात् समीप सम्बन्ध से जो आधार है उसे औपश्लेषिक आधार कहते हैं। जैसे—'वटे गावः सन्ति' यहाँ वटवृक्ष और गो का समीप सम्बन्ध है इसलिये औपश्लेषिक का यह उदाहरण है।

इसलिये 'इकोयणचि' इस सूत्र में औपश्लेषिक आधार में सप्तमी 'संहितायाम्' इस सूत्र के भाष्य में कही गई है। यहाँ इगादि का अजादि के साथ सामीप्य है।

'यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकाधिकरणम् मासिकं धान्यम्' अर्थात् महीना बीत जाने में जो दिया जाता है उसका मास औपश्लेषिक अधिकरण है इसलिये मासिक धान्य है' यह 'तत्र च दीयते' इस सूत्र के भाष्य में कहा है।

कैयट ने जो औपश्लेषिकाधार का उदाहरण='कटे आस्ते' कहा है, वह सर्वथा अयुक्त है क्योंकि उक्त 'इकोयणचि' सूत्र के भाष्य से विरोध आ पड़ता है क्योंकि वहाँ सप्तमी का अर्थ सामीप्य कहकर अजादिसामीप्य इगादि का बताया है यहाँ सामीप्य का अभाव है इसलिये अभिव्यापक और औपश्लेषिक इन दोनों से भिन्न वैषयिक का उदाहरण यह है। इसी प्रकार 'जले मत्स्याः सन्ति' यह भी वैषयिक का ही है।

इसी प्रकार अभिव्यापक से अतिरिक्त एक गौण अधिकरण भी है, यह जानना चाहिये। सप्तमी का अर्थ अधिकरण है।

एक ज्ञापक क्रिया का आश्रयवाचकशब्द से उत्पन्न सप्तमी होती है उसका अर्थ क्रियान्तरज्ञापकत्व उसमें अनिश्चितकाल वाली क्रिया का निश्चितकाल वाली क्रिया ज्ञापिका होती है।

जैसे—'गोषु दुह्यमानासु गतः' अर्थात् 'गाय दूही जाने पर वह चला गया' यहाँ गोनिष्ठ जो दोहन क्रिया है उस क्रिया से ज्ञापित गमन क्रिया का आश्रय चैत्र है' यह बोध होता है।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः। तत्र राज्ञः पुरुष इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः। राजनिरूपितसम्बन्धवान् पुरुष इति बोधात्। ननु सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्त्विति चेत् न। राजसम्बन्धिपुरुष इतिविवक्षायां राजशब्दादेव षष्ठी, 'प्रकृत्यर्थप्रत्ययार्थयोः प्रत्यार्थस्यैव प्राधान्यम्' इति व्युत्पत्त्यनुरोधात्। अन्यथा तद्विवक्षायां राजा पुरुषस्येति पुरुषशब्दात् षष्ठ्यां पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युपत्तिभङ्गापत्तेः। अत एवाह—

**भेदभेदकयोश्चैकसम्बन्धोऽन्योन्यमिष्यते।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पतिस्तु भेदकात् ॥ इति ॥**

भेदकः सम्बन्धनिरूपको, भेद्यः सम्बन्धाश्रयः।

इति कारकार्थ निरूपणम्।

—◆—

अथ षष्ठ्यर्थं विविनक्ति—कारकप्रातिपदिकार्थेति। अयम्भावः—कारकप्रातिपदिकार्थभिन्नः स्वस्वामिभावादिः सम्बन्ध एव षष्ठ्या अर्थः। तत्रादिना अवयवावयविभावः सम्बन्धः जन्यजनकभावः सम्बन्धः, विषयविषयिभावः सम्बन्धश्च, ग्राह्याः।

प्राचीनस्तु—'सम्बन्धत्वेन रूपेण तत्तत्सम्बन्धे शक्ति॰ नैव प्रत्येकं सम्बन्धेषु शक्तिं स्वीकुर्वन्ति। अनेकशक्तिकल्पने गौरवापत्तेः। एवञ्च शक्यतावच्छेदकस्य सम्बन्धत्वस्य कर्तृत्वकर्मत्वादिषु विद्यमानत्वात् सम्बन्धत्वेन रूपेण षष्ठ्यर्थत्वमस्त्येव। अतएव सम्बन्धत्वविवक्षायां 'सतां गतम्' 'सर्पिषो जानीते' इत्यादिस्थले षष्ठी भवति। नव्यास्तु—सम्बन्धत्वेन रूपेण न स्वस्वामिभावादिसम्बन्धः षष्ठ्यर्थः। 'एकशतं षष्ठ्यर्थाः' इति षष्ठीस्थानेयोगा' इति सूत्रस्थभाष्यानुरोधात्। 'राज्ञः पुरुषः' इत्यादौ तु स्वत्वस्वामित्वरूपः समूह एव षष्ठ्यर्थः, नहि स्वत्वम्, स्वामित्वं वा षष्ठ्यर्थः। तस्य एकमावृत्तित्वात् इति वदन्ति।

व्युत्पत्तिभङ्गापत्तेरिति। 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्तिभंगापत्तेरित्यर्थः।

उक्तार्थे मानं प्रदर्शयति—भेद्यभेदकयोरिति। भेद्यभेदकयोः=भेद्यं विशेष्यम् भेदकं विशेषणं, भेद्यञ्च भेदकञ्च ते तयोः भेद्यभेदकयोः, श्लिष्टः सम्बन्धः अन्योन्यम्

परस्परम् इष्यते । यद्यपि सम्बन्धः द्विष्ठः द्विनिष्ठस्तथापि भेदकात् विशेषणादेव षष्ठ्युत्पत्तिर्भवतीत्यर्थः ।

तत्र भेदकः सम्बन्धस्य निरूपको भवति, भेद्यः सम्बन्धस्य आश्रयो भवतीति बोध्यम् ।

इति तत्त्वप्रकाशिकायां षट्कारकविचारः ।

—*—

हिन्दी—कारकप्रातिपदिकार्थं से भिन्न स्वस्वामिभाव, अवयवावयविभाव, जन्यजनकभाव, विषयविषयिभाव सम्बन्ध षष्ठी का अर्थ होता है । उनमें—

स्वस्वामिभाव सम्बन्ध का उदाहरण—'राज्ञः पुरुषः' है यहाँ राजा और पुरुष का स्वस्वामिभावसम्बन्ध है, 'चैत्रस्य हस्तौ' यह अवयवावयविभाव सम्बन्ध का उदाहरण है यहाँ अवयवी चैत्र के हाथ अवयव है इसलिये यहाँ अवयवावयवीभाव सम्बन्ध है ।

'देवदत्तस्य पुत्रः' यह जन्यजनकभावसम्बन्ध का उदाहरण है यहाँ जन्य पुत्र है जनक देवदत्त है इसलिये यहाँ विषयविषयिभाव सम्बन्ध है ।

'राज्ञः पुरुषः' यहाँ पर षष्ठी का अर्थ जो स्वस्वामिभाव सम्बन्ध है उस सम्बन्ध के पुरुष में आश्रयाश्रयिभावसम्बन्ध से अन्वय है इसलिए राजनिरूपित सम्बन्धवाला पुरुष है यह बोध होता है ।

अब शङ्का यह होती है कि जब सम्बन्ध द्विष्ठ है अर्थात् दो दो में रहने वाला है तो पुरुष शब्द से भी षष्ठी क्यों नहीं !

उत्तर यह है कि 'राजा का पुरुष है' इस विवक्षा में प्रकृतिप्रत्यार्थयोः प्रत्ययार्थस्य प्राधान्यम्' इस व्युत्पत्ति के अनुसार राजन् शब्द ही से षष्टी होगी पुरुष शब्द से नहीं ।

अन्यथा राजा पुरुषस्य इस प्रकार पुरुषशब्द से षष्ठी हो जाने पर पुरुषार्थ के प्रति षष्ठ्यर्थ विशेषण हो जायगा तो उक्त व्युत्पत्ति का भङ्ग हो जायगा ।

इसलिए कहा है—कि

भेद्य विशेष्य का और भेदक विशेषण का परस्पर सम्बन्ध संम्मिलित है । यद्यपि सम्बन्ध दो में रहता है तथापि षष्ठी की उत्पत्ति भेदक अर्थात् विशेषणवाचक शब्द ही से होती है । उनमें भेदक (विशेषण) सम्बन्ध का निरूपण करता है और भेद्य (विशेष्य) सम्बन्ध का आश्रय होता है ।

इति तात्पर्यदीपिकाख्यायां हिन्दी भाषायां

कारकविचारः समाप्तः ।

—

## अथ नामार्थनिरूपणम्

अत्र मीमांसकाः—शब्दानां जातौ शक्तिर्लाघवात्। व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्।

"नागृहीदविशेषणा बुद्धिर्विशेष्य उपजायते।

इति न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणेति तात्पर्यात्। किञ्च एकस्यां व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात्। गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयलक्षकत्वेन निर्वाहश्चेत्याहुः।

तन्न। गोत्वमस्तीत्यर्थेऽन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिभानानापत्तेः। व्यक्तीनामान्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेणागौरवात्। लक्ष्यतावच्छेदकतीरत्वादिवत् शक्यतावच्छेदकस्यावाच्यत्वे दोषाभावात्। "नागृहीत" इति न्यायस्य विशेषणविशिष्टविशेष्यबोधे तात्पर्येऽपि त्वदुक्ततात्पर्ये मानाभावात्। जातेरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरवोधाप्रसङ्गाच्च। तदाह—

**आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।**
**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति॥**

युक्तं ह्येतत्।

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥**

इत्येतेषु शक्तिग्राहकशिरोमणिर्व्यवहारो व्यक्तावेव शक्तिं ग्राहयति। गवादिपदेन लोके व्यक्तेरेव बोधात्॥

वस्तुतस्तु "न ह्याकृतिपदार्थकस्य[1] द्रव्यं न पदार्थ" इति सरूपसूत्रभाष्याद्विशिष्टमेव वाच्यम्, तथैवानुभावात्। अनुभवसिद्धस्यापलापानर्हत्वाच्च।

नामार्थं दर्शयितुमुपक्रमते—अथ नामार्थ इति। मीमांसकमतं दर्शयति—

इदं हि मीमांसकमतम्—एकस्या एव शक्तेरेकस्या एव सम्भवेन लाघवात् शब्दानां तत्तत्पदार्थसाधारणधर्मे जातवेव शक्तिर्मन्तव्या। व्यक्तीनामानन्त्यात् व्यक्तौ शक्ति-

---

(१) मते इति शेषः।

स्वीकारे महद् गौरवम्। यथा गोशब्दस्य गोत्वे घटपदस्य घटत्वे च शक्तिः शब्दनिष्ठा बोध्येति तात्पर्य्यम्। जातेरखण्डतया तद्‌भव्यावर्तकशक्यतावच्छेदकत्वाकल्पने लाघवमिति भावः।

'नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते' इति न्यायेन विशेष्यविशेषणयोरुभयोरपि शक्तिरावश्यकीत्यपि न वक्तव्यम्। तन्न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणेति तात्पर्यम्। अर्थात् विशेषणे शक्तिमनुभूयैव विशेष्ये शक्तिः कल्प्यते इति हि सार्वत्रिको नियमः। इह तु विशेषणमात्रे शक्तौ गामानयेत्यादौ गोपदशक्यगोत्वस्य आनयनक्रियान्वयानुपपत्त्या गोव्यक्तौ लक्षणा कल्प्यते इति सारांशः।

किञ्च एकस्यां व्यक्तां शक्त्युपदेशे इतरव्यक्तौ उपदेशाभावे कथं तद्‌बोधः स्यात्। गामानयेत्यादौ गोत्वस्य आनयनक्रियायां कर्मतयाऽन्वयानुपपत्त्या तदाश्रये लक्षणया न काऽपि क्षतिरिति मीमांसकानां मनोविनोदः।

तन्मतं खण्डयति—तन्नेति। खण्डनग्रन्थस्यायमाशयः—यद्यपि गोत्वमस्तीत्यर्थे न काचिदन्वयानुपपत्तिस्तथापि गौरस्तीति प्रयोगे गोव्यक्तेर्भानं न स्यात्। व्यक्तीनामानन्त्येऽपि 'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्यत्वोपस्थितिप्रकारत्वमिति प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणादानरूपलाघवाय शक्यतावच्छेदकजातेः अर्थात् सम्बन्धितावच्छेदकजातेः शक्यवृत्तित्वे सति शक्तिनियामकत्वरूपोपलक्षणत्वेन तदैक्येन च उपलक्षणधर्मैक्येन च व्यक्तौ शक्तिस्वीकारेण अनन्तशक्तिकल्पनाया अप्यभावे न किमपि गौरवम् इति।

ननु शक्यतावच्छेदकत्वाज्जातेरपि वाच्यत्वमावश्यकमिति शंकां निरस्यति—शक्यतावच्छेदकेति।

आनन्त्येऽपीति। भावानाम्, आनन्त्ये, अपि हि एकम् उपलक्षणं, कृत्वा, सुकरसम्बन्धः शब्दः, न च व्यभिचरिष्यति, इत्यन्वयः। भावानाम्=व्यक्तीनाम्, आनन्त्येऽपि नानात्वादपरिच्छेद्यत्वेऽपि, एकम्=अनुगतजात्यादिधर्मं, उपलक्षणम्=अशक्यत्वेऽपि शक्यव्यावर्तकम्, कृत्वा=अभ्युपगम्य, सुकरसम्बन्धः=सुग्राह्यगवादिनिष्ठवाच्यतासम्बन्धः, शब्दः=गवाद्यात्मकः नच=नहि, व्यभिचरिष्यति=शक्तिग्रहाऽविषयव्यक्तिं बोधयिष्यति, इति कारिकार्थः।

सद्युक्तत्वमपि दर्शयति—शक्तिग्रहमिति। वृद्धाः, व्याकरणोपमानकोशाप्तवाक्यात्, व्यवहारतश्च, वाक्यस्य, शेषात्, विवृतेः, सिद्धपदस्य, सान्निध्यतः, शक्तिग्रहम्, वदन्ति इत्यन्वयः। व्याकरणञ्च उपमानञ्च कोशश्च आप्तवाक्यञ्च इत्येतेषां समाहारः तस्मात् व्याकरणात्—पाचकः, पक्ता, इत्यादौ व्याकरणात् शक्तिग्रहो भवति। उपमानात्—गोसदृशो गवय इत्यादौ उपमानात् शक्तिग्रहो भवति। कोशात्—हरिशब्दस्य इन्द्रादौ कोशात् शक्तिग्रहो भवति। आप्तवाक्यात्—पिकशब्दस्य कोकिलादौ

आप्तवाक्यात् शक्तिग्रहो भवति। व्यवहारतः—गामानयेत्यादौ तत्रस्थबालकस्य गोशब्दादौ प्रयोज्यप्रयोजकवृद्धानां व्यवहारतः, अर्थात् गामानयेतिप्रयोजकवृद्धेनोक्तः प्रयोज्यवृद्धो यदा गामानयति, बधानेत्युक्तो बध्नाति मुञ्चेत्युक्तो हि तां मोचयति तदा तटस्थो बालकोऽवधारयति—सास्नादिमानयं भावो गोपदवाच्य इति भावः।

वाक्यस्य शेषात्—यदाऽन्या ओषधयोम्लायन्ते अथैते मोदमानास्तिष्ठन्ति इति वाक्यशेषात् यवशब्दस्य दीर्घशूकपदार्थे शक्तिग्रहो भवति।

विवृतेः—विवरणात् घटशब्दस्य कलशे शक्तिग्रहः। सिद्धपदस्य सान्निध्यात्-सहकारतरौ पिको रौति इत्यत्र सिद्धपदस्य प्रसिद्धस्य सहकारतरुपदस्य सान्निध्यतः सान्निध्यात् पिकपदस्य कोकिले शक्तिग्रहः। एवमावापोद्वापाभ्यां सर्वत्र शक्तिग्रहं सुलभं वृद्धा वदन्तीत्यर्थः। स च व्यवहारः व्यक्तिविषय एवेति तस्मात् केवलव्यक्तिरेव शब्दस्य वाच्येति तत्त्वम्।

यद्यपि आकृतिपदार्थकस्य द्रव्यं न पदार्थः द्रव्यपदार्थकस्य चाकृतिर्न पदार्थः इत्युभयोरुभय पदार्थः' इति भाष्याद् विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते, तथापि 'कस्यचित् किञ्चिद्गुणभूतं किञ्चित्प्रधानम्' इत्युत्तरभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यवधारणात् तथोपादानमविरुद्धमतः वास्तविकपक्षं दर्शयति—वस्तुतस्त्विति। आकृतिपदार्थकस्येति। आकृतिः पदार्थो यस्येति बहुव्रीहिणा अन्यपदार्थः शब्दः। आकृतिपदार्थस्य द्रव्यं नार्थं इति न; किन्तु सोऽपीति भाष्याशयः। तथा च केवलायां जातौ व्यक्तौ वा शक्तिः, किन्तु विशिष्ट एवेति तात्पर्यम्। अत एवोक्तं स्वार्थं द्रव्यञ्च लिङ्गञ्चेति।

हिन्दी—अब नामार्थ विचार का प्रारम्भ होता है। इसमें मीमांसक का मत यह है—शब्दों की शक्ति लाघवात् जाति में ही माननी चाहिये व्यक्ति में नहीं क्योंकि व्यक्ति अनन्त है उनमें शक्ति मानने पर गौरव है। तब किसी ने यह कहा—'नागृहीतविशेषणाबुद्धिर्विशेष्य उपजायते अर्थात् विशेषण में शक्तिग्रहण के बिना विशेष्य में शक्तिग्रह नहीं होता है' इस न्याय से जाति और व्यक्ति दोनों में शक्ति प्रतीत होती है क्योंकि जाति विशेषण है व्यक्ति विशेष्य है तो केवल जाति में शक्ति किस प्रकार मानते हैं?

तो मीमांसक ने यह कहा है कि—उस न्याय का तात्पर्य यह है कि विशेषण में शक्ति है और विशेष्य में लक्षणा है।

दूसरी बात यह है कि एक व्यक्ति में शक्ति का उपदेश हो जाने पर भी अन्य व्यक्तियों में शक्तिग्रहण नहीं होने से बोध नहीं हो सकता इसलिये जाति में ही शक्ति मानने में लाघव है। गामानय इत्यादि स्थलों में तो अन्वय की अनुपपत्ति नहीं होने पर तदाश्रय में लक्षणा मानने से भी निर्वाह हो सकता है' ऐसा मीमांसकों ने कहा है।

पर यह मीमांसक का कथन सर्वथा असङ्गत है। क्योंकि जाति में शक्ति मानने पर भले ही 'गोत्वमस्ति' इस अर्थ में अन्वय की अनुपपत्ति नहीं हो किन्तु 'गोरस्ति' इस प्रयोग में व्यक्ति का भान नहीं होगा।

व्यक्ति के अनन्त होने पर भी शक्यतावच्छेदक जाति के अर्थात् सम्बन्धित्व बताने वाली जाति के उपलक्षण मान लेने से और उपलक्षक धर्म एक होता है इसलिये शक्यतावच्छेदक जाति से उपलक्षित व्यक्ति में शक्ति मान लेने पर अनन्तशक्ति कल्पना भी नहीं होने पाती गौरव तो दूर रहा। और लक्ष्यतावच्छेदक तीरत्व में लक्षणा मानने से दोष नहीं होता उसी प्रकार शक्यतावच्छेदक के वाच्यत्व नहीं रहने पर भी कोई दोष नहीं। और

'नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते' इस न्याय का विशेषणविशिष्टविशेष्य के बोध में तात्पर्य है किन्तु आपका जो यह तात्पर्य है कि विशेषण में शक्ति और विशेष्य में लक्षणा है, इसमें कोई प्रमाण नहीं मिलता। और जाति जब उपलक्षक है तो उसका आश्रय सकलव्यक्ति का बोध होगा ही अन्य व्यक्ति में बोध नहीं होने का प्रसङ्ग तो कदापि नहीं है।

इसलिए कहा है—कि

व्यक्ति के अनन्त होने पर भी एक धर्म उपलक्षण मानकर शब्द सम्बन्ध सुकर है और वह कभी भी व्यभिचरित नहीं होने वाला है।

और यह युक्त भी है। क्योंकि वृद्धलोगों ने व्याकरण से, उपमान से, कोश से, आप्तलोगों के वाक्य से, वृद्धों के व्यवहार से, वाक्य के शेष से, पदों के विवरण से, और प्रसिद्धपद के सामीप्य से शक्तिग्रह माना है।

जैसे 'पाचकः पक्ता' यहाँ पर वुण् और तृच् प्रत्यय विधायक व्याकरण से पाककर्तृत्व में शक्तिग्रह होता है।

'गोसदृशो गवयः' गौ के समान गवय होता है यहाँ उपमान शक्तिग्रह होता है।

'हरिदश्वो हरिः' यहाँ कोश के जरिये हरा घोडावाला सूर्य यह शक्तिग्रह होता है।

'पिकः' यहाँ आप्तवाक्य से पिक पद के कोइल में शक्तिग्रह होता है।

'गामानय' यहाँ के वृद्धों के व्यवहार से बालकों को गो और आनय पदार्थ में शक्तिग्रह होता है।

'यदाऽन्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति' अर्थात् जब और औषधियाँ मलिन पड़ जाती हैं तो ये सब हरे-हरे मालूम होने लगते हैं' इस वाक्य के शेषसे यवपद के लम्बीनोक वाला जौ में शक्तिग्रह होता है।

'घटः कलशः' इस विवरण से घटपद के कलश में शक्तिग्रह होता है।

तथा 'सहकारतरौ पिकः' 'आम के वृक्षपर कोयल रहता है' प्रसिद्ध आमवृक्ष के सान्निध्य से पिकपद के कोकिल में शक्तिग्रह होता है।

तो इन स्थलों में शक्तिग्राहक शिरोमणि के व्यवहार से यह पता चलता है कि व्यक्ति ही में शक्ति मानी जाती है जाति में नहीं क्योंकि गवादि पद से लोक में व्यक्ति ही का बोध होता है न कि गोत्व का।

यथार्थ में न तो "नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः द्रव्यपदार्थकस्य चाकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थः' अर्थात् जाति पदार्थ के द्रव्य अर्थात् व्यक्ति पदार्थ नहीं है, या व्यक्ति पदार्थ के जाति पदार्थ नहीं है यह बात नहीं किन्तु दोनों के दोनों पदार्थ हैं इस सरूप सूत्र के भाष्य से जाति विशिष्ट व्यक्ति में शक्ति है न केवल जाति ही में क्योंकि अनुभव भी वैसा ही होता है, और अनुभवसिद्ध बात का अपलाप करना ठीक नहीं।

लिङ्गमपि नामार्थः। प्रत्ययानां द्योतकत्वात्। अन्यथा वागुपानदादिशब्देभ्य इयं तव वागिति स्त्रीत्वबोधानापत्तेः। अयमितिव्यवहारविषयत्वं पुंस्त्वं, इयमितिव्यवहारविषयत्वं स्त्रीत्वम्, इदमितिव्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुन्नपुन्सकत्वम्। अत एव खट्वादिशब्दवाच्यस्य स्तनकेशादिमत्त्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकादाबादिप्रत्ययः।

जातिव्यक्त्योः नामार्थत्वं निर्दिश्य लिङ्गस्यापि नामार्थत्वं प्रदर्शयति—लिङ्गमपीति। लौकिकलिङ्गमेव नामार्थः तच्च लौकिकलिङ्गम्।

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥'

इत्यादिनाऽवयवविशेषसंस्थानरूपम्। दारानित्यादौ पुंस्त्वारोपेण तत्तत्प्रयुक्तकार्यम्। अत्र मानञ्च 'रात्राह्नाहाः पुंसि' इत्यादि लिङ्गानुशासनमेव बोध्यम्।

नागेशमते तु—'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः। एतयोरन्तरं यत्तु तदभावे नपुंसकम्' इत्यत्र केशशब्दस्य भगवाचकत्वाद् भगवत्त्वं स्त्रीत्वम्, लोमशः पुरुषः' इत्यत्र लोमन् शब्दस्य शिश्नवाचित्वात् शिश्नवत्त्वं पुंस्त्वम्। तत्तदाकारमात्रधारकत्वं नपुंसकत्वम्। इति परिभाषितलिङ्गस्य असार्वत्रिकत्वेन दारानित्यादौ नत्वसिद्धिः। तथा परिभाषितानां स्त्रीत्वादीनामप्राणिषु खट्वादिष्वनुपलम्भात् तद्वाचकात् शब्दाट्टाबादिर्न स्यात् अतो लोकप्रसिद्ध स्तनावयवसंस्थानविशेषात्मकं लिङ्गं व्याकरणे नाश्रीयते। अन्यथा दारानित्यादौ नत्वं न स्यात्। तथा तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रयनिबन्धनकार्याणामप्रसिद्धिप्रसङ्गश्च स्यात्। किन्तु—

संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्यानं स्त्यायतेड्ट् स्त्री सूतेः सप् प्रसवे पुमान् ॥

इति भाष्यसम्मतमेव लिङ्गत्रयं ग्राह्यम्। अर्थात् संस्त्यानं स्त्री सत्त्वरजस्तमो-

लक्षणानां गुणानामपचयः । प्रसवो गुणानामुपचयः सप् पुमान् । सूतेर्धातोः सप्सकारस्य पकारादेशः । औणादिकीमसुन्प्रत्ययो ह्रस्वश्च बाहुलकात् । तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकम् । न भ्राण्नपाद् इति निपातनात् । तथावस्थिति-साम्यं नपुंसकम् । अत एव—

> आविर्भावतिरोभावस्थितिश्चेत्यप्यपायिनः ।
> धर्मा मूर्तिषु सर्व्वासु लिङ्गत्वेन व्यवस्थिताः ।

इत्युक्तं हरिणा । कारिकायाम्—'स्वकृतान्ततः वैयाकरणसिद्धान्तत इति व्यवस्था । 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः । उपचयापचयावेव भाष्यकारेण प्रसवसंस्त्यान-शब्दाभ्यामुक्तौ । प्रसव आविर्भावः, संस्त्यानं तिरोभाव इति कैयटस्य व्याख्यानात् । उपचयापचययोरपि अन्ततः साङ्ख्यादिमते तद्रूपत्वात् । चितिशक्तिं विना सर्वेषां पदार्थानां परिणामित्वादाविर्भावतिरोभावधर्मकत्वम्, मध्ये स्थितेरप्यवश्यंभावात् स्थितिधर्मकत्वं चेति उपचयापचयस्थितयः पदार्थमात्रधर्मा इति अप्राणिखट्वाघटादि-साधारणं गुणोपचयादिरूपं लिङ्गम् । यद्यप्यवस्थात्रयं प्राकृतपदार्थमात्रवृत्ति तथापि कस्यचिच्छब्दस्य उपचयावस्थावैशिष्ट्येन, कस्यचिच्चापचयावस्थावैशिष्ट्येन, कस्य-चित् स्थित्यवस्थावैशिष्टेन, कस्यचिदवस्थाद्वयवैशिष्ट्येन, कस्यचिदवस्थात्रयवैशि-ष्ट्येन, बोधकत्वमिति लिङ्गानुशासनतो वृद्धव्यवहारतश्च । सर्वैर्निर्णेयम् । दृश्यते च घटादिशब्देभ्यो गुणोपचयवैशिष्ट्येन प्रतीतिः, घट्यादिशब्देभ्यश्च तदपचयवैशि-ष्ट्येन । न च गुणोपचयादिरूपाणां पुंस्त्वादीनां निरवस्थे पुरुषेऽभावात् पुरुषः, चितिः चैतन्यम् इति प्रतीत्यनुपपत्तिरिति वाच्यम् । तस्य निर्धर्मकत्वेन पदवाच्यत्वासम्भवेन शाब्दप्रतीतिविषयत्वस्यानङ्गीकारात् । अतएव स्त्रीत्वादीनां किञ्चिद्धर्मिनिष्ठात्यन्ता-भावप्रतियोगित्वरूपकेवलान्वयित्वोक्तिः सङ्गता भवति । किञ्चिद्धर्मारोपेण वाच्यत्व-मुपपाद्य शाब्दप्रतीतिविषयत्वोपपादने तु पुंस्त्वादेरपि आरोपेण पुरुष इत्यादिप्रतीति-सम्भवे इत्यवधेयम् ।

अन्यथा=प्रत्ययानां द्योतकत्वाभावे, अतएव=ईदृग् विलक्षणपुंस्त्वादि-स्वीकारादेव ।

हिन्दी—लिङ्ग भी नाम का अर्थ है । क्योंकि प्रत्यय द्योतक है वाचक नहीं । अन्यथा यदि वाचक माना जाय तो वाक् उपानत् आदि शब्दों से 'इयं तव वाक्' यहाँ स्त्रीत्व का बोध नहीं होने पायगा । क्योंकि 'अयम्' पद से व्यवहारका विषयवाला पुंल्लिङ्ग समझा जाता है, और 'इयम्' पदसे जिसका व्यवहार होता है वह स्त्रीलिङ्ग समझा जाता है, इदम् पद से जिसका व्यवहार होता है वह नपुंसक होता है' यह विलक्षण ( अपूर्व ) शास्त्रीय स्त्रीलिङ्ग पुंल्लिङ्ग नपुंसक है । इसलिए खट्वादि शब्दों का स्तन भग आदि लौकिक स्त्रीत्व नहीं रहने पर भी स्त्रीत्ववाचक शब्दों से टाप् वगैरह प्रत्यय होते हैं ।

सङ्ख्याऽपि नामार्थः। विभक्तीनां द्योतकत्वात्। अत एव "आदिर्ञिटुडव" इति सूत्रे आदिरिति बहुत्वे एकवचनम्। वाच्यत्वेऽन्वयव्यतिरेकाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तेः।

संख्याया अपि नामार्थत्वं प्रदर्शयति—संख्यापीति। विभक्तीनां द्योतकत्वादिति। वैयाकरणानां मते प्रकृतीनामेव संख्यावाचकत्वम्, विभक्तीनान्तु द्योतकत्वमेवेति तात्पर्य्यम्।

नन्वन्वयव्यतिरेकाभ्यां विभक्तीनामेव संख्यावाचकत्वम् कल्पनस्यौचित्यमिति चेन्न दधि पश्य, मधु आनय, इत्यादौ विभक्तिं विना संख्याकारकप्रतीत्या व्यतिरेकव्यभिचारात्। नैयायिकानाम्मते संख्याया अपि विभक्त्यर्थत्वम्, न प्रकृतेः। अनन्तप्रकृतीनां शक्ततावच्छेदकत्वकल्पनापेक्षया विभक्तीनां तत्कल्पने लाघवात्।

वस्तुतस्तु—

वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः।
यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः॥

इति हरिकारिकाबलात् न संख्यावाचिका प्रकृतिः, न वा विभक्तिः। किन्तु घट इति विभक्त्यन्तसमुदायः संख्याविशिष्टवाचकः। शक्ततावच्छेदकोऽपि तत्तदानुपूर्वी एवेति न कोऽपि दोषलेश इति भावः।

अतएव=विभक्तीनां द्योतकत्वादेव। जसं विनेति। प्रकृते जसं विनापि बहुत्वप्रतीतेर्व्यतिरेकव्यभिचारः स्पष्ट एवेति तात्पर्यम्।

हिन्दी—संख्या भी नाम का अर्थ है। क्योंकि विभक्ति द्योतक है वाचक नहीं। इसलिये 'आदिर्ञिटुडवः' इस सूत्रमें 'आदिः' यह एकवचन बहुत्वविवक्षा में है। विभक्ति वाच्य होता तो अन्वय व्यतिरेक के द्वारा जस् के बिना नामार्थ में बहुवचन की प्रतीति नहीं होगी।

कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः। नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमिति चेत् न दधि तिष्ठति दधि पश्येत्यादौ कर्त्रादिकारकप्रतीतेः प्रत्ययं विनापि सिद्धत्वात्। न च लुप्तप्रत्ययस्मरणात्तत्प्रतीतिरिति वाच्यम्। प्रत्ययलोपमजानतोऽपि नामत एव तत्प्रतीतेः।

विशेषणतया शब्दोऽपि शाब्दबोधे भासते। युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात्।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**

इत्यभियुक्तोक्तेः।

**ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते॥**
**विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते।**

इति वाक्यपदीयाच्च।

कारकस्यापि प्रातिपदिकार्थत्वं दर्शयति—कारकमपीति पञ्चकमिति।

एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकन्तथा।
नामार्थ इति सर्वेऽपि पक्षाः शास्त्रे निरूपिताः॥

अर्थात्

स्वार्थं द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च।
अमी पञ्चैव नामार्थाः शास्त्रे पक्षास्त्ववस्थिताः॥

इत्यनेन स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकाणां नामार्थस्यैव बोधनात्। 'अतभिहिते' इति सूत्रभाष्ये स्पष्टमिदम्।

ननु घटमानयेत्यादिशाब्दबोधे घटादिशब्दस्य भाने मानाभावेन तस्य कथं प्रातिपदिकार्थत्वमित्याशङ्कां समाधत्ते—शब्दोऽपीति। उक्तार्थे हरिकारिकैव प्रमाणम्—न सोऽस्तीति। लोके यः प्रत्ययः शब्दानुगमात् शब्दविषयत्वात् ऋते विनैव, सः प्रत्ययः शाब्दबोधात्मकः नास्ति, अनुविद्धं ज्ञानमिव, सर्वं शब्देन भासते। अयम्भावः—यथा ज्ञानं विषयमपोह्य न भासते; किन्तु विषयविशिष्टमेव तथा शब्दोऽपि स्वरूपं परित्यज्य न केवलमर्थं प्रत्याययतीति सारम्।

अनुव्यवसायो यथा अर्थविशिष्टंज्ञानं विषयीकरोति तथा शब्देन विशिष्टमपीति सारम्। वैशिष्टयञ्चार्थद्वारैवेति ज्ञेयम्। अनुव्यवसायाद्धि घटपदजन्यबोधानन्तरं घटं शाब्दयामीत्येव बोधो नतु कलशं कुम्भं वा शाब्दयामीति बोधः।

अतएव 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ न पौनरुक्त्यदोषः। तत्पादानुपादाने च उदयास्तयोः शाब्दबोधे एकरूपेण निर्वाहो न स्यादिति तत्त्वम्।

उक्तार्थे वाक्यपदीयपद्यमपि प्रमाणत्वेनोपन्यस्यति—ग्राह्यत्वमिति। यथा तेजसः ग्राह्यत्व-ग्राहकत्वशक्ती तथैव सर्वशब्दानाम् एते ग्राह्यत्व-ग्राहकशक्ती पृथक् अवस्थिते, निश्चिते विषयत्वम् अनादृत्य परित्यज्य शब्दैः अर्थः न प्रकाशते प्रत्याय्यते इत्यर्थः।

हिन्दी—कारक भी प्रातिपदिकार्थ अर्थात् नामार्थ है इस प्रकार पञ्चक ( पाँच ) प्रातिपदिकार्थ है।

अब शङ्का यह होती है कि 'यत्सत्वे यत्सत्वमन्वयः, यदभावे यदभावो व्यतिरेकः, इस अन्वयव्यतिरेक से प्रत्यय ही का वह अर्थ है प्रातिपदिक का अर्थ क्यों कहते हैं?

उत्तर यह है कि—'दधि तिष्ठति' 'दधि पश्य' इत्यादि स्थलों में कर्ता कर्म आदि

कारक की प्रतीति प्रत्यय के बिना भी स्वतः सिद्ध है तो प्रत्यय का अर्थ किस प्रकार समझा जाय इसलिए यह शङ्का ठीक नहीं।

यदि यह कहें कि दधि में जो 'स्वमोर्नपुंसकात्' इस सूत्र से प्रत्यय लुप्त हो गया है उसी के स्मरण से कर्ता आदि की प्रतीति हो जायगी, यह भी ठीक नहीं क्योंकि प्रत्यय लोप करना जो नहीं जानता है उसे भी केवल नाम ही से कर्ता आदि की प्रतीति हो जाती है तो प्रत्यय का अर्थ वह कदापि नहीं हो सकता।

पुनः सन्देह यह होता है कि 'घटमानय' कहने से शाब्दबोध में घटशब्द के भान में कोई प्रमाण नहीं मिलता तो प्रातिपदिक का अर्थ किस प्रकार समझा जाय।

उत्तर यह है कि—शाब्दबोध में शब्द भी विशेषण होकर भासता है अर्थात् मालूम पड़ता है। क्योंकि 'युधिष्ठिर आसीत्' इत्यादि स्थलों में युधिष्ठिर शब्द से ही युधिष्ठिर सदृश कोई था यह बोध होता है।

अभियुक्तों ने कहा है भी—कि जिस प्रकार शब्दानुगम के विना लोक में कोई भी प्रतीति नहीं होती है अर्थात् जिस प्रकार ज्ञान विषय से अतिरिक्त नहीं मालूम पड़ता है उसी प्रकार शब्द भी अपना स्वरूप छोड़कर अर्थ की प्रतीति नहीं कराता है।

वाक्यपदीय में भी लिखा है कि—जिस प्रकार तेज की दो शक्ति होती है एक ग्राह्यत्व शक्ति दूसरी ग्राहकत्व शक्ति उसी प्रकार सभी शब्दों की दो शक्तियाँ होती हैं एक ग्राह्यत्व शक्ति दूसरी ग्राहकत्व शक्ति। शब्द अपना विषय (स्वरूप) छोड़कर अर्थ की प्रतीति नहीं कराता है।

अतः प्रातिपदिक का ही जात्यादि अर्थ है प्रत्यय का नहीं।

**अत एव विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः अत एवानुकरणेनानुकार्य्यस्वरूपप्रतीतिः। तथाहि—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्। स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम्। तत्रानुकार्यादनुकरणं भिद्यते इति तयोर्भेदविवक्षायामनुकार्यस्वरूपप्रतिपादकत्वेनार्थवत्त्वात् प्रातिपदिकत्वात्स्वादिविधिः। भेदपक्षज्ञापकः 'भुवो वुग्लुङ्लिटो'' इत्यादिनिर्देशः। अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदिकत्वम्, न वा पदत्वम्। अभेदपक्षकस्तु 'भू-सत्तायाम्' इत्यादिर्निर्देशः। प्रातिपदिकत्वपदत्वाभावेऽपि भू इत्यादि साधु भवत्येव।**

अतएव = शब्दस्य शाब्दबोधे भानादेव। एतेन जात्यादिपञ्चकेन सह षट्कं प्रातिपदिकार्थं इत्यव गतम्। इदमुपलक्षणं षट्कं धात्वर्थस्येत्यपि वोध्यम्।

अनुकरणत्वस्य लक्षणमाह—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वम् अनुकरणत्वमिति। स्वशब्देनात्र अनुकार्यत्वस्य परिग्रहः। स्वम्—अनुकार्यस्तत्सदृशो यः शब्दस्तन्मात्र बोधतात्पर्येण य उच्चारणविषयस्तत्त्वम् अनुकरणत्वमित्यर्थः। अनुकार्यस्य

लक्षणं हि—

स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम् अनुकार्य्यत्वम्। स्वम्–अनुकार्यस्तत्सदृशो यः शब्दस्तेनैव प्रतिपाद्यत्वे सति शब्दत्वमेव अनुकार्यत्वमित्यर्थः। अर्थेऽपि स्वसदृशशब्दप्रतिपाद्यत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणाय अनुकार्यलक्षणे शब्दत्वमिति निवेशः।

अनुकार्यादनुकरणं भिद्यत इति। अनुकरणस्य अनुकार्यनिरूपितशक्तिकल्पनया वृत्तिमत्त्वरूपार्थवत्त्वस्यानुकरणे सत्त्वेन भेदपक्षे स्वादिविधिरुपपद्यते। अतः "भुवोवुक्" "क्षियो दीर्घात्" इत्यादिनिर्देशाः संगच्छन्ते इति भावः। पक्षोऽयं "मतौ छः सूक्त" इति सूत्रे भाष्ये उक्तः।

हिन्दी—शाब्दबोध में शब्द का भी भान होता है इसलिए "विष्णुमुच्चारय" इत्यादि स्थलों में अर्थ का उच्चारण असम्भव है अतः शब्द की प्रतीति होती है और इसीलिये अनुकरण से अनुकार्य स्वरूप की प्रतीति होती है।

क्योंकि अनुकरण का लक्षण यह है—"स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वम् अनुकरणत्वम्" अर्थात् अनुकार्य के सदृश केवल शब्द के बोध तात्पर्य से जो उच्चारण का विषय होता है वही अनुकरण होता है। इसी प्रकार अनुकार्य का लक्षण यह है—"स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम् अनुकार्यत्वम्"। अर्थात् जो अनुकार्य के सदृश हो और शब्द हो वही अनुकार्य है। उनमें दो पक्ष हैं–एक "अनुकार्य से अनुकरण भिन्न होता है" यह भेदपक्ष है। इस पक्ष में अनुकार्य और अनुकरण इन दोनों के भिन्न होने से अनुकार्य के स्वरूप का प्रतिपादक अनुकरण होता है इसलिये अर्थवत्त्व मानकर प्रातिपदिक संज्ञा होने से स्वादि विभक्ति होती है। इस पक्ष का ज्ञापक "भुवो लुग्लुङ्लिटोः" इत्यादि निर्देश ही है। अन्यथा 'भुवः' में विभक्ति नहीं होने पाती।

दूसरा–"अनुकार्य से अनुकरण भिन्न नहीं होता" यह अभेद पक्ष है। इस पक्ष में अर्थवत्त्व नहीं रहने से प्रातिपदिक संज्ञा नहीं होने पाती है और न पद ही कहाता है। इस पक्ष का ज्ञापक "भू सत्तायाम्" इत्यादि निर्देश ही है। यहाँ प्रातिपदिक संज्ञा और पद संज्ञा नहीं होने पर भी भू इत्यादि साधु अर्थात् शुद्ध ही है।

ननु अपदं न प्रयुञ्जीत' इति भाष्यादसाध्विदमिति चेत्, न। अपदमित्यस्य हि अपरिनिष्ठितमित्यर्थः। परिनिष्ठितत्वं च-अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्। देवदत्तो भवतीत्यादौ 'तिङ् तिङः' इति निघाते जातेऽतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्ववारणाय अप्रवृत्तेति। 'स्वरति' इत्यादिविकल्पसूत्रस्य पाक्षिकप्रवृतौ 'सेद्धा, इत्यादावसाधुत्ववारणाय नित्यविधीति। अभेदपक्षे तु 'अर्थवत्' इति

सूत्रस्यार्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि भू इत्यादि परिनिष्ठितम् । परिनिष्ठितसाधुशब्दौ पर्यायौ ।

नन्वननुकरणस्यानुकार्यस्वरूपबोधकत्वस्याभावेन कथमनुकार्यस्वरूपप्रतीतिरिति चेत्, सादृश्याख्यसम्बन्धनेति गृहाण । यथा मैत्रसदृशपिण्डदर्शने मैत्रस्मरणम् । एवं भू-इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति सङ्क्षेपः ।

इति नामार्थनिरूपणम् ।

---

भू-इत्यादेरसाधुतां प्रदर्श्य खण्डयति--नन्विति । परिनिष्ठतस्य लक्षणं हि--"अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्" इति । अप्रवृत्तो यो नित्यविधिस्तस्य यत् उद्देश्यतावच्छेदकन्तेनानाक्रान्तत्वम् इत्यर्थः ।

यथा राम सु इत्यत्र अप्रवृत्तो नित्यविधिः "सजुषो रुः" इत्यादिविधिः तदुद्देश्यतावच्छेदकाक्रान्तत्वात् तस्य अपरिनिष्ठितत्वम् ।

राम इत्यस्य तु "ससजुषो रुः" इत्यादिशास्त्रीयोद्देश्यतावच्छेदकानाक्रान्तत्वात् परिनिष्ठित्वम् इति बोध्यम् ।

अनुकरणस्यानुकार्यस्वरूपप्रतीतौ बाधां प्रदर्श्य खण्डयति—नन्वनुकरणस्येति । यथेति । यथा गोसदृशपिण्डदर्शनेन गवय ज्ञानं भवति तथा मैत्रसदृशपिण्डदर्शनेन मैत्रस्य स्मरणं जायते इति भावः ।

इति तत्त्वप्रकाशिकायां नामार्थनिरूपणम् ।

---

हिन्दी—पुनः शंका यह होती है कि—"अपद का प्रयोग नहीं करना चाहिये" इस भाष्य के अनुसार भू इत्यादि का साधुत्व किस प्रकार कहा जा सकता हे ?

उत्तर यह है कि—"अपदम्" का अर्थ अपरिनिष्ठित है । परिनिष्ठित का लक्षण यह है—"अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्" अर्थात् अप्रवृत्त ( प्रवृत्त नहीं ) जो नित्यविधिशास्त्र उसका जो उद्देश्य नहीं हो । जैसे "रामः" अप्रवृत्त नित्यविधि "ससजुषो रुः" इस शास्त्र के उद्देश्यतावच्छेदक से आक्रान्त नहीं है अर्थात् उसकी अब प्रवृत्ति नहीं है इसलिये 'रामः' परिनिष्ठित है अर्थात् साधु है ।

"राम सु" इस अवस्था में अप्रवृत्त नित्यविधि "ससजुषो रुः" इस सूत्र का जो उद्देश्य है उस उद्देश्यतावच्छेदक से आक्रान्त ही अर्थात् उसकी प्रवृत्ति ही है इसलिये "राम सु" अपरिनिष्ठित है अर्थात् असाधु है ।

"देवदत्तो भवति" इत्यादि स्थलों में "तिङ्ङतिङः" इस सूत्र से अनुदात्त हो जाने पर अतिङन्त देवदत्तपद से परे तिङन्त भवति उद्देश्यतावच्छेदक 'तिङतिङः' इस सूत्र

का है ही इसलिये अपरिनिष्ठित नहीं कहा जाय इसलिए 'अप्रवृत्त' दिया है। तिङ्तिङः यह सूत्र तो प्रवृत्त हो ही चुका है अतः यह परिनिष्ठित ही है।

"स्वरति सूति सूयति धूञ् दितो वा' इस विकल्पसूत्र की जब पाक्षिक प्रवृत्ति है तब तो एक पक्ष में नहीं लगेगा तो इट् के अभाव पक्ष में "सेद्धा" परिनिष्ठित अर्थात् साधु प्रयोग नहीं कहा जा सकता है इसलिए लक्षण में 'नित्य विधि' का निवेश किया है "स्वरति" सूत्र नित्य विधिशास्त्र नहीं है इसलिये अप्रवृत्तनित्यविध्युद्देश्यताव-च्छेदकानाक्रान्त हुआ हो अतः सेद्धा परिनिष्ठित ही है अपरिनिष्ठित नहीं कहा जा सकता।

अभेदपक्ष में तो "अर्थवत्" सूत्र के अर्थवत्त्व रूप उद्देश्यतावच्छेदक से आक्रान्त नहीं होने के कारण "अर्थवत्" सूत्र की प्रवृत्ति नहीं होने पर भी भू सत्तायाम् वगैरह परिनिष्ठित कहा जाता है। परिनिष्ठित और साधु शब्द दोनों पर्यायवाचक शब्द हैं।

पुनः शङ्का यह होती है कि—जब अनुकरण अनुकार्यस्वरूप का बोधक नहीं है तो अनुकार्यस्वरूप की प्रतीति किस प्रकार होती है?

उत्तर यह है कि—"सादृश्य सम्बन्ध से अनुकार्यस्वरूप की प्रतीति होती है', यह उत्तर लीजिये।

जैसे—मैत्र के सदृश किसी मांसपिण्ड विशिष्ट व्यक्ति को देख लेने पर मैत्र का स्मरण हो जाता है। जिस प्रकार गोसदृश पिण्ड से देखने पर गवय का ज्ञान हो जाता है, उसी प्रकार भू इत्यादि अनुकरण के ज्ञान हो जाने पर अनुकार्य का भी ज्ञान हो जाता है, यह संक्षिप्त सुझाव है।

इति तात्पर्यदीपिकायां हिन्दीभाषायां नामार्थ-विचारः।

## अथ समासादिवृत्त्यर्थनिरूपणम्

अथ समासादि वृत्त्यर्थः। वृत्तिर्द्विधा। जहत्स्वार्थाऽजहत्स्वार्था च। अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम्। अवयवार्थसंबलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्। रथन्तरं सामभेद; शुश्रूषा सेवा इति पूर्वोदाहरणम्। राजपुरुष इत्यादावन्त्या। समासादिपञ्चसु विशिष्टे एव शक्तिर्न त्ववयवे। रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात्। अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य 'अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इत्युक्तम्। धवखदिरौ, निष्कौशाम्बिः, गोरथो, घृतघटो, गुडधानाः, केशचूडः सुवर्णालङ्कारो, द्विदशाः, सप्तपर्ण, इत्यादौ साहित्य-क्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुच्प्रत्ययलोप-वीप्साद्यर्था वाचनिका वाच्या इति तद्भाष्याशयः ॥

अथ प्रसङ्गात् समासशक्ति प्रदर्शयति—अथेति। समासादात। अत्रादिपदेन कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो गृह्यन्ते।

वृत्तेर्द्वैविध्यं दर्शयति=वृत्तिर्द्विधेति। एका जहत्स्वार्था—जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था। द्वितीया—अजहत्स्वार्था नजहति पदानि स्वार्थं यस्यामिति अजहत्स्वार्था।

जहत्स्वार्थाया लक्षणम्—अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वम् जहत्स्वार्थात्वम्। अर्थात् यत्र वृत्तौ अवयवार्थस्य न काऽप्यपेक्षा केवलं समुदायार्थस्यैव सा जहत्स्वार्था वृत्तिः।

अजहत्स्वार्थाया लक्षणम्—अवयवार्थसंवलितसमुदायार्थवोधिकात्वम् अजहत्स्वार्थात्वम्। अर्थात् यस्यां वृत्तौ अवयवार्थेन साकं समुदायर्थस्य बोधः सा किल अजहत्स्वार्था वृत्तः।

जहत्स्वार्थाया उदाहरणानि—रथन्तरं साम, शुश्रुषा सेवा इत्यादीनि। अनयोरवयवार्थास्य किञ्चिदपि न भानम् किन्तु समुदायार्थस्यैव।

अजहत्स्वार्थाया उदाहरणम्—राजपुरुष इत्यादि। राजपुरुष इत्यादौ च राज्ञः पुरुष इत्यादिविग्रहे अवयवार्थस्यापि भानम् समुदायार्थस्यापि।

रथन्तरं सामेत्यादौ अवयवार्थस्य अनुभवाभावेन पञ्चसु वृत्तिषु विशिष्ट एव शक्तिर्मन्तव्या नैवावयवे इत्यवधेयम्।

उक्तार्थे लाभमाह—अत एवेति। अतएव विशिष्टे शक्तिस्वीकारादेव। "राजपुरुषः" इति समासस्य स्वस्वामिभावसम्बन्धेन राजसम्बन्धिनि पुरुषे शक्तिः। एवं रथन्तरादि कृदन्तस्य सामविशेषे शक्तिर्नत्ववयवे। अन्यथा रथकरणकतरणकर्तुर्बोधापत्तेः। तथा

पङ्कजशब्देन पङ्कजनिकर्तुः शैवालादेरपि बोधापत्तिः स्यादित्यवगन्तव्यम् । साहित्येति ।

एकार्थीभावरूपसामर्थ्यवादिशाब्दिकमते साहित्याद्यर्थान्तर्भावेन वृत्तिकल्पनात् तेषां बोधे तत्तत्पदनिष्ठतत्तदर्थनिरूपितशक्तिग्रहाधीनतत्तदर्थोपस्थितेः । कारणेत्यस्य पृथक् पृथक् कल्पनं न कर्त्तव्यं भवतीति लाघवम् । परमते तु वृत्त्याऽप्रतिपादितार्थस्य अन्वयबोधे मानविरहेण तत्तत्पदस्य तत्तदर्थे पृथक् शक्तिकल्पने तत्तच्छक्तिज्ञानस्य पृथक् पृथक् अर्थ-स्मरणे कारणत्वकल्पने च महद्गौरवमित्यवधेयम् ।

हिन्दी—अब कृत्, तद्धित, एकशेष, समास और सनाद्यन्त इन पाँच वृत्तियों का अर्थ-विचार किया जाता है ।

वृत्ति दो प्रकार की होती हैं । एक जहत्स्वार्था वृत्ति दूसरी अजहत्स्वार्था वृत्ति । जिस वृत्ति में पद अपना अर्थ छोड़ देते हैं, वह जहत्स्वार्था वृत्ति है । जिस वृत्ति में पद अपना अर्थ नहीं छोड़ते हैं, वह अजहत्स्वार्था वृत्ति है । इसलिए जहत्स्वार्था का लक्षण यह है—"अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वम् जहत्स्वार्थात्वम्" अर्थात् जिस वृत्ति में अवयवों के अर्थ की अपेक्षा नहीं कर केवल समुदायार्थ बोध हो वह जहत्स्वार्था वृत्ति है । जैसे—रथन्तरं साम शुश्रूषा सेवा, यहाँ अवयवों का अर्थ कुछ नहीं होता केवल समुदाय का अर्थ साम और सेवा होता है ।

अजहत्स्वार्था का लक्षण यह है—

"अवयवार्थसंवलितसमुदायार्थबोधिकत्वम् अजहत्स्वार्थात्वम्" अर्थात् अवयवों के अर्थ के साथ साथ समुदाय का अर्थ जिस वृत्ति में हो वह अजहत्स्वार्था वृत्ति है ।

जैसे—"राजपुरुषः" यहाँ अवयव का भी अर्थ राजा का पुरुष होता है और समुदाय का भी अर्थ राज सम्बन्धी पुरुष होता है ।

उक्त पाँच वृत्तियों में विशिष्ट ही में शक्ति है, अवयव में नहीं क्योंकि 'रथन्तरं साम' इत्यादि स्थलों में अवयवार्थ अनुभव नहीं होता ।

विशिष्ट ही में शक्ति है इसलिए भाष्य में व्यपेक्षापक्ष लेकर यह कहा है कि—

'इस व्यपेक्षा में सामर्थ्य में जो एकार्थी भावकृत विशेषता हो वह कहना चाहिए' ।

'धवखदिरौ' धवश्च खदिरश्च 'धवखदिरौ' यहाँ साहित्य अर्थ, कौशाम्ब्या निष्क्रान्तः निष्कौशाम्बिः यहाँ क्रान्त अर्थ 'गोभिर्युक्तः रथः गोरथः' यहाँ युक्त अर्थ, 'घृतेन पूर्णः घटः घृतघटः' यहाँ पूर्ण अर्थ, 'गुडेन मिश्रा धाना गुडधानाः' यहाँ मिश्र अर्थ, 'सप्तानां वर्णानां संघातः सप्तवर्णः' यहाँ संघात अर्थ 'केशानां चूडः संघातः केशचूडः' यहाँ भी संघात अर्थ, 'स्वर्णानां विकारः अलङ्कारः स्वर्णालङ्कारः' यहाँ विकार अर्थ, 'द्विगंता दश द्विदशाः' सुच्प्रत्यय का लोप अर्थ, वीप्सा आदि अर्थ वाचनिक कहना चाहिये यह भाष्य का तात्पर्य है ।

यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः—न समासे शक्तिः। राजपुरुषं इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधात् अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादिविशेषणान्वयः। 'पदार्थः पदार्थेनान्वेति', न तु पदार्थैकदेशेन' इत्युक्तेः। 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो' न इत्युक्तेश्च। न वा घनश्यामो निष्कौशाम्बिः, गोरथ इत्यादावविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया 'उक्तार्थानामप्रयोग' इति न्यायेन इवादीनामप्रयोगात्। नापि 'विभाषा' इति सूत्रमावश्यकम्, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। नापि शक्तिः पङ्कजशब्दत्वात्। इति पङ्कजशब्दप्रतिद्वन्द्विता शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि ततो बोधात्।

न च शक्त्यग्रहे लक्षणया तस्माद्विशिष्टार्थप्रत्ययः सम्भवति। अत एव राजपदादिशक्त्यग्रहे राजपुरुष इत्यादिषु न बोधः। न च चित्रगुरित्यादौ लक्षणासम्भवेऽप्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असम्भवः, बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्। प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात् पूर्वपदस्य यौगिकत्वेन तत्र लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च। घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। प्रकृते चात्यन्तसन्निधानेन प्रत्ययान्वयसौलभ्यायोत्तरपदे एव लक्षणा कल्प्यत इति विशेषः। स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्येव वाचकत्वं मीमांसकंमन्यैरित्याहुः।

व्यपेक्षावादिनां नैयायिकमीमांसकादीनां मतं प्रदर्शयति—यत्त्वित्यादिना। इत्थं हि तन्मतम्—राजपुरुष इत्यादौ राजपदादे राजसम्बन्धिनि लक्षणया समुदायशक्तिमन्तरापि सम्बन्धभानसम्भवे समासे शक्तिर्नैव स्वीकार्य्या।

अतएव अर्थात् समासे शक्त्यस्वीकारादेव 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्त्या 'ऋद्धस्य राजपुरुष' इत्यत्र ऋद्धपदार्थस्य राजपुरुषैकदेशपदार्थेनान्वयो भवति।

पदार्थत्वञ्च—आश्रयत्वसम्बन्धावच्छिन्न-बोधविषयतात्वावच्छिन्न-प्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वम्।

पदार्थैकदेशत्वञ्च—अवच्छेदकत्वसम्बन्धावच्छिन्न-बोधविषयतात्वावच्छिन्न-प्रकारतानिरूपितभगवदिच्छीय-विशेष्यताश्रयत्वम्।

'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तौ मानञ्च—'पदाप्रयोज्य-

सांसर्गिकविषयताभिन्न-विषयतासम्बन्धेन शाब्दबोधे मुख्यविषयतासम्बन्धेन उपस्थिति-कारणमिति कार्यकारणभाव एव। एवञ्च कार्यकारणभावमूलिकेयं व्युत्पत्तिः। घटत्वे नित्यान्वयतात्पर्य्येण 'नित्यो घटः' इति वाक्यस्य घटत्वस्य मुख्यविषयतासम्बन्धेनोप-स्थितेरभावात् यथा प्रामाण्यं न स्यात् तदर्थमेवैषा व्युत्पत्तिः।

'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इत्युक्तिरपि मत्पक्षस्यैव साधिका। अन्यथा ऋद्धपदार्थस्य राजपुरुषैकदेशपदार्थेऽन्वयो दुर्वार एव स्यात्।

'उक्तार्थानामप्रयोग' इति न्यायेन घनश्याम इत्यादौ अस्मन्मते इवादिप्रयोगापत्तिरपि नायाति।

अस्मन्मते 'विभाषा' इति सूत्रस्यापि नावश्यकता। लक्षणया 'राजसम्बन्ध्यभिन्न' इति वक्तृबोधतात्पर्ये समासस्य 'राजसम्बन्धवान्' इति वक्तृबोधतात्पर्ये विग्रहस्य च प्रयोगसम्भवात्।

समासे खलु भिन्नैव शक्तिः पंकजशब्दवत्।
बहूनां वृत्तिधर्माणां वचनैरत्र साधने॥
स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः।

पङ्कजशब्दवत् समासे खलु भिन्नैव विशिष्टैव शक्तिः स्वीकार्या। बहूनां वृत्तिधर्माणां वचनैरेव सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इत्याद्यपूर्वैः वचनैरेव साधने महद् गौरवं स्यात्। तस्माद्धेतोः एकार्थीभाव आश्रित इत्यर्थः।

उपर्युक्तकारिकाऽपि नैव समासशक्तिसाधिका। ये चावयवशक्तिं न जानन्ति तेषामपि बोधो यतो जायतेऽतोऽस्मन्मते समासे नैव शक्तिः।

शक्तेरग्रहे लक्षणया विशिष्टार्थप्रतीतेरपि नैव सम्भावना। लक्षणाग्रहे शक्तिग्रहस्य कारणत्वात्।

चित्रगुरित्यादौ चित्रगुशब्दस्य चित्राभिन्नगवीसम्बन्धि-लक्षणायाः सम्भवेऽपि अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदकादिद्वितीयाद्यर्थबहुव्रीहौ 'समानाधिकरणनामार्थयोरभे-दान्वयं इति व्युत्पत्तिभङ्गापत्तिभिया लक्षणायास्तु असम्भवोऽपि नैव वाच्यः उक्तस्थले उदकपद एव लक्षणायाः स्वीकारात्। उक्तस्थले 'ग्रामकर्मकप्राप्तिकर्त्रभिन्नमुदकमिति विग्रहार्थस्य सम्भवः उदककर्तृकः प्राप्तिकर्मीभूतो ग्राम इति समासार्थस्य सम्भवः। प्राप्तेति पूर्वपदे यौगिकत्वेन यदा धातुप्रत्ययतदर्थज्ञानं स्यात् तदैव लक्षणा स्यात्, किन्तु तज्ज्ञाने विलम्बः। 'प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वम्' इति व्युत्पत्तिस्त-दनुरोधादपि प्राप्तेति पूर्वपदे नैव लक्षणायाः सम्भवः। घटादिपदे चातिरिक्ता शक्ति-र्विशिष्टे कल्प्यते। 'प्राप्तोदकं' इत्यत्र प्रत्ययान्वयाय उत्तरपद एव लक्षणा कल्प्यते इत्येवास्मन्मते विशेषः घटादिपदेष्वपि चरणवर्णस्यैव वाचकत्वं न समुदायस्य इति व्यपेक्षावादिनां मतम्।

परे तु—विशिष्टशक्तेरस्वीकारो राजपुरुषादिसमासे पूर्वपदस्य लक्षणारूपजघन्य-वृत्त्यस्वीकार एव गौरवम् ।

तथा दास्याः पुत्र इति विग्रहे षष्ठीसमासेऽपि पूर्वपदस्य दासीसम्बन्धिनि लक्षणया दासीसम्बन्ध्यभिन्नपुत्र इति बोधे दासीपुत्रशब्दस्य कर्मधारयत्वापत्त्या 'पुम्वत्कर्मधारय-जातीयदेशीयेषु' इति सूत्रेण दासीपदस्य पुंवद्भावापत्तिः । अभेदसम्बन्धावच्छिन्नप्रकार-ताप्रयोजकपूर्वपदघटितसमासस्यैव कर्मधारयत्वात् ।

मन्मते तु नायं दोषः । कर्मधारयाधिकारपठितसमासस्य कर्मधारयत्वाङ्गीकारात् ।

ननु यत्र समासात्प्राक् समासार्थलौकिकविग्रहवाक्यस्य अभेदसंसर्गावच्छिन्नप्रकारता-प्रयोजकपदघटितत्वं तत्रैव कर्मधारयत्वम्, अभेदसंसर्गावच्छिन्नप्रकारताप्रयोजक-पदघटितलौकिकविग्रहवाक्यवत्त्वमेव वा कर्मधारयत्वमिति चेन्न । "मृगीव चपला" इति विग्रहवतो मृगी चपलेति समासस्य कर्मधारयत्वानापत्तेः । त्वन्मते इवनिपातस्य वाचकत्वेन उक्तविग्रहवाक्ये मृगीपदस्य तादृशप्रकारताप्रयोजकत्वाभावात् । मन्मतेऽपि राजपुरुषादि-समासीयपूर्वपदार्थेऽसमस्तपदार्थान्तरस्य पदार्थैकदेशत्वान्नान्वयसम्भव इति वदन्ति ।

राजसम्बन्धवान् पुरुष इति । यद्यप्यत्र शेषषठ्याः सम्बन्धसामान्यमर्थः । तथापि प्रकृते तस्य सम्बन्धत्वे नोपस्थितावपि योग्यताबलात् तात्पर्यनिश्चयबलाच्च स्वस्वामि-भाव एव सम्बन्धो भासते । एवञ्च राजनिरूपितस्वत्ववान् पुरुष इति शाब्दबोध-फलति भवन्मते ।

मन्मते तु षष्ठ्यर्थस्य संसर्गतयैव भासनात् स्वत्वोपस्थितेरधिकपदार्थघटितस्य राज-निरूपितस्वत्वाभाववान् पुरुष इत्याद्यधिकपदार्थघटितश्च बाधनिश्चयाभावरूपयोग्यताया-कारणत्वकल्पनाद् गौरवम् ।

किञ्च विभिन्नविषयकप्रत्यक्षं प्रति शाब्दबोधसामग्रीप्रतिबन्धकतायामपि त्वन्मते गौरवम् । राजपुरुष इति समासस्य अन्यार्थत्वे राज्ञः पुरुष इत्यस्य चार्थान्तरपरत्वे समानार्थकत्वभङ्गश्च ।

मन्मते तु—विग्रहवाक्ययोरेकार्थत्वेन न समानार्थकत्वभङ्गः । अत एव मन्मते राजपुरुषेति समस्तपदस्य राजविशिष्टपुरुषार्थकत्वे राज्ञः पदार्थैकदेशत्वेनैव तत्र पदार्था-न्तरान्वयाभावेन 'सविशेषणानावृत्तिर्न्न वृत्तस्य च विशेषणयोगो न' इत्यपूर्ववचनं नैव कल्पनीयं भवति ।

यथा त्वन्मते पङ्कजशब्दे विशिष्टशक्त्यैव पङ्काधिकरणकोत्पत्तिमत्पुष्पविशेषबोधोऽभि-मतस्तथा मन्मतेऽपि पञ्चसु वृत्तिषु विशिष्टशक्तिकल्पनमिति नैव कश्चिद् विशेषः ।

यत्तु नामार्थयोर्भेदसंसर्गेणान्वयोऽव्युत्पन्नः । नामार्थनिष्ठभेदसंसर्गावच्छिन्नप्रकारता-निरूपितविशेष्यतासंसर्गेण शाब्दबोधं प्रति विशेष्यतासंसर्गेण प्रत्ययजन्योपस्थितेः कारण-त्वात् । अतएव प्रकृते राजपदार्थस्य स्वत्वसंसर्गेण पुरुषे नान्वय इत्याहुः ।

तन्न । घटो न पट इत्यादौ घटस्य प्रतियोगितया भेदेऽन्वयदर्शनेन उक्तव्युत्पत्तेर्व्यभिचारात् न कार्यतावच्छेदककोटौ विशेष्यतायां निपातार्थावृत्तित्वेन विशेषणत्वे न कोऽपि दोष इति वाच्यम् । तत्र मानाभावात् ।

अषष्ठ्यर्थबहुव्रीहावपि इति । यत्त्वत्र षष्ठ्यर्थबहुव्रीहावपि समुदायेऽपि न लक्षणा जघन्यवृत्तिकल्पनमपेक्ष्य विशिष्ट एव शक्तिकल्पनाया अन्याय्यत्वात् । किन्तु पूर्वपदएव-राजपुरुषादिपदवत् इति केचिदाहुस्तन्न । गोपदेऽपि प्रकृते तथा सम्भवेन विनिष्काम-कामावात् । उभयपदे लक्षणायान्तु, चित्रास्वाम्यभिन्नो गोस्वामीति बोधः स्यात् । गौ-पदस्य लाक्षणिकत्वे चित्रापदस्य च तात्पर्यग्राहकत्वे च यद्यपि स्वामिनाऽन्यपदार्थेन साक्षात्सम्बन्धो नियामकः, तथापि अषष्ठ्यर्थबहुव्रीहो प्राप्तोदकादिशब्दे प्राप्तपदस्य उदक-पदस्य वा लक्षणेत्यत्र विनिगमकाभावात् उभयोरपि तदापत्तिः । प्राप्तोदकं पश्येत्यत्र उदका-दिपदवाच्यस्य द्वितीयार्थकर्मतया दर्शनादौ साक्षादन्वयानुरोधेन प्रत्ययानां सन्निहितपदा-र्थान्वितस्वार्थबोधकत्वव्युत्पत्त्या च उदकपद एव लक्षणेत्यपि वक्तुमशक्यम् । तुल्यन्यायेन घटादिपदेष्वपि अन्तिमवर्णेष्वेव लाघवाद्वाचकत्वापत्तौ तावन्मात्रोच्चारणेनापि कम्बुग्रीवा-दिमद्बोधापत्तेरित्यलम् ।

हिन्दी—व्यपेक्षावादी नैयायिक और मीमांसकों ने जो यह कहा है कि—समास में शक्ति अर्थात् समुदाय में शक्ति नहीं माननी चाहिये क्योंकि 'राजपुरुष' इत्यादि स्थलों में राजपदादि के सम्बन्धी में लक्षणा मानने ही से 'राजसम्बन्धवदभिन्नः पुरुषः' राज-सम्बन्धी पुरुष है यह बोध हो जाता है।

समास में शक्ति नहीं है इसलिए 'ऋद्धस्य राजपुरुषः' यहाँ 'पदार्थः पदार्थेनान्वेति, नतु पदार्थैकदेशेन अर्थात् पदार्थ पदार्थ के साथ अन्वित होता है पदार्थ के एकदेश के साथ नहीं इस व्युत्पत्ति के अनुसार तथा 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगी न' अर्थात् 'जो विशेषण के साथ है उसको वृत्ति नहीं होती और वृत्त का विशेषण के साथ योग भी नहीं होता' इस उक्ति के अनुसार ऋद्धपद के राजपुरुष के एकदेश राजपदार्थ में अन्वय नहीं होता है।

यदि यह कहें कि आपके मत में 'घनश्यामः, निष्कौशाम्बिः, गोरथ' इत्यादि स्थलों में इव आदि का प्रयोग करना होगा तो यह नहीं कह सकते क्योंकि लक्षण ही से जब इवाद्यर्थ उक्त हो जायेंगे तो 'उक्तार्थानामप्रयोगः' इस न्याय के इवादि के प्रयोग करने की क्या आवश्यकता ।

यदि यह कहें कि आपके मत में 'विभाषा' इस अधिकार सूत्र को करना आवश्यक ( जरूरी ) होगा ! तो कोई आवश्यकता नहीं । क्योंकि राजसम्बन्धी से भिन्न यह पुरुष नहीं है, इस प्रकार की जब बोध कराने की इच्छा होगी तो समास का प्रयोग स्वतः सिद्ध हो जाता है, 'राजसम्बन्ध वाला पुरुष है' यह यदि बोध कराने की इच्छा

होगी तो विग्रह वाला प्रयोग स्वतः ही सिद्ध हो जाता है तो विभाषा-सूत्र की क्या आवश्यकता ?

यदि यह कहें कि 'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्' अर्थात् पङ्कजशब्द की तरह समास में विशिष्ट ही शक्ति है' इस हरिकारिका के अनुसार पङ्कजशब्द की प्रतिद्वन्द्विता अर्थात् समानता समास ही में शक्ति बताती है तो यह भी नहीं कह सकते क्योंकि जिनको अवयवशक्ति का ज्ञान नहीं है उनको भी तो बोध होता है।

शक्तिग्रह नहीं होने पर लक्षणा के द्वारा विशिष्टार्थ की प्रतीति भी नहीं होती है। इसलिए राजपदादि के शक्तिग्रह नहीं होने पर 'राजपुरुष' में भी बोध नहीं होने पाता।

यदि यह कहें कि 'चित्रगु' प्रयोग में लक्षणा का सम्भव है भी किन्तु अषष्ठ्यर्थं बहुव्रीहि में अर्थात् षष्ठ्यर्थं से भिन्न बहुव्रीहि जहाँ है जैसे 'प्राप्तमुदकं यत् स प्राप्तोदको ग्रामः' इस षष्ठ्यर्थं से भिन्न द्वितीयाद्यर्थं बहुव्रीहि में लक्षणा का कोई सम्भव नहीं क्योंकि 'समानाधिकरणनामार्थयोरभेदान्वयः' अर्थात् एक विभक्तिक नामार्थनामार्थं के अभेदान्वय होता है भिन्नविभक्तिक का नहीं इस व्युत्पत्तिका भंग हो जायगा।

तो यह भी कहना ठीक नहीं क्योंकि 'प्राप्तोदकः' में तो उदक ही पद में लक्षणा है न कि प्राप्तपद में पूर्वपद प्राप्त तो यौगिक है जब वहाँ धातु प्रत्यय तथा उसका अर्थ का ज्ञान होगा तब लक्षणा होगी इसलिए विलम्ब है तो प्राप्तपद में लक्षणा नहीं हो सकती। और प्रत्यय निकटवर्ती पदार्थगत स्वार्थ के बोधक होते हैं' यह भी व्युत्पत्ति है इस व्युत्पत्ति के अनुरोध से भी प्राप्तपद में लक्षणा नहीं हो सकती।

केवल विशेषता यही है कि—प्रत्येक वर्णों में बोधक होने पर भी घटादिपद में अतिरिक्त शक्ति की कल्पना विशिष्ट में की जाती है। और यहाँ अत्यन्तसामीप्य से जिसमें प्रत्यय के साथ अन्वय सुलभ हो जाय इसलिए उत्तरपद ही में लक्षणा की जाती है। घटादि पदों में भी अन्तिम वर्ण ही अर्थ का वाचक है ऐसा अपने को मीमांसक मानने वालों ने भी माना है। यह व्यपेक्षावादियों का मत है।

अत्रोच्यते—समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यात्। अत एवार्थवत्सूत्रे भाष्ये 'अर्थवदिति किम्, अर्थवतां समुदायोऽनर्थकः—दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्' इति प्रत्युदाहृतम्। एवं च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात्प्रातिपदिकत्वानापत्तेः। न च 'कृत्तद्धित' इति सूत्रे समासग्रहणात् तत्संज्ञेति वाच्यम्। तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथासिद्धिं विना नियमायोगात्। अत एव राज्ञः

पुरुषः देवदत्तः पचतीत्यादिवाक्यस्य [1]मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकत्वम् ।

किञ्च समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुत्पत्तौ, 'अपदं न प्रयुञ्जीत' इति भाष्यात्समस्तप्रयोगविलयापत्तेः ॥

इत्थं व्यपेक्षावादिनां मतं प्रदर्श्य स्वसिद्धान्तवर्णनपुरस्सरं खण्डयितुमुपक्रमते— अत्रोच्यत इति ।

दशदाडिमादिवदिति । यथा दशदाडिमादिसमुदायस्य वृत्तिमत्त्वरूपार्थवत्त्वाभावान्न प्रातिपदिकत्वम्, न तथा राजन् ङस् पुरुष सु इत्यादेरपि ।

सिद्धि विनेति । "सिद्धे सति आरभ्यमाणो विधिर्नियमाय कल्पते" इति न्यायात् नियमार्थत्वमपि अर्थवत्त्वे सत्येव सम्भवति, तत्राप्यर्थवत्पदस्यानुवृत्त्यार्थवत्कृदन्तादेरेव । तेनापि संज्ञाविधानात् अर्थवद्ग्रहणस्य इहार्थताया एव भाष्ये सिद्धान्तितत्वात् । पूर्वसूत्रे तु अधातुरित्यादिबलेनैवार्थवत्त्वलाभादिति तात्पर्यम् ।

ननु राज्ञः पुरुष इत्यादिवाक्यस्य नैयायिकमतेऽर्थवत्त्वाभावादेव प्रातिपदिकत्वं न स्यादित्यत आह—मूलकेनोपदंशमिति । नैयायिकमते उत्तरसूत्रेऽर्थवत्पदासम्बन्धात् कृद्ग्रहणपरिभाषया कृदन्ततदादित्वादत्रातिप्रसङ्गो दुर्वार एवेति तत्त्वम् ।

किञ्च बहुपटव इत्यस्य तद्धितान्तत्वाभावात्, परमगार्ग्यायण इत्यस्य तद्धितान्ततदादित्वाभावात् कुमार्याः राज्ञा श्रितेन च युगपद् वृत्तौ राजकुमारीश्रित इत्यस्य समासत्वाभावाच्च उत्तरसूत्राप्रवृत्त्या अर्थवत्त्वाभावेन च पूर्वसूत्रस्याप्यप्रवृत्या प्रातिपदिकत्वानापत्तौ स्वादिविधानं न स्यादित्यवधेयम् ।

दूषणान्तरं दर्शयति—किञ्चेति ।

हिन्दी—इस प्रकार व्यपेक्षावादियों का मत खण्डन करके अपना सिद्धान्त दिखाते हैं कि—यदि समास में शक्ति नहीं मानेंगे तो विशिष्ट राजपुरुषादि अर्थवान् होगा नहीं तो उसकी प्रातिपदिक संज्ञा नहीं होगी ।

---

१. ननु राज्ञः पुरुष इत्यादिवाक्यस्य नैयायिकमते अर्थवत्त्वाभावादेव प्रातिपदिकत्वं न स्यादत आह—मूलकेनोपदेशमिति । नैयायिकमते उत्तरसूत्रे अर्थवत्पदासंबन्धात् कृद्ग्रहणपरिभाषया कृदन्ततदादित्वादत्रातिप्रसङ्गो दुर्वार एवेति भावः । किं च बहुपटव इत्यस्य तद्धितान्तत्वाभावात्, परमगार्ग्यायण इत्यस्य तद्धितान्ततदादित्वाभावात्, कुमार्याः राज्ञा श्रितेन च युगपद् वृत्तौ राजकुमारीश्रित इत्यस्य समासत्वाभावाच्च उत्तरसूत्राप्राप्त्यः अर्थवत्त्वाभावेन च पूर्वसूत्रस्याप्यप्राप्त्या प्रातिपदिकत्वानापत्तौ स्वादिविधानानापत्तिरिति दिक् ।

इसलिये अर्थवत्सूत्र के भाष्य में कहा कि अर्थवत् ग्रहण यदि नहीं करेंगे तो अर्थवान् का समुदाय अनर्थक होता है। जैसे—"दश दाडिमानि, षट् अपूपाः, कुण्डम्, अजाजिनम्" अर्थात् दश अनार, छः पुए, कुण्ड, मेष का चर्म" ये सब अनर्थक हैं यहाँ भी प्रातिपादिक संज्ञा समुदाय को हो जायगी यह प्रत्युदाहरण दिया।

ऐसी स्थिति में राज और पुरुषपद की तुम्हारे मत में प्रत्येक में अर्थवत्व रहने पर भी दश दाडिमादि की तरह अनर्थक होने के कारण प्रातिपदिक संज्ञा नहीं होने पायगी।

यदि यह कहें कि "कृत्तद्धितसमासाश्च" इस सूत्र में समासग्रहणसामर्थ्य से प्रातिपदिक संज्ञा हो जायगी। तो यह नहीं कह सकते क्योंकि समासग्रहण नियमार्थ है ऐसा भाष्यकार ने कहा है। नहीं तो "सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते" इस न्याय के अनुसार अर्थवत्त्व के बिना नियमार्थं भी नहीं होगा। इसलिये "राज्ञः पुरुषः देवदत्तः पचति" इत्यादि वाक्य के तथा "मूलकेनोपदेशम्" इत्यादि के प्रातिपदिक संज्ञा नहीं होगी।

दूसरा दोष यह है कि —समास में यदि शक्ति नहीं मानेंगे तो शक्यसम्बन्धरूप लक्षणों का भी असम्भव होने से लाक्षणिक अर्थवत्त्व का भी सम्भव नहीं होगा तो सभी तौर पर प्रातिपदिक संज्ञा का अभाव हो हो जायगा और स्वादिविभक्ति की उत्पत्ति नहीं होने पर "अपदं न प्रयुञ्जीत" इस भाष्य के अनुसार संपूर्ण प्रयोगों की प्रलयापत्ति हो जायगी।

अथ तिप्तस्झीत्यतः तीत्यारभ्य ङ्योस्सुबिति पकारेण तिप्प्रत्याहारो भाष्यसिद्धः, तत्पर्युदासेन 'अतिप्प्रातिपदिकम्' इत्येव सूत्र्यताम्, ततः 'समासाश्च' इति सूत्रं नियमार्थमस्तु किं सूत्रद्वयेनेति। सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादिति 'समासाश्च' इत्यस्य नियमार्थत्वं सुलभमिति चेत्, सत्यम्। प्रत्येकं वर्णेषु संज्ञावारणाय 'अर्थवत्' इत्यस्यावश्यकत्वेन समासेऽव्याप्तिस्तदवस्थैव। तथा च प्रातिपदिकसंज्ञारूपकार्यमेवार्थवत्त्वमनुमापयति समासः अर्थवान्, प्रातिपदिकत्वात्। यन्नार्थवत्तन्न प्रातिपदिकम्, अभेदविवक्षापक्षे-'भू सत्तायाम्' इत्यादनुकरणवदिति॥

किं सूत्रद्वयेनेति। अत्रायं निष्कर्षः—"अतिप् प्रातिपदिकम्" "समासाश्च" इति सूत्रद्वयं कार्य्यम्। ततश्च सर्वत्र प्रातिपदिकसंज्ञासिद्धौ समासग्रहणस्य नियमार्थत्वमपि सेत्स्यतीति सूत्रद्वयं न कार्यम् इति।

प्रत्येकं वर्णेषु संज्ञावारणाय "अर्थवत्" इत्यस्यावश्यकत्वम्। अन्यथा तत्ग्रहणाभावे "धनं वनम्" इत्यादौ धकार-मकारयोरपि नकारस्यापि च तिङन्तभिन्नत्वात् प्रातिपदिकसंज्ञापत्तौ जस्त्वनलोपाद्यापत्तेः सम्भवः स्यात्। कृते तु तस्मिन् अर्थवत्त्वाभावान्न प्रातिपदिकसंज्ञेति बोध्यम्।

अनुमाने-पक्ष-साध्य-हेतु-व्याप्ति-दृष्टान्तानामावश्यकत्वमिति-समास-पक्षः, अर्थवत्त्वम्-साध्यम्, प्रातिपदिकत्वात् इति हेतुः भू सत्तायाम् इति दृष्टान्तः। इदन्त्वनुमानं व्यतिरेकिहेतुकम्। अन्वयमुखेनानुमानस्य तु नैव सम्भवः। अनर्थकनिपातेष्वपि प्रातिपदिकसंज्ञादर्शनात्। नन्वेवं निपातानां प्रातिपदिकसंज्ञाया अभाव इति चेन्न। "निपातस्यानर्थकस्य" इति वार्तिकात् "कृत्तद्धितसमासाश्च" इति सूत्रस्थचकारात् अनुक्तसमुच्चायकस्य ग्रहणात्।

वस्तुतस्तु व्यतिरेकमुखेनापि पूर्वोक्तमनुमानम् असङ्गतमेव। यत्र यत्रार्थवत्त्वाभावस्तत्र तत्र प्रातिपदिकसंज्ञाया अभाव इति अनर्थकनिपातेषु व्यतिरेकव्यभिचारादित्यवगन्तव्यम्।

हिन्दी—अब यह आशङ्का होती है कि "तिप्तस्झि" इस सूत्र वाला ति से लेकर "स्वौजस्मौट्" इस सूत्र वाला सुप् का प्रकार तक तिप् प्रत्याहार भाष्यसम्मत है क्यों कि अष्टाध्यायी क्रम से पहले "तिप्तस्झि" है बाद में "स्वौजस्मौट्" है तो तिप् पर्युदास बल से "अतिप् प्रातिपदिकम्" यही सूत्र करने में लाघव है पृथक् एक अलग "समासाश्च" यह सूत्र नियमार्थ होगा दो सूत्र करने की क्या आवश्यकता।

उत्तर यह है कि—प्रत्येक वर्णों में प्रातिपदिक संज्ञा न हो जाय इसलिए "अर्थवत्" सूत्र करना आवश्यक है तो समास में वह अव्याप्ति दोष तदवस्थ ही है इसलिए दोनों सूत्र करना आवश्यक है।

एतावता प्रातिपदिक संज्ञारूप कार्य में यह अनुमान होता है कि—समास अर्थवान् है प्रातिपदिक होने के कारण, जो अर्थवान् नहीं होता है वह प्रातिपदिक नहीं होता, अभेदविवक्षा पक्ष में भू सत्तायाम् इत्यादि अनुकरण की तरह।

यत्तु 'पदार्थः पदार्थेन' इति, 'वृत्तस्य विशेषणयोगो न' इति वचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति; तत्तु समासे एकार्थीभावे स्वीकृतेऽवयवानां निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरम्, अस्माकं, युष्माकं तु अपूर्ववाचनिकमिति गौरवमित्यग्रे वक्ष्यते॥

यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न। उपकुम्भम् अर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् विशिष्टस्यैवार्थवत्त्वाच्च न दोषः।

किं च राजपुरुषादौ राजपदादेः सम्बन्धिनि सम्बन्धे वा लक्षणा। नाद्यः राज्ञः पुरुष इतिविवरणविरोधात्। वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्। नान्त्यः। राजसम्बन्धरूपपुरुष इत्यन्वयप्रसङ्गात्।

व्यपेक्षावादिनां पक्षसमर्थकस्य "पदार्थः पदार्थेन" वृत्तस्येति वचनद्वयस्य खण्डनं कर्तुमारभते—यत्त्विति । एकार्थीभाव इति ।

एकार्थीभावत्वञ्च—स्वघटितत्व—स्वप्रयोज्यशक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविषयतानिरूपितशक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणविषयताप्रयोजकपदघटितत्व—स्वप्रयोज्योपस्थितीयविषयत्वानिरूपितविषयताप्रयोजकपदाघटितत्वैतत्त्रितयसम्बन्धेन पदविशिष्टत्वम् ।

एकपदस्य सर्व इत्यस्यैकार्थीभाववारणाय प्रथमसम्बन्धनिवेशः । वाक्यस्यैकार्थीभाववारणाय द्वितीयसम्बन्धनिवेशः । उदासीनपदघटितसमुदायस्य "राजपुरुषः घटः" इत्याकारकस्यैकार्थीभावत्ववारणाय तृतीयसम्बन्धनिवेशो बोध्यः ।

व्यपेक्षावादिसम्मतां "प्रत्ययानां सन्निहित" इति व्युत्पत्तिं खण्डयति—यत्त्विति । उपकुम्भमिति । कुम्भस्य समीपमुपकुम्भम्" इति विग्रहे "अव्ययं विभक्ति" इति सूत्रेण सामीप्येऽर्थेऽव्ययीभावसमासेन द्वितीयार्थकर्मतायाः समीपेऽन्वयात्, उक्तव्युत्पत्तेर्व्यभिचार इति भावः ।

न दोष इति । स्वनिष्टविधेयतानिरूपितोद्देश्यतापर्याप्ताधिकरणत्वस्यैव प्रकृतित्वे तस्य समुदाय एव सम्भवादिति तात्पर्यम् ।

राजपुरुष इत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणायां राजसम्बन्धवदभिन्नः पुरुष इति बोधसम्भवे विशिष्टे शक्तिकल्पनं नोचितमिति शंकां समाधत्ते—किञ्चेति ।

हिन्दी—व्यपेक्षावादियों ने जो यह कह कर अपने पक्ष का समर्थन किया है कि पदार्थः पदार्थेनान्वेति" "वृत्तस्य विशेषणयोगो नः' इन दो वचनों से राजपुरुष का एकदेश राजपदार्थ के ऋद्धपदार्थ में अन्वय नहीं होता है, वह तो समास में एकार्थीभाव मान लेने पर अवयव निरर्थक है इसलिए विशेषण में उनका अन्वय होना असम्भव है एतत्फलितार्थपरक हमारे मत में है ।

आपके मत में तो अपूर्ववाचनिक दो वचन मानने में गौरव है, यह आगे भी कहा जायगा ।

व्यपेक्षावादियों ने जो "प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिः" इस व्युत्पत्ति को मानकर अपना मत समर्थन किया है, वह भी ठीक नहीं क्योंकि 'उपकुम्भम् अर्धपिप्पली' इत्यादि स्थलों में पूर्वपदार्थ में विभक्त्यर्थ का अन्वय किया गया है इसलिए उस व्युत्पत्तिका व्यभिचार है ।

हमारे मत में तो प्रत्ययों के प्रकृत्यर्थान्वित स्वार्थ व्युत्पत्ति के द्वारा विशिष्ट से परे ही प्रत्ययों की उत्पत्ति होती है विशिष्ट ही प्रकृति है और विशिष्ट ही (अर्थात्) समुदाय ही अर्थवान् है इसलिये कोई दोष नहीं ।

दूसरी बात यह है कि आप राजपदादि के सम्बन्धी में लक्षणा मानते हैं या सम्बन्ध में ! सम्बन्धी में लक्षणा तो नहीं मान सकते हैं क्योंकि 'राज्ञः पुरुषः'

इस विवरण के विरुद्ध वह है। वृत्ति के समानार्थं वाक्य ही को विग्रह कहा जाता है। अन्यथा उससे शक्ति का निर्णय नहीं हो सकता- दूसरा सम्बन्ध में भी लक्षणा नहीं मान सकते क्योंकि 'राजसम्बन्धरूप: पुरुष:' ऐसा अन्वय होने लगेगा। अतः समास ही में शक्ति माननी चाहिये, पृथक् नहीं।

ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीते इति पाचक इत्यस्य पचतीति कथं विग्रहः। वृत्तिसमानार्थत्वाभावाभावादित्यत आह—

**आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम्।**

**गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः॥ इति।**

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत्, तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति। कृदन्ततद्धितान्तयोराश्रयप्राधान्यम्; आख्याते व्यापारस्येति बोध्यम्। ननु रथन्तरशब्दाद्रथिकस्यापि प्रत्ययः किन्न स्यादिति चेत्, मैवम्। 'रूढिर्योगार्थमपहरति' इति न्यायात्। ननु विशिष्टशक्तिस्वीकारे पङ्कजपदावयवार्थप्रतीतिर्माभूत्, समुदायशक्त्यैव कमलपदवत् पुष्पविशेषप्रत्ययः स्यादिति चेत्, न।

**जहत्स्वार्था तु तत्रैव यत्र रूढिविरोधिनी।**

इत्यभियुक्तोक्तेः अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात्।

वृत्तिविग्रहयोः समानार्थत्वाङ्गीकारकबोध दोषमाशंकते नन्वित्यादिना। प्रश्नकर्तुरयमाशय:—यद्विशेष्यकयत्प्रकारकबोधजनकत्वं तद्विशेष्यकतत्प्रकारकबोधजनकत्वं वृत्तेः इदमेव हि वृत्तिसमानार्थकत्वम्। वृत्तिविग्रहयोः समानार्थत्वाङ्गीकारे व्याकरणमधीते पचतीत्यादौ व्यापारविशेष्यकाश्रयत्वप्रकारकबोधस्य वैयाकरणसिद्धान्तात् पाचकः वैयाकरण इत्यादौ तद्वैपरीत्येन भासमानत्वात् वृत्तिसमानार्थकत्वाभावात् विग्रहवाक्यस्यैवासम्भवापत्तिरिति।

तदुत्तरमाह—आख्यातमिति। तद्धितकृतोः, यत् किञ्चित् उपदर्शकम् आख्यातम्, तत्र गुणप्रधानभावादौ विपर्ययः, दृष्ट इत्यन्वयः।

आख्यातमिति। तद्धितकृतोः तद्धितश्च कृत् च तद्धितकृतौ तयोः, यत् किञ्चित्, अर्थबोधकम्, अर्थप्रकाशकम् विवरणम् इत्यर्थः, आख्यातम्=तिङन्तम् तत्र=विवरणविव्रियमाणयोः, गुणप्रधानभावादौ—गुणः गौणः विशेषणम् प्रधानं विशेष्यम् तयोर्भावः विशेषणविशेष्यभावस्तदादौ—गुणप्रधानभावादौ, विपर्ययः व्यत्यासः अर्थात् कृदन्ततद्धितान्तयोराश्रयप्राधान्यम्; आख्याते व्यापारस्य इति विपर्ययः दृष्टः फलबलात् इत्यर्थः।

रथन्तरशब्दे रथिकस्य प्रतीतिं हृदि निधाय शंकते—नन्विति। प्रश्नकर्तुरयमाशयः—रथेन तरतीति विग्रहे 'संज्ञायां भृतृवृजि' इति सूत्रेण कर्तरि खच्विधानात् रथकरणकतरणकर्तृमात्रोपस्थितेरवयवशक्त्या रथिकस्यापि कथन्न बोधः? इति।

उत्तरमाह—'रूढिर्योगार्थमपहरति' इति । विशिष्टशक्तिस्वीकारे पुनर्दोषमाशङ्कते—नन्वित ।

हिन्दी—पुनः शंका यह होती है कि यदि वृत्ति और विग्रह दोनों का समान अर्थ है तो 'वैयाकरणः' का 'व्याकरणमधीते' पाचकः' का 'पचति' विग्रह क्यों करते हैं क्योंकि दोनों का समान अर्थ नहीं है इसलिए कहा है—'आख्यातं तद्धितकृतोः' । अर्थात् तद्धित प्रत्ययान्त और कृत्प्रत्ययान्त का जो कुछ अर्थ के बोध कराने वाला विवरण तिङन्त है वहाँ विवरण और जिसका विवरण किया जाता है उस विव्रियमाण के विशेष्यविशेषणभावका विपर्यय अर्थात् उलटपुलट देखा गया है । कृदन्त और तद्धितान्त में आश्रय की प्रधानता रहती है और तिङन्त में व्यापार की प्रधानता रहती है ।

अब पुनः शंका यह होती है कि—'रथेन तरति' अर्थात् रथ द्वारा जो चले इस विग्रह में अवयव शक्ति के द्वारा रथिक का बोध क्यों नहीं होता ।

उत्तर यह है कि—'रूढिर्योगार्थमपहरति' रूढियौगिक अर्थ को हटा देती है" इस न्याय के अनुसार रूढचर्थ जो साम है वह यौगिक रथिकार्थ को हटा देती है इसलिए रथिक का बोध नहीं होता हैं ।

यदि यह कहें कि जब विशिष्ट के शक्ति मानेंगे तो पंकज शब्द से अवयवार्थ की प्रतीति भले ही नहीं हो किन्तु समुदायशक्ति के द्वारा कमलपद की तरह पुष्प का बोध क्यों नहीं हो ? तो यह नहीं कह सकते । क्योंकि—

'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।' यह अभियुक्तों ने कहा है । सारांश यह है कि—जहत्स्वार्था वृत्ति वहीं होती है, जहाँ पर विरोध करने वाली रूढि होतीं है । यहाँ तो अवयवार्थ के साथ साथ समुदायार्थ कमल में शक्ति मानी गई है तो यहाँ अजहत्स्वार्था वृत्ति है । अर्थात् योगरूढ है ।

अत एव चतुर्विधः शब्दः यथाः-रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्—रथन्तरमित्यादौ । अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम् पङ्कजमित्यत्र । अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्—पाचिका, पाठकेत्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम् । मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरणमिति विवेकः । व्यपेक्षापक्षे दूषणं शक्तिसाधकम् । हरिरप्याह—

> **समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।**
> **बहूनां वृत्तिधर्माणां वचनैरेव साधने ।।**
> **स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः ।।** इति ।

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्ययः स्यात् । वृत्तिधर्माः—विशेषणलिङ्गसंख्याद्ययोगादयः, "सविशेषणानां वृत्तिर्न्न" इत्यादिवचनैरेव

साध्याः, इति तत्तद्वचनस्वीकार एव गौरवम् । मम तु एकार्थीभावस्वीकाराद-वयवार्थाभावाद्विशेषणाद्ययोगो न्यायसिद्धः; वचनं च न कर्तव्यं न्यायसिद्धं चेति लाघवम् ।

शब्दानां चतुर्विधत्वं प्रदर्शयति—अत एवेति । अतएव विशिष्टशक्तिस्वीकारे पङ्क-जादौ बहुविधवादादेव । स्वमते शब्दानां चातुर्विध्यं वर्णयति ग्रन्थकारः—चतुर्विधः शब्द इति ।

अयम्भावः—रूढ-योगरूढ-यौगिक-यौगिक रूढभेदात् शब्दानां किल चातुर्विध्यम् । तत्र शास्त्रकल्पितस्यावयवार्थस्य यत्राप्रतीतिस्तदर्थनिरूपितप्रकृतिप्रत्ययसमुदायमात्रे यस्य पदस्य बोधकत्वन्तत्पदे तदर्थनिरूपिता या शक्तिस्सा रूढिशक्तिः, यथा मणिः नूपुरम् । रथन्तरम् ।

यत्र च शास्त्रकल्पितेन अवयवार्थेन साकं विशेष्यभूतार्थनिरूपितस्य समुदायशक्त्या-ऽर्थबोधकत्वम् सा योगरूढिशक्तिः—यथा पंकजादिशब्दे । अत्रायं निष्कर्षः—अवयवार्थ-सहकृतो यः समुदायस्तन्निरूपितशक्तिज्ञानजन्योपस्थितिप्रयोजकत्वरूपयोगरूढत्वे पङ्के जातमिति विग्रहे जनेर्डप्रत्ययेन कर्तुर्बोधात् उपपदेन च पङ्कनिष्ठाधिकरणत्वरूपबोधात् ताभ्यां मिलिते पंकजनिकर्तरि पंकजशब्दस्य शक्तिस्वीकारेण तादृशविशिष्टार्थबोध-प्रयोजकत्वेन योगरूढत्वम् इति भावः ।

यत्र किल केवलमवयवशक्त्यैव अर्थबोधकत्वम् सा यौगिकशक्तिः—यथा पाचिकादौ पाचिकेति । अत्र पचिना पाकः, अकेन च कर्ता, टापा च स्त्रीत्वम्, तत्तदवयवशक्त्यैव प्रतीयते इति यौगिकत्वम् ।

यत्र किल अवयवशक्त्या समुदायशक्त्या चार्थस्य बोधकत्वम् सा यौगिकरूढशक्तिः—अश्वगन्धमण्डपादौ । तत्राश्वगन्धपदमौषधिविशेषबोधे रूढम् । अश्वगन्धवत्तया वाजि-शालाबोधे यौगिकम् ।

मण्डप इत्यत्र मण्डं पिबतीति विग्रहबलात् मण्डपशब्दोऽनुशासनबलात् अवयवशक्त्या मण्डपानकर्तृरूपार्थस्य बोधकः, कोषशक्तिबलाच्च गृहविशेषस्य बोधकश्च, तथापि 'रूढिर्योगार्थहारिणी' इति न्यायबलात् समुदायनिष्ठरूढिशक्त्या गृहविशेषस्यैव बोधक इति तात्पर्यम् ।

समासे खलु भिन्नैवेति । व्याख्यातेयं प्राक् कारिका । समास इति वृत्तिमात्रो-पलक्षणम् । 'समर्थः पदविधिः' इत्यत्र पदमुद्दिश्य यो विधीयते स समर्थः इति सूत्रार्थस्य भाष्याल्लाभात् ।

पदोद्देश्यकविधित्वञ्च पञ्चसु वृत्तिषु वर्तत एवेति बोध्यम् ।

पंकजशब्दवदिति। यथा पंकजशब्देऽवयवशक्त्यतिरिक्तशक्तिस्तद्वत्समासेऽपीति भावः।

शैवालादेरपि प्रत्यय इति। पंकाधिकरणकोत्पत्तिमत्त्वाविशेषात्तत्प्रत्ययः स्यादिति भावः ।

विशेषणलिङ्गेत्यादि। समासैकदेशार्थे लिङ्गस्य संख्याया विशेषणतयाऽन्वयो न भवतीत्यर्थः किञ्च दृशस्थले समासोऽप्यसम्भव एव। राजादिपदानां समासाघटकऋद्धादिपदार्थान्वितस्वार्थबोधकत्वेन सापेक्षतया 'सापेक्षमर्थवद्भवति' इत्यनेनातिदेशात्।

सापेक्षत्वञ्च—समासाघटकपदार्थान्वितस्वार्थबोधकत्वमेव। न च शरैः शातितपत्रः, चैत्रस्य दासभार्येत्यादावपि सामर्थ्याभावात्समासो न स्यात्। शातितदासपदार्थयोः समासाघटकशरचैत्रपदार्थान्वितत्वादिति चेन्न। समासाघटकपदार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकत्वमेव हि सापेक्षत्वम्। प्रकृते शरस्य करणतया शातनक्रियायां चैत्रस्य च स्वस्वामिभावेन दासपदार्थेऽन्वयेन सापेक्षत्वाप्रसङ्गादित्यलम्।

हिन्दी—इसलिये चार प्रकार के शब्द होते हैं। रूढ़, योगरूढ़, यौगिक, यौगिकरूढ़।

जो अवयवों के अर्थों की अपेक्षा नहीं कर केवल समुदाय शक्ति से अर्थ को बोध कराते हैं वे रूढ शब्द हैं—जैसे—मणि, नूपुर, रथन्तर, इन तीनों में अवयवार्थ की प्रतीति कुछ भी नहीं है किन्तु मणि, पायजेव, साम आदि अर्थ समुदायशक्ति के द्वारा निकलते हैं।

जो अवयवों के अर्थ के साथ-साथ समुदायशक्ति के द्वारा अर्थबोध कराते हैं वे योगरूढ शब्द हैं—जैसे पङ्कज शब्द, यहाँ पाँक में उत्पन्न इस अर्थ के साथ-साथ समुदायशक्ति के द्वारा कमल का बोध होता है।

जो केवल अवयवों की शक्ति द्वारा ही अर्थ बोध कराते हैं वे यौगिक शब्द हैं। जैसे—पाचिका, यहाँ पच् से पाक, अक् से कर्ता, टाप से स्त्रीत्व का बोध होता है।

जो शब्द अवयवशक्ति से तथा समुदायशक्ति से दोनों से अर्थबोध कराते हैं वे यौगिकरूढ़ शब्द हैं। जैसे—मण्डप शब्द यहाँ 'मण्डं पिबति' इस विग्रह में अनुशासन बल से मण्डपानकर्ता यह भी अर्थ हो सकता है, और कोशबल से गृह अर्थ भी हो सकता है किन्तु "रूढिर्योगार्थहारिणी" इस न्याय से गृह विशेष ही अर्थ का बोध होता है। इसलिये हरि ने भी कहा है कि—

पङ्कज शब्द की तरह समास में भिन्न ही शक्ति है बहुत से वृत्तियों के धर्मोंको अर्थात् विशेषण, लिङ्ग, संख्या आदि धर्मों को "सविशेषणाणां वृत्तिर्न" इन वचनों के द्वारा साधन करने पर बहुत गौरव हो जायगा इसलिये एकार्थीभाव का आश्रयण किया है।

तो आपके मत में "सविशेषणानां वृत्तिर्न" इत्यादि वचनों को मानना पड़ता है यही गौरव है।

मेरे मत में तो एकार्थीभाव मान लेने पर अवयवो के अर्थ रहते हैं नहीं इसलिये विशेषण आदि का योग न्यायसिद्ध है, और वचन भी नहीं मानना पड़ता है यह लाघव है।

व्यपेक्षायां दूषणान्तरमाह—

**चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।**
**कर्त्तव्यन्ते न्यायसिद्धं त्वस्माकन्तदिति स्थितिः ॥**

घटपटाविति द्वन्द्वे साहित्यद्योतकचकारनिषेधस्त्वया कर्तव्यः। आदिना घनश्याम इत्यादौ इवशब्दस्य। मम तु साहित्याद्यवच्छिन्ने शक्तिस्वीकारात् "उक्तार्थानामप्रयोग" इति न्यायात्तेषामप्रयोगः। बहुव्युत्पत्तिभञ्जनमिति-अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदक इत्यादौ पृथक्शक्ति वादिनां मते प्राप्तिकर्त्रभिन्न-मुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्मको ग्राम इत्यर्थालाभे प्राप्तेति क्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा, ततोऽपि 'समानविभक्तिकनामार्थयोरभेद एव संसर्ग' इति व्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्मेति स्यात्। उदकस्य कर्तृतया प्राप्तावन्वये तु नामार्थयोरभेदान्वय-व्युत्पत्तिभञ्जनं स्यादिति तात्पर्यम्। 'नामार्थप्रकारकशब्दबुद्धित्वावच्छिन्नं विभक्त्यर्थोपस्थितेः कारणत्वम्' इति व्युत्पत्तिभञ्जनं च। मम तु पृथक् शक्त्यनङ्गीकारात् विशिष्टस्यैव विशिष्टार्थवाचकत्वात् नामार्थद्वयाभावान्न क्वचिदनुपपत्तिरित्यलम्।

इति समासादिवृत्त्यर्थनिरूपणम्
इति श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृता
परमलघुमञ्जूषा समाप्ता।

---

व्यपेक्षायामन्यद्दूषणमपि दर्शयितुमुपक्रमते- व्यपेक्षायामिति। चकारादिनिषेध इति। अथ चकारादिनिषेधः, बहुव्युत्पत्तिभञ्जनम्, ते तव, कर्तव्यं (भवति) अस्माकं तत् न्यायसिद्धम्, इति, स्थितिः इत्यन्वयः।

चकारादिनिषेध इति। धवश्च खदिरश्चेतिविग्रहस्तु साहित्यद्योतनायैव हि क्रियते। भवन्मते धवखदिरयोः सहभावेन बोधो न स्यात्। आदिना निष्कौशाम्बिः, गोरथ इत्यादौ क्रान्त-युक्त-पूर्ण-मिश्र-संघात-विकारादीनामपि संग्रहः। अर्थात् साहित्याद्यर्थ-बोधायावश्यं चादिशब्दः प्रयोज्यो भवेत्। तेषामिवादीनां चादीनाञ्च प्रयोगे गौरवं स्यात्। तन्निषेधाय यद्युपायान्तरमन्विष्येत तदाप्यतीव गौरवं स्यादिति बोध्यम्।

मन्मते तु साहित्याद्यवच्छिन्न एव शक्तिस्वीकारेण "उक्तार्थानामप्रयोग" इति न्या-यात् इवादीनां प्रयोगो न कर्तव्यो भवति इति तात्पर्यम्।

साहित्याद्यवच्छिन्न इति साहित्यञ्च—विभिन्नरूपेणावस्थितानां पदानामेकधर्माव-च्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वय एव।

बहुव्युत्पत्तिभञ्जनमिति। नामार्थनिष्ठभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यता-संसर्गेण शाब्दबोधं तु विशेष्यतासंसर्गेण प्रत्ययजन्योपस्थितिः कारणमिति व्युत्पत्तिभङ्गः स्यादित्यवधेयम्।

अस्माकं मते तु—पृथक् शक्तेरस्वीकारात् विशिष्टस्यैव विशिष्टार्थवाचकत्वम् इति 'लोहितगङ्गम्' 'अरण्ये तिलका' इत्यादौ नित्यसमासत्वेन विग्रहवाक्यमेव न भवति ततोऽर्थप्रतीत्यभावेऽपि संज्ञात्वावगमे नैव किञ्चिद् बाधकमिति कृत्तद्धितसमासैकशेषसनाद्यन्तादिषुपञ्चसु वृत्तिषु विशिष्टैव शक्तिरिति सर्वं निरवद्यमद्येत्यवगन्तव्यमिति शम्।

पोषाणशर्म्मतनूज-श्रीमदलखदेवशर्मणा विदुषा।
तत्त्वप्रकाशिकायां विहितायां वृत्तिनिरूपणन्त्वजनि॥

---

हिन्दी—व्यपेक्षा में दूसरा दोष यह भी कहा है कि चकार आदि का निषेध भी करना पड़ेगा और बहुविध व्युत्पत्तियों का भंग भी हो जायगा। हमारे मत में युक्ति ही सब सिद्धप्राय है। सारांश यह है कि--घटश्च पटश्च इस द्वन्द्व में साहित्य-द्योतक चकार का निषेध आपको करना पड़ेगा और 'घनश्याम' में इव शब्द का भी निषेध करना पड़ेगा।

मेरे मत में तो साहित्यादि अर्थ विशिष्ट में शक्ति मान लेने पर 'उक्तार्थानामप्रयोगः' इस न्याय से इवादिका प्रयोग ही नहीं होने पाता। और बहुविधि व्युत्पत्तियों' का भंग भी इस प्रकार है कि—अषष्ठ्यर्थ बहुव्रीहि अर्थात् द्वितीयाद्यर्थ बहुव्रीहि 'प्राप्तोदक' इत्यादि स्थलों में पृथक् शक्ति मानने वालों के मत में "प्राप्तिकर्त्रभिन्नम् उदकम्' इत्यादि बोध के बाद तत्सम्बन्धी ग्राम में लक्षणा मानने पर भी "उदककर्तृकप्राप्तिकर्मको ग्रामः' यह अर्थ होने नहीं पाता तो कर्त्रर्थक प्राप्त में 'क्त' प्रत्यय को कर्मार्थ में लक्षणा माननी पड़ेगी तो भी 'समानविभक्तिकनामार्थयोरभेद एव संसर्गः' अर्थात् 'एकविभक्ति वाले नामार्थ नामार्थ के अभेद ही संसर्ग होता है' इस व्युत्पत्ति के द्वारा 'उदकाभिन्नं प्राप्तिकर्म' यह बोध होने लगेगा। और यदि उदकपदका कर्तृत या प्राप्ति में अन्वय मानेंगे तो नामार्थ नामार्थ के अभेदान्वय व्युत्पत्ति का भंग हो जायगा यह तात्पर्य है। अर्थात् 'नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यर्थोपस्थितेः कारणत्वम् नामार्थप्रकारकशाब्दबोध के प्रति विभक्त्यर्थ की उपस्थिति ही कारण है यह व्युत्पत्ति भग्न हो जायगी।

हमारे मत में तो पृथक् शक्ति नहीं है अर्थात् अवयव म शक्ति नहीं है किन्तु विशिष्ट ही में शक्ति है इसलिये विशिष्ट ( समुदाय ) ही विशिष्टार्थ का वाचक है तो दो नामार्थ है ही नहीं इस कारण कहीं भी अनुपपत्ति अर्थात् दोष नहीं होने पाता है। इस प्रकार समास ही में शक्ति है अवयव में नहीं यह सिद्धान्त वाद-विवाद द्वारा निश्चित हो गया।

इति श्रीमदलखदेवशर्मनिर्मितायां तत्त्वप्रकाशिकाव्याख्यायां
समासादिवृत्त्यर्थनिरूपणं समाप्तम्
समाप्तश्चाऽयं ग्रन्थः।

—:o:—